विश्वविद्यालय-स्वर्णजयन्ती-वर्षे प्रस्फुटिता

# श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा

कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषिता


लेखकः सम्पादकश्च

पण्डितश्रीवायुनन्दनपाण्डेयः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

विश्वविद्यालय-स्वर्णजयन्ती-वर्षे प्रस्फुटिता

सरस्वतीभवन-अध्ययनमाला

[६४]

# श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा

कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषिता

लेखकः सम्पादकश्च

पण्डितश्रीवायुनन्दनपाण्डेयः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

# श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा

सकलशास्त्रपारावारपारङ्गमेभ्यः प्रातःस्मरणीयेभ्यः पण्डितराजश्री**कालिप्रसादमिश्र**महोदयेभ्यो गुरुचरणेभ्योऽधीत्य साहित्यादिशास्त्राणि ग्रन्थकारेण पण्डित**श्रीवायुनन्दनपाण्डेयेन** श्रीमम्मटभट्टपण्डितराजजगन्नाथयोर्मतभेदं विमर्शितं ग्रन्थेऽस्मिन्। ग्रन्थोऽयं पञ्चस्वध्यायेषु विभक्तोऽस्ति।

तत्र प्रथमेऽध्याये काव्यस्वरूपविमर्शः कृतः। तत्र काव्यस्य प्रयोजनं कारणं स्वरूपं भेदाश्च विमृष्टाः। द्वितीयेऽध्याये वृत्तिविमर्शः कृतः। तत्राभिधादिवृत्तीनां स्वरूपमुभयोराचार्ययोर्मते उपपाद्य तत्तत्स्थलेषु मतभेदं विमृश्य विप्रतिपत्तीनां निराकरणं चोपपादितम्।

तृतीयेऽध्याये रसस्वरूपविमर्शक्रमे शान्तशृङ्गार-रौद्रवीरादिरसेषूभयोराचार्ययोर्मतभेदानां विमर्शः, भावध्वनौ मतभेदविमर्शः, गुणनिरूपणादिका विषयाश्च विवेचिताः सन्ति। चतुर्थेऽध्याये श्रीमम्मटपण्डितराजयोर्मते ध्वनिभेदाः, वर्णानां रसव्यञ्जकत्वे विप्रतिपत्तयो विमृष्टा विविधाभिर्युक्तिभिः साहित्यशास्त्रनिष्णातमतिभिः पाण्डेयवर्य्यैः।

अलङ्कारविमर्शात्मके पञ्चमेऽध्याये विविधालङ्काराणां विषये मम्मटभट्टपण्डितराजयोर्मतभेदं विमृश्य विविधानामाचार्याणां मतानि निरूपितानि। प्रतिपदं ग्रन्थग्रन्थिग्रहिलमिदं साहित्यशास्त्रं निरन्तरमधीयानैः **पण्डितश्रीवायुनन्दनपाण्डेयैः** विविधग्रन्थानालोड्य विविधशेमुषीजुषोस्तयोर्विदुषोर्मतमतीव शोभनमुपपादितम्।

*




ISBN : 81-7270-203-5

LIGHTS OF UNIVERSITY GOLDENJUBILEE YEAR

SARASVATĪBHAVANA-STUDIES
[Vol. 64]

# ŚRĪ MAMMAṬA-PAṆḌITARĀJA-SIDDHĀNTA-MĪMĀṀSĀ

*FOREWORD BY*

**PROF. ASHOK KUMAR KALIA**

VICE-CHANCELLOR

*WRITTEN & EDITED BY*

**PAṆḌITA ŚRĪ VĀYUNANDANA PĀṆḌEYA**

Ex-Reader, Sāhitya-Department
Sampurnanand Sanskrit University, Varanasi




VARANASI
2008

विश्वविद्यालय-स्वर्णजयन्ती-वर्षे प्रस्फुटिता

---

सरस्वतीभवन-अध्ययनमाला

[६४]

# श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा

***कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषिता***


*लेखकः सम्पादकश्च*

**पण्डितश्रीवायुनन्दनपाण्डेयः**

उपाचार्यचरः, साहित्यविभागस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणस्याम्






**वाराणस्याम्**

२०६४ तमे वैक्रमाब्दे    १९२९ तमे शकाब्दे    २००८ तमे खैस्ताब्दे

ISBN : 81-7270-203-5

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।



*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी - २२१ ००२



*प्राप्ति-स्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२



**प्रथमं संस्करणम्** - ५०० प्रतिरूपाणि
**मूल्यम्-** ३८०.०० रूप्यकाणि



*मुद्रकः —*
**आयुशी कम्प्यूटर्स**
इन्दिरानगर, वाराणसी, २२१००५

# प्रस्तावना

महतो हर्षप्रकर्षस्य विषयोऽयं यत् पण्डितराजकालीप्रसादमिश्राणा-मन्तेवासिभिः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागीयोपाचार्यचरैः **पण्डितश्रीवायुनन्दनपाण्डेय**वर्य्यैः सम्यग्विचारस्फुटिता **'श्रीमम्मटपण्डितराज-सिद्धान्तमीमांसा'** प्राकाश्यतां नीयते प्रकाशन-संस्थानेन।

काव्यशास्त्रपारङ्गतैः श्रीपाण्डेयवर्य्यैः काव्यप्रकाशरसगङ्गाधरयोः परस्परविरुद्धमतभेदानि सम्यगालोड्य तद्गताखिलविषयस्फोरणं पञ्चभिरध्यायैः कृतम्। जानन्त्येव साहित्यशास्त्राधीतिनः काव्यप्रकाशकर्त्ता श्रीमम्मटभट्टो वाग्देवतावतारो ध्वनिप्रस्थापनपरमाचार्यश्चोच्यते। काव्यलक्षणभेदनिमित्त-प्रयोजनशब्दवृत्तिगुणदोषध्वनिशब्दार्थोभयालङ्काराणां लक्षणोदहरणादिभिः परिलसितः साहित्यगगने प्रकाशतेतरां चन्द्रोपमस्य मम्मटभट्टस्य काव्यप्रकाशः। एवमेव पण्डितराजजगन्नाथस्य रसगङ्गाधरः साहित्यशास्त्रस्य सर्वाधिकः प्रौढो मर्मप्रकाशकः शास्त्रीयविवेचनापूर्णो ग्रन्थः। पण्डितराजेन स्वग्रन्थे नव्यन्यायशास्त्रानुसारिणी सूक्ष्मेक्षिका समाश्रिता। अतस्तेन कुवलयानन्दचित्रमीमांसादिकर्त्तुरप्पयदीक्षितस्य तु जातिगतं वैरमाधाय प्रतिपदं खण्डनमकारि पाण्डित्यपूर्ण-तर्केण।

अस्मिन्नेव क्रमे तेन क्वचित् मम्मटाचार्योऽपि दृष्टिपथमवतारितः। यथा पण्डितराजः स्वकीयं काव्यलक्षणं परिष्कृत्य मम्मटोक्तं काव्यलक्षणं खण्डशः खण्डयितुमुपक्रम्य 'शब्दार्थौ काव्यमिति' यदाहुर्मम्मटभट्टास्तत्र शब्दार्थयोरुभयोः काव्यशब्दाभिधेयत्वे मानाभावात्, 'काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः' इति व्यवहाराच्च विलक्षणः शब्द एव काव्यपदाभिधेयः प्रतिपादितः। एवमेव पण्डितराजेनातिगभीरया धिया काव्यप्रकाशो बहुशो निराकृतः। श्रीमम्मटभट्टपण्डितराजजगन्नाथयोरेतादृशा मतभेदाः सम्यगालोड्य विवेचिता निराकृताश्च ग्रन्थग्रन्थिभेदनपटुभिः पाण्डेयमहाशयैः।

यथा– चमत्कारिवर्णनानिपुणकविकर्म काव्यम्। कविकर्मता च शब्दार्थगुम्फने। शब्दस्य नित्यत्वात्, तत्र कविकर्मता न सिद्ध्यति, परं कविरर्थं निर्माति। यतो हि अर्थो द्विविधः, स्वतःसम्भवी प्रौढोक्तिसिद्धभेदात्। तत्र प्रौढोक्तिसिद्धोऽर्थः प्रतिभाप्रसूतत्वात् कविनिर्मित एव, लोके

तथाऽदृष्टत्वात्। स्वत:सम्भव्यपि लोके दृश्यते तथापि तं कवि: स्वप्रतिभया तत्रापूर्वतामुपपाद्यैव गृह्णाति। शब्दार्थयो: काव्यत्वेऽपि 'काव्यं श्रुतम्' इतिवत् 'काव्यं बुद्धम्' इत्यपि व्यवहार:। न हि काव्यशब्दं पठित्वाऽर्थज्ञानमन्तरा 'काव्यं बुद्धम्' इति कश्चिद् व्यवहरति। एवं पाण्डेयमहोदया व्यासज्यवृत्त्यैव शब्दार्थयो: काव्यत्वं साधयन्ति। तत्र तैरन्येषामप्याचार्याणां मतप्रदर्शनपूर्वकं तेषामुक्तिसारसङ्ग्रहभूतं प्रामाणिकमाधुनिकोत्प्रेक्षितं स्वप्रतिभोद्भूत-नवार्थकल्पनविभूषितं ग्रन्थरत्नमिदं समुपस्थापितं सहृदयानां मनोरञ्जनाय।

चिरन्तनकालाद् अविच्छिन्नगत्या प्रवहन्ती उत्तरोत्तरनूतनवैभवशालिनी निर्मलाजस्रा साहित्यमीमांसास्रोतस्विनी प्रवाहिता श्रीमम्मटपण्डितराजसिद्धान्त-मीमांसाग्रन्थप्रणयनेनाभिरक्षिता च पण्डितश्रीपाण्डेयमहाशयै:। मीमांसेयं पाण्डेयवर्य्याणां पाण्डित्यं महत्त्वञ्च नूनमेव ख्यापयति। एतदर्थं महामहिमशालिराष्ट्रपतिपुरस्कारभाजो विविधशास्त्रपारङ्गतान् पण्डितमूर्धन्यान् विद्वत्कुलभूषणान् साहित्योपवनसौरभान् **श्रीवायुनन्दनपाण्डेयान्** बहुभिर्धन्यवादवचांसि प्रयुज्यात्मानं मोदमावहामि।

तथा च प्रकाशनसंस्थाने सपरिकरं सर्वग्रन्थसम्पादनप्रकाशन-शोधनदक्षान् विद्वन्मूर्धन्यान् यशस्विनिदेशकान् **डॉ. हरिश्चन्द्रमणित्रिपाठिवर्य्यान्** बहुभिर्वर्द्धापनवचोभि: संविभूष्य अन्यांश्च प्रकाशनसंस्थानसदस्यान् **डॉ. ददन-उपाध्याय-डॉ. हरिवंशकुमारपाण्डेय**प्रभृतिभ्यो धन्यवादान् वितरन् मोदमानो भवामि। अन्ते साम्बं शिवं काशीविश्वनाथं प्रार्थये प्रणेतृसम्पादकप्रकाशकतत्सहायकादीनां दीर्घायुष्यादिसमृद्ध्यर्थं ग्रन्थस्य च प्रचार-प्रसारायेति प्रस्तावयति–

अशोककुमारकालिया

**(प्रो. अशोककुमारकालिया)**
कुलपति:
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**वाराणस्याम्**
मौनी अमावस्या
वि.सं. २०६४
(७.२.२००८ ई.)

# प्रकाशकीयम्

**'श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा'** इत्ययं ग्रन्थः **पण्डित-श्रीवायुनन्दनपाण्डेय**वर्य्यैः प्रणीतः सम्पादितश्च तदीयतत्त्वगर्भितभूमिकया विभूषितो माननीयकुलपतीनां **प्रो. अशोककुमारकालियामहाशयानां** प्रस्तावनया समुल्लसितः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनसंस्थानतः प्रकाश्यत इति महान्तमामोदमनुभवामि।

ग्रन्थोऽयमलङ्कारशास्त्राचार्याणामाभामहात् पण्डितराजजगन्नाथपर्यन्तानां काव्यमीमांसकानां साहित्यपाथोनिधिमन्थनोत्थः सारसङ्ग्रहभूतः स्वोपज्ञकल्पनया समृद्धः समुल्लसति। अस्मिन् ग्रन्थे सकलशास्त्रपारावारपारङ्गमेभ्यः **पण्डितराजश्रीकालीप्रसादमिश्र**महाशयेभ्यो साहित्यादिशास्त्राणि अधीत्य ग्रन्थकारैः पाण्डेयवर्य्यैः श्रीमम्मटभट्टपण्डितराजजगन्नाथयोर्ग्रन्थग्रन्थीनां प्रस्फोरणं कृतं स्वसूक्ष्मेक्षिकया शास्त्रदृष्ट्या।

जानन्त्येव साहित्यशास्त्रतत्त्वज्ञा यदयं काव्यप्रकाशकर्ता **मम्मटो** वाग्देवतावतारो ध्वनिप्रस्थापनपरमाचार्यश्चोच्यते। यतो हि यावन्मम्मटस्योदयो नाजायत तावत्कालं ध्वनिविरोधिनां शिरांस्युदनमन् ध्वनिविरोधिनो ग्रन्था विरचिताः, परमेकादशशतकस्य चरमभागे जातेन काश्मीरवास्तव्येन श्रीमम्मटेन ध्वनिविरोधिनस्तथाऽधिक्षिप्ता यथा पुनस्ते ध्वनिं विरोद्धुं साहसं नाकुर्वन्। एवमेव तैलङ्गदेशावयवगुण्डाभिधग्रामवासिनो गोदावरीमण्डलमण्डनायमानस्य श्रीजगन्नाथस्य **रसगङ्गाधर**नामा ग्रन्थः साहित्यशास्त्रस्य सर्वाधिकः प्रौढो मर्मप्रकाशकः शास्त्रीयविवेचनापूर्णोऽस्ति। एतस्य समये नव्यन्यायशास्त्रं प्रचुरप्रचारमजायत, अतोऽनेन स्वग्रन्थे तदनुसारिणी सूक्ष्मेक्षिका समाश्रिता। तत्र पूर्णपाण्डित्यगर्वेण तेन कुवलयानन्दचित्रमीमांसादिकर्तुरप्पयदीक्षितस्य प्रतिपदं खण्डनं कृतं जातिगतं वैमनस्यमाधाय। स्वयमेव मनोरमाकुचमर्दिन्यारम्भे लिखति–

**लक्ष्मीकान्तपदाम्भोजं प्रणम्य श्रेयसां पदम्।**
**पण्डितेन्द्रो जगन्नाथः स्यति गर्वं गुरुद्रुहाम्।।** इति।

अस्मिन् क्रमे मम्मटमप्यधिक्षिपन्निव प्रतिभाति पण्डितराजजगन्नाथः। तत्र पदार्थविवेचनकुशलेन पण्डितराजेन जगन्नाथेन अतिगभीरया धिया कृतां काव्यप्रकाशस्य बहुशो निराकृतिं दृष्ट्वा रसगङ्गाधरग्रन्थग्रन्थिभेदनपटुभिः पाण्डेयवर्य्यैः किमपि विलक्षणं विमृश्य नवनीतमुपस्थापितं साहित्यशास्त्राधीतिनां कृते।

पञ्चाध्यायात्मकस्य ग्रन्थस्यास्य प्रथमेऽध्याये काव्यस्वरूपं विमृष्टम्। तस्मिन्नेव क्रमे काव्यप्रयोजनं, काव्यहेतुः, काव्यभेदाश्च विमृष्टाः। द्वितीयेऽध्याये वृत्तिविमर्शः कृतः। तत्राभिधादिवृत्तीनां स्वरूपादिकमुभयोराचार्ययोर्मते उपपाद्य तत्तत्स्थलेषु मतभेदं विमृश्य तत्रोपस्थिता विप्रतिपत्तयो निराकृताः। तृतीयेऽध्याये रसस्वरूपविमर्शनक्रमे शान्तशृङ्गाररौद्रवीरादिरसेषूभयोराचार्ययोर्मतभेदान् भावध्वनौ समागतान् मतभेदान् च निराकृत्य गुणनिरूपणादिका विषयाश्च विवेचिताः पाण्डेयवर्य्यैः। चतुर्थेऽध्याये श्रीमम्मटपण्डितराजयोर्मते ध्वनिभेदाः, वर्णानां रसव्यञ्जकत्वे विप्रतिपत्तयो विमृष्टा विविधाभिर्युक्तिभिस्तैः पण्डितमूर्धन्यैः पाण्डेयमहाशयैः। पञ्चमेऽध्याये विविधालङ्काराणां विषये मम्मटभट्टपण्डितराजयोर्मतभेदं विमृश्य तत्र तैर्विविधानामालङ्कारिकाणां मतान्यपि निरूपितानि। प्रतिपदं ग्रन्थग्रन्थिग्रहिलमिदं साहित्यशास्त्रमालोडन-तत्परैरहर्निशं छात्रपीयूषपानतत्परैः पण्डितपाण्डेयैर्विविधग्रन्थानालोड्य विलक्षणशेमुषीजुषोस्तयोर्विदुषोर्मतमतीवमनोरममुपपादितम्। एतदर्थं महामहिमशालिराष्ट्रपतिपुरस्कारभाजां साहित्यसमुपासकानां पण्डितमूर्धन्यानां पण्डित**श्रीवायुनन्दनपाण्डेयानां** पादपद्मेषु सहस्रं प्रणामाञ्जलिं विनिवेद्यात्मानं धन्यं मन्ये। एतादृशगुणगणविशिष्टस्य ग्रन्थस्य प्रकाशनेन मोमुद्यते मे मनः। नूनं साहित्याधीतिनामनेन महानुपकारो भविष्यति।

अस्य ग्रन्थरत्नस्य गरिम्णा मण्डितां प्रस्तावनां विलिख्य ग्रन्थप्रकाशनकर्मणि सततं मां प्रेरयन्तः, येषामाशीर्वादेनैव ग्रन्थप्रकाशनमखः प्रचलति, एतादृशान् कुलपतिवर्यान् **प्रो. अशोककुमारकालियामहोदयान्** सश्रद्धं प्रणामाञ्जलिं विनिवेदयामि।

प्रकाशनमखे सहायभूतान् प्रकाशनसदस्यान् **डॉ. ददन-उपाध्याय-डॉ. हरिवंशकुमारपाण्डेय-सर्वश्रीकन्हईसिंहकुशवाहा-श्रीअशोककुमारशुक्ल-अतुलकुमारभाटिया-जितेन्द्रकुमारभाटियाप्रभृतिभ्यो** धन्यवादान् वर्धापनवचांसि च वितरन् मोदमानहृदयो भवामि।

एवं काव्यप्रकाशादिसारसङ्ग्रहभूतोऽयं ग्रन्थो विदुषां समक्षं प्रस्तूय मोदावहो विद्यार्थिनां महोपकारकरो भविष्यतीत्याशया सान्नपूर्णं विश्वनाथं प्रार्थये।

**वाराणस्याम्**
वसन्तपञ्चम्याम्,
वि.सं. २०६४
(११.०२.२००८ ई.)

**(डॉ. हरिश्चन्द्रमणित्रिपाठी)**
निदेशकः, प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# उपोद्घातः

देवाधीश्वरमौलिरत्नविसरप्रोद्भासिदिव्यद्युति-
श्रीमत्संस्कृतवाङ्मयोन्नतिलतारम्यालवालास्पदम् ।
श्रद्धाभक्तिसमेधमानहृदयैर्भक्तैस्सदैवार्चितं
वन्दे भूधरकन्यकापदयुगं सर्वेष्टसिद्धिप्रदम्।।१।।

जन्मप्रभृत्यथ यदीयकृपाकटाक्ष-
मासाद्य शास्त्रसमधीतिरभूत् सुपूर्णा।
वात्सल्यभावपरिभूषितचारुमूर्तिं
रामप्रतापगुरुवर्यमहं नमामि।।२।।

कालीप्रसादसमवाप्तसमस्तविद्य-
कालीप्रसादचरणाम्बुरुहप्रसादम् ।
मूर्ध्ना प्रणम्य ननु तत्करुणाकटाक्ष-
सम्प्राप्तशास्त्रविभवो विदधे निबन्धम्।।३।।

शब्दार्थौघपयोधिमन्थनमहारत्नप्रभाभास्वरः
सम्प्रोद्यत्प्रतिभाविलासविलसत्सत्तत्त्वदीप्त्युज्ज्वलः।
यो जग्रन्थ महीविमण्डनकरं काव्यप्रकाशं स्वयं
श्रीमान्मम्मटभट्ट एष जयताद् वाग्देवतारूपधृक्।।४।।

विश्वस्थाखिलपण्डितेन्द्रमुकुटीरत्नावलीसंस्फुरत्
सद्भाभास्वरपादपद्मयुगलप्रौढप्रभामण्डलः ।
तर्कन्यक्कृतसर्ववादिनिचयस्तोत्रावलीवन्दितः
सोऽयं पण्डितराज एष जगतां नाथायतां सर्वदा।।५।।

शब्दार्थोभयकाव्यरूपसरणी सम्प्रापिता पूर्णतां
शास्त्राभ्यासबलेन पूर्वजननाद् वा याऽपि सम्भाव्यते।
आस्वाद्यश्चरमो रसो हि परमं सिद्धान्तभूतं महत्
तत्त्वं मम्मटभट्टपण्डितजगन्नाथात्मकं राजताम्।।६।।

नानाद्रव्यकदम्बरूपमहितं तत्त्वार्थदेहं शिवं
सर्वत्र व्यवहारहेतुभरितां तां शब्दरूपां शिवाम्।
यत्तत्त्वं परिमेलनात्तदुभयोस्स्यादर्धनारीश्वरं
शब्दार्थाद्वयनामकं निरुपमं तत्तत्त्वमेवाश्रये।।७।।

**यो भग्नावरणात्तचिद्विलसितो यः स्वप्रकाशात्मको**
**ब्रह्मानन्दमुपेत्य यो विजयतेऽप्यास्वाद्यभावं गतः।**
**योऽयं स्वानुभवैकगम्य इति तैर्जोघुष्यते देशिकैः**
**काव्यात्मा रस एष मामककृतौ देदीप्यतां साम्प्रतम्।।८।।**

**शब्दार्थयामलमलङ्करणैकशोभं**
**भावात्मकं रुचिरवर्णनचित्तचारु ।**
**सर्वत्र सर्वरसिकैरुपगीयमानं**
**काव्यस्वरूपमिह रूपितमस्ति सूक्ष्मम्।।९।।**

**वन्दे साहित्यसिद्धान्तपरतत्त्वं रसात्मकम्।**
**ईश्वरं सर्वविद्यानां निगमागमनिधिं शिवम्।।१०।।**

**साहित्यम्–** यद्यपि 'सिद्धे शब्दार्थसम्बन्धे' (महाभाष्ये पस्पशाह्निके) इति वदता महाभाष्यकारेण 'औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः' इति निरूपयता जैमिनिना च शब्दार्थयोर्नित्यसम्बंन्धः समर्थितः। इत्थं शब्दार्थयोः सर्वत्र शास्त्रे लोके च सहभावः सिद्धः। शब्देन सहार्थः सहितः, अर्थेन सह शब्दः सहितः। सहितं च सहितं च सहिते सहितयोर्भावः साहित्यमिति सिद्धम्। परमिदं साहित्यं क्वचिदेकस्य विशेष्यरूपतया क्वचिद् विशेषणरूपतया वर्तते, वेदे व्याकरणे च शब्दस्य प्राधान्यमर्थस्य गौणत्वम्। पुराणेतिहासलोकादिष्वर्थस्य प्राधान्यं, शब्दस्य गौणत्वम्, परं काव्ये उभयोः प्राधान्यमिति। अतो वस्तुतः सहभावः शब्दार्थयोः काव्ये एव वर्तत इति काव्यमेव साहित्यम्। तदुक्तं राजशेखरेण– शब्दार्थयोः सहभावेन विद्या साहित्यविद्या। अत एवानन्दवर्धनेनोक्तम्–

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**

अत्र वाशब्दो विकल्पार्थको नास्ति, 'व्यङ्क्तः' इत्यत्र द्विवचनानुपपत्तेः। समुच्चयार्थको वर्तते, तथापि शब्दार्थाविति नोक्तम्, यतो हि क्वचित् शब्दशक्त्या क्वचिदर्थशक्त्या व्यङ्ग्यार्थस्याभिव्यक्तिर्भवति, स च व्यङ्ग्योऽर्थः प्रधानं भवति, चमत्कारजनकत्वात्। इत्थं शब्दार्थयोः व्यङ्ग्यार्थाभिव्यक्तौ यः सहभावः स एव साहित्यम्।

ध्वनिकारोऽपि चतुर्थोद्द्योते शब्दार्थयोः साहित्येन काव्यत्वे इत्याह। ध्वन्यालोके चतुर्थोद्योते वृत्तौ महिमभट्टश्च शब्दार्थयोरुभयोः प्राधान्यमाह। तदुक्तम्-

**शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता।**
**अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते।।** इति।

अत्राभिधापदेनार्थप्रतिपादनशक्तिर्विवक्षिता। अर्थश्च त्रिविधः– वाच्यो लक्ष्यो व्यङ्ग्यश्च। कयाऽपि वृत्त्याऽर्थप्रतिपादकेषु वाचकत्वव्यवहारः कुन्तकेन कृतः। तथा हि- 'वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि' (वक्रोक्तिजी. १/८) इति कारिकाव्याख्याने कुन्तकेनाशङ्कितम्।

ननु च द्योतकव्यञ्जकावपि शब्दौ सम्भवतः, ततो 'वाचकः शब्दः' इति प्रतिपादनेन सङ्ग्रहाभावादव्याप्तिः स्यादिति समाहितं च "अर्थप्रतीतिकारित्वसामान्याद् द्योतकव्यञ्जकावपि वाचकावेवोपचारादिति"। साहित्यम्–

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनानतिरिक्तत्वमनोहारिव्यवस्थितिः ।।**

(व.जी., १/१७)

सहितयोर्भावः साहित्यम्।

**वृत्त्यौचित्यमनोहारि रसानां परिपोषणम्।**
**स्पर्धया विद्यते यत्र यथास्वमुभयोरपि।।**
**सा काऽप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा।**
**पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते।।**

(तत्रैव, १.३५-३६)

इत्थं कुन्तकेन शब्दस्य शब्दान्तरेण सहभावः अर्थस्यार्थान्तरेण सहभावो वर्णितः परस्परस्पर्धया रसादिरूपाभिव्यक्तौ यः सहभावस्तदेव साहित्यम्।

वस्तुतः साहित्यं किम्– सर्वेषां शास्त्राणां वेदादीनां च प्रवेशद्वारभूतत्वाद् व्याकरणं सर्वशास्त्रोपकारकं शब्दविद्या पदविद्या पदसाधुत्वलक्षणं शास्त्रमुच्यते, तदुक्तं वात्स्यायनेन -

पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणमिति। न्यायशास्त्रं मीमांसाशास्त्रं च प्रमाणविद्या, वाक्यार्थविद्या चोच्यते, अर्थलक्षणाया वाचोऽन्वाख्यानमर्थलक्षणमिति। (अर्थो लक्ष्यते ज्ञायतेऽनेनेति अर्थलक्षणं मीमांसाशास्त्रं न्यायशास्त्रं च) मीमांसायामपि "औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः"। औत्पत्तिकशब्दश्च नित्यपर्याय इति तत्रैव व्याख्यातः। व्याकरणेऽपि

शब्दार्थयोर्नित्यसम्बन्ध उपपादितः, सिद्धे शब्दे अर्थे सम्बन्धे चेति महाभाष्यकृद्भिः, शब्दं श्रुत्वाऽर्थस्मरणाद् अर्थं दृष्ट्वा च शब्दस्मरणाद् गौरिति शब्दः गौरित्यर्थः गौरिति ज्ञानमिति शब्दार्थज्ञानानां तादात्म्यमप्युपपादितं तथापि 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रात् शब्दस्य स्वं रूपमेव संज्ञी बोधनाद् अर्थस्य विशेषणतया शब्दस्यैव प्राधान्यबोधनाद् व्याकरणं शब्दशास्त्रं शब्दविद्येत्युच्यते। मीमांसान्यायशास्त्रयोरर्थप्रतिपादकत्वादर्थस्य प्राधान्यादर्थशास्त्रत्वं सिद्ध्यति।

शब्दार्थयोरुभयोः शास्त्रं किमिति जिज्ञासायां साहित्यमेव दृष्टिपथमवतरति।

**'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः'।**

इति कपालिपदमेवात्र युक्तं न पिनाकिपदम्। एवं 'मरणशरणं बान्धवजनम्' इत्यत्र मरणशरणमिति प्रयोगोऽमङ्गलत्वान्न युक्तः, 'विधिरपि विपन्नाद्भुतविधिम्' इति पाठो युक्तः।

इत्थं शब्दार्थयोरुभयोः शासनकरणात् काव्ये च शब्दार्थयोरुभयोः प्राधान्यादुक्तं राजशेखरेण – शब्दार्थयोः सहभावेन विद्या साहित्यविद्येति काव्यमीमांसायाम्। अयमेव सहभावः शब्दार्थयोर्विवक्षितः। यथाऽर्धनारीश्वरो भगवान् नित्यसम्बद्धः, काव्ये तथैव शब्दार्थौ नित्यसम्बद्धौ स्तः। तदुक्तं कविकुलगुरुणा कालिदासेन – वागर्थाविव सम्पृक्ताविति। इदं दृश्यमानं जगदपि नामरूपात्मकम् (शब्दार्थमयम्)। अयमेव शब्दार्थयोः सहभावोऽत्र विवक्षितः।

## साहित्यस्य शास्त्रत्वम्

साहित्यं शास्त्रम्। 'शास्यतेऽनेनेति' विग्रहे करणे ष्ट्रन्प्रत्यये कृते शास्त्रशब्दस्य सिद्धिर्भवति। शास्त्रं च शासनकरणम्। साहित्यपदेन च शब्दार्थयोरुभयोः सहभावात् काव्यं गृह्यते। काव्ये एव द्वयोः सहभावः। इत्थं काव्यानुशासनं काव्यप्रयोजन-कारण-स्वरूप-भेद-दोषगुणालङ्कारात्मभूत-रसादिध्वनीनां रीति-वृत्त्यादीनां च प्रतिपादकतया लक्षणग्रन्था अपि काव्यशास्त्र-काव्यानुशासनपदेन उच्यन्ते। यथा व्याकरणादिशास्त्रं पदादि-व्युत्पत्त्यै अपेक्षितं तथैव साहित्यशास्त्रमपि काव्ये कौशलाधानायापेक्षितम्।

यथा शब्दानुशासनं साधुशब्दान् शास्ति, तथैव साहित्यशास्त्रमपि साधु काव्यमनुशास्ति।

अपि च प्रयोगनियममपि शास्ति यथा कर्णावतंसपदे 'अवतंस'- शब्द एव कर्णाभूषणस्य वाचक:, तथैव जघनकाञ्चीपदे काञ्चीशब्द एव जघनाभूषणस्य वाचक:, पुन: कर्ण-जघनशब्दयो: प्रयोगे पुनरुक्तिदोषो द्वयो: शब्दयो: समानरूपेण वर्तते, परं साहित्यमनुशास्ति कर्णारूढत्वबोधनाय कर्णावतंसपदं साधु न पुन: जघनकाञ्चीपदम्। 'स्थितेष्वेतत्समर्थनम्' इति सूत्रात्। अत: साहित्यं शास्त्रम्। इत्थं काव्यमपि शास्त्रम्, विधिनिषेधयो: प्रवृत्तिनिवृत्त्योरनुशासनात्। तथा हि रामायणम्— रामादिवत्प्रवर्त्तितव्यं न रावणादिवदिति कृत्याकृत्यप्रवृत्तिनिवृत्तिमनुशास्ति। अतोऽस्य शास्त्रत्वम्। उक्तं च—

**प्रवृत्तिं च निवृत्तिं च नित्येन कृतकेन वा।**
**पुंसां येनोपदिश्येत तस्माच्छास्त्रस्य शास्त्रता।।**

क्वचित् शंसनादपि शास्त्रं प्रतिपादितम्।

## अलङ्कारशास्त्रम्

इदमेव काव्यशास्त्रं रसशास्त्रमलङ्कारशास्त्रं चोच्यते, यतो हि काव्यं चमत्कारि भवति, चमत्कारश्च यत्र रसो व्यज्यते तत्र रसेनैव भवति, तत्र स्फुटस्यालङ्कारस्य नास्त्यपेक्षा, परं यत्र रसो न कवेर्विवक्षाविषय:, तत्र यदि अलङ्कार: स्फुटो नास्ति तदा किंकृतस्तत्र चमत्कार:, अतोऽलङ्कारा: शोभावर्धका: सन्ति, अतस्तेषां निरूपणं शास्त्रे कृतम्। अलङ्कारश्च त्रिविध: शब्दार्थोभयालङ्कारभेदात्, तेषां बाहुल्येन निरूपणाद् अलङ्कारशास्त्रत्वमित्यपि प्रसिद्धम्।

यत्रापि वामनेन सौन्दर्यमलङ्कार इति प्रतिपादितत्वात् सौन्दर्यशास्त्रमपि वक्तुं शक्यते परं सौन्दर्यं रसशास्त्रे एव समाहितम्। औचित्यं वक्रोक्तिश्चापि रसे एव रसमूलकतया समाहिते इति।

## काव्यशास्त्रस्य वेदाङ्गता

'षडङ्गो वेद:' इत्युक्तेस्तत्र छन्द: कल्प: ज्योतिषं निरुक्तं शिक्षा व्याकरणमिति षडङ्गानि, तत्र साहित्यशास्त्रस्य गणना नास्ति इति प्रश्नं समादधे राजशेखर: – उपकारकत्वात् सप्तममङ्गमलङ्कारशास्त्रमिति।

अपि च वेदे वेदस्य काव्यत्वमुक्तम् — ''पश्य देवस्य काव्यम्'' इति वेदस्य काव्यत्वात् काव्यमपि वेदः, तत्तु अङ्गी तस्य छन्दोव्याकरणादीनि शास्त्राणि अङ्गानि, तदुक्तं केनचिद् ऋषिणा–

**वेदवेद्ये परे पुंसि जाते दशरथात्मजे।**
**वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना।।**इति।

**मा निषाद प्रतिष्ठां त्वमगमः शास्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

इत्यादि छन्दस्वती वाक्। छन्दसः प्रयोगस्तु वेद एवेति, वेदावतार एव रामायणादि काव्यम्।

तत्र केचनाचार्याः मन्त्रो वै देवताऽभिधानात् शब्दराशिं वेदं स्वीकुर्वन्ति, अपरे च शब्दार्थौ वेद इति निगदन्ति। (महाभाष्यकाराः ''तदधीते तद्वेद'' इति सूत्रे)—

**वेदैश्च सर्वैरहमेव वेद्यः**। इति स्मृतेश्च।

**काव्यस्यात्मा–** काव्यस्य शब्दार्थौ शरीरमिति सर्वेऽङ्गीकुर्वन्ति। तदनुप्राणित आत्मा वस्तुतो रस एव। सर्वेषां शास्त्राणां धर्मार्थकामप्रतिपादन-पुरस्सरं परमपुरुषार्थस्य मोक्षस्य प्रतिपादन एव तात्पर्यम्, तच्चात्मसाक्षात्कारादेव भवति, तदा काव्यस्यात्मा कः? इति प्रश्ने श्रुतिरुपदिशति 'रसो वै सः', ''रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति'' इति।

स एवात्मा प्राणिनामन्तःकरणोपहितं हृद्देशे वर्तते, स च सच्चिदानन्दमयः। द्वैतिनां तु तदंशभूतः (सच्चिदानन्दभगवतोंऽशभूतः) जीवात्मास्ति। परं यथा अग्नेरंशभूतो विस्फुलिङ्गोऽपि अग्निरेव, क्षीरोदधेरेकोऽपि बिन्दुः क्षीर एव तथा आनन्दमयपरमात्मनोंऽशभूतो जीवात्माऽपि आनन्दमय एव। परमज्ञानावरणेनावृतः स आनन्दः सर्वदा न प्रकाशते, तस्याध्ययने साधनचतुष्टयसम्पन्नः प्रमाताऽधिकारी भवति, परं ये सुकुमारमतयः कठोरश्रमाद् बिभ्यति तेषां शिवाय मुनिरुपदिशति– ''विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति''। इमे विभावादयः काव्ये वर्णिता भवन्ति, ते काव्यार्थबोधाद् हृदयं प्रविष्टा भवन्ति, तत्र सम्भूयानन्दांशे यदज्ञानावरणं तदपसारयन्ति।

अपसृते तस्मिन् आत्मानन्दः प्रकाशते विभावादींश्च विषयीकरोति सर्वे विभावादयस्तदभिव्यक्तः स्थायी च सर्वे आनन्दमया भासन्ते।

इत्थमानन्दस्यानुभूतिर्भवति, अत एव फलमुक्तं काव्यस्य सद्यः परनिर्वृतय इति। अयमेव रस: काव्यस्यात्मा।

**काव्यशास्त्रीयसिद्धान्त:**

काव्यशास्त्रीयसिद्धान्तानामपि मूलं वेद एव वर्तते। वेदस्यापि काव्यत्वमुपपादितं वेदे 'पश्य देवस्य काव्यम्' इति श्रुते:। यद्यपि तत्र काव्यशब्दस्यार्थो वेदभाष्यकृद्भिरन्यथा वर्णितस्तथाऽपि तत्र स एवार्थो नापर इति वक्तुं न शक्यते, 'चत्वारि शृङ्गास्त्रय:' इति श्रुते: व्याख्यानं मीमांसकैर्यज्ञपरतया, वैयाकरणै: शब्दपरतया भरतेन च नाट्यपरतया राजशेखरेण काव्यपरतया व्याख्यानात्। अपि च वेदे काव्यस्य सर्वे सिद्धान्ता: प्रतिपादिता: सन्ति। काव्यात्मनो रसस्य मूलं श्रुतिरेव 'रसो वै स:' इति प्रतिपादनात्। अपि च वेदमन्त्रेषु अलङ्कारा बाहुल्येन प्रयुक्ता: सन्ति। एतन्निदर्शनम्—

**'उतत्वः पश्यन्न ददर्श वाचम्, उतत्वः शृण्वन् न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः'।।**

अत्रोपमालङ्कार:, शृङ्गाररसश्च स्फुटं प्रतीयते।

**'त्रिधा बद्धो वृषभो रोरवीति'** इत्यत्र रूपकम्।

**'द्वा सुपर्णा सयुजा सखाया'** इत्यत्रातिशयोक्ति:।

**'सक्तुमिव तितउना पुनन्तो'** इति मन्त्रेऽप्युपमालङ्कार:, काव्ये दोषाभावश्च अपेक्षित इति निर्दिष्टो वर्तते।

**'यत्र नाणाः सम्पतन्ति कुमारा विशाखा इव'** इति मन्त्रे उपमाश्लेषयो: प्रयोग: सुमनसां मनो हरति।

इत्थमलङ्कारा: दोषाभावश्च काव्येऽपेक्षिता इति।

अलङ्काराणां प्रयोगबाहुल्यं समीक्ष्यैव राजशेखरेणोक्तम्– 'उपकारकत्वात् सप्तममङ्गम्' अलङ्कारा इति।

वेदव्याकरणेषु निरुक्तादिषु पाणिनीये व्याकरणे च 'उपमानानि सामान्यवचनै:, उपमितं व्याघ्रादिभि: सामान्यप्रयोगे' इत्यादिसूत्राद् उपमादीनामलङ्काराणां प्रकारनिर्देशात् पूर्णोपमानां च वाक्यगा-समासगा-तद्धितगादिभेदानां, लुप्तोपमानां च प्रायश: सर्वेषां भेदानां मूलत्वाद् अनुमीयते यत् काव्येषु वर्ततेऽलङ्काराणां निरतिशयं महत्त्वम्। यद्यपि रसा भरतेन महर्षिणा

पूर्वं निर्दिष्टाः, भरतादपि पूर्वतना आचार्या रसान् प्रतिपादितवन्त इति नाट्यशास्त्रतोऽवसीयते, तथापि कालिदासादनन्तरं काव्यकृद्भिः भारवि-माघादिभिर्येषु काव्येषु रसनिरूपणं नास्ति तत्र चमत्काराधानायालङ्काराणां निबन्धनं कृतम्। यतो द्वयं हि चमत्कारजनकं, रसो वाऽलङ्कारो वा। यत्र रसोऽस्ति कवि-विवक्षाविषयस्तत्र स्फुटालङ्कारस्यापेक्षा नास्ति, रसादेव चमत्कारसिद्धेः परं यत्र नास्ति रसस्तत्र यदि अलङ्कारोऽपि न भवेत्तदा किंकृतश्चमत्कारः? यत्र रसोऽस्ति तत्रापि यद्यलङ्कारो भवेत् तदात्मन उपस्कारकत्वाद् युक्तमेव तदभिधानम्। नाट्यशास्त्रे भरतेनापि चत्वारोऽलङ्कारा दर्शिताः–

**'उपमा रूपकं चैव दीपकं यमकं तथा'।** (ना.शा. १६/४०)

भामहोऽपि काव्यालङ्कारे निगदति—

**''न कान्तमपि निर्भूषं विभाति वनिताननम्''** इति।

भामहो रसमहत्त्वं जानन्नपि रसनिरूपणमलङ्कारतया करोति–रसवदलङ्कार इति। एतत् कवीनामलङ्कारयोजने (काव्ये) प्रवृत्तिमभिलक्ष्यालङ्कारस्य महत्त्वं दर्शितं शास्त्रकारैः। दण्डी च-

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**

पुनश्च—

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः।।**

लोके अलङ्काराः संयोगसम्बन्धेन गुणाः समवायसम्बन्धेन भवन्ति। अलङ्काराः शरीरे धार्यन्ते, गुणाश्च शौर्यादय आत्मनि तिष्ठन्तीति गुणाऽलङ्कारयोर्भेदो युक्तः काव्ये पुनर्गुणा अलङ्काराश्च समवायेनैव भवन्तीति गुणालङ्कारयोर्भेदवर्णनं गड्डलिकाप्रवाहवद् वर्तते, न पुनः सुविचारिताभिधानमिति नास्ति गुणालङ्कारयोर्भेद इति भट्टोद्भटः।

तदनन्तरं वामनः— ''काव्यं ग्राह्यमलङ्कारात्'', ''सौन्दर्यमलङ्कारः'', ''स च दोषगुणाऽलङ्कारहानोपादानाभ्यां सम्पाद्यो भवति''।

इति सूत्रत्रयेण सौन्दर्यमलङ्कारः, स च पुनः गुणाऽलङ्काराभ्यां सम्पाद्यः। अर्थाद् अलङ्कारः (सौन्दर्यम्) अलङ्कारेण सम्पाद्य इति कोऽभिप्रायः? इति मनसि विचार्य वामनोऽलङ्कारशब्दस्यार्थद्वयमुक्तवान्। तत्र प्रथमोऽलङ्कारशब्दो भावे घञ्ि विधाय साधितोऽपरः करणव्युत्पत्त्या, तत्र भावे निष्पन्नस्य

''अलङ्कृतिरलङ्कारः'' इत्यस्य सौन्दर्यमर्थः। तत्सौन्दर्यं काव्ये दोषाभावेन गुणाऽलङ्कारयोरुपादानेनायाति, अलङ्क्रियतेऽनेनेति व्युत्पत्त्या निष्पन्नोऽलङ्कार-शब्दोऽनुप्रासोपमादीनां वाचकः।

इत्थं सिद्धं यदलङ्काराणामुपमादीनां निरूपणमाचार्यैः क्रियते तत् सौन्दर्याधानाय अर्थात् परिवर्धनाय। अत एवोक्तं भामहेन, न कान्तमपि निर्भूषं विभाति वनिताननम्। अर्थात् कान्तमपि सुन्दरमपि वनिताननं निर्भूषं न विभाति, अर्थाद् अलङ्काराः सौन्दर्यं नोत्पादयन्ति, यदि सौन्दर्यमस्ति तद्वर्धयन्ति, सौन्दर्योत्पादकास्तु गुणाः सन्ति। तदुक्तम्—

**'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः'**। इति।

(वामनः, का.ल.सू.वृ., ३/१-२)

रुद्रटो रसमहत्त्वं तु विपुलं गायति, यदुक्तवान्—

**'एते रसा रसवतो रमयन्ति पुंसः सम्यग् विभज्य रचिताश्चतुरेण चारु।**
**यस्मादिमाननधिगम्य न सर्वरम्यं काव्यं विधातुमलमत्र तदाद्रियेत।।'**

(रुद्रटः, काव्यालंङ्कारः, १५/२१)

परमयमलङ्कारसम्प्रदायस्यैवाचार्योऽस्ति। यतो हि सः काव्यस्य सारतत्त्वमलङ्कारमेव मनुते। यदुक्तवान्—

**'सारं समाहितमनाः परमाददानः कुर्वीत काव्यमविनाशियशोऽधिगन्तुम्।।'**

(का.सं., ११/३६)

जयदेवोऽपि— द्वादशशताब्द्यां प्रादुर्भूतो यद्यपि व्यञ्जनावृत्तिं रसं च सम्यग् विवृणोति, तथाऽपि तं विद्वांसोऽलङ्कारसम्प्रदायस्याचार्यं मन्वते। यतो हि चन्द्रालोके स व्याहृतवान्—

**'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती'**।।इति।।

एषु वामनाचार्यः 'रीतिरात्मा काव्यस्य' रीतिश्च विशिष्टपदसङ्घटना, विशेषश्च गुणात्मा इति स्वकृतकाव्यालङ्कारसूत्रे प्रतिपादितवान्। 'पूर्वे नित्याः' इति सूत्रेण गुणा नित्यधर्मा इत्युक्तवान्, अयमपि सिद्धान्तो दण्डिना पूर्वं निर्दिष्टः, गुणानां वर्णनं तु नाट्यशास्त्रे एवोपलभ्यते। भरतो यान् दशगुणान् उक्तवान्, तानेव दण्डी नामग्राहमुक्तवान्। तथा हि—

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः।।** इति (का.द., १/४१)।

वामनोऽपि एतानेव शब्दगुणान् दशार्थगुणांश्च स्वीकृतवान्।

आनन्दवर्धनाचार्यश्च– काव्यात्मा ध्वनिरित्याह। अयं ध्वनिशब्दो वैयाकरणैरर्थप्रतिपादके शब्दे प्रयुक्तः 'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः' इत्युच्यते (म.भाष्ये पस्पशाह्निके) 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः' (म.भा.पस्पशा.)।

येनोच्चारितेन इत्यस्यार्थो येनोच्चारणाभिव्यक्तेन इति।

अत्र नैयायिका मन्यन्ते नित्यविभुगुणानां त्रिक्षणावस्थायित्वम्। नित्यो विभुश्चाकाशः। तद्गुणाः शब्दाः सन्ति ते त्रिक्षणावस्थायिनो भवन्ति। प्रथमक्षणे उत्पन्नाः, द्वितीयक्षणे स्थिताः, तृतीयक्षणे च विनष्टा भवन्ति। यदा द्वितीयो वर्ण उत्पद्यते तदा पूर्ववर्णा विनष्टा भवन्ति, इत्थमुत्पन्नविनष्टयोर्वर्णयोः समुदायो न भवति। तदार्थप्रतीतिः कथम्?

अयं भावः— 'घटः' इति शब्दाद् यो घटरूपोऽर्थः प्रतीयते, स घकारेण प्रतीयते टकारेण वा? यदि घकारेण प्रतीयते तदा टकारोच्चारणं व्यर्थम्, एवं यदि टकारेण प्रतीयते तदा घकारोच्चारणं व्यर्थम्। यदि द्वयोः समुदायेन प्रतीयते, तदा वर्णानां समुदायो भवितुं नार्हति। द्वितीयवर्णोच्चारणवेलायां प्रथमस्य विनाशात्।

अत्र नैयायिकाः पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्तिमवर्णा-नुभवेनार्थप्रतीतिं वाञ्छन्तीति।

परमत्र येन क्रमेण संस्कारो भवति तेनैव क्रमेण स्मृतिरपि भवतीति नानुभवसिद्धम्। तत्र विपर्ययोऽपि दृष्टिपथमवतरति।

यथा कश्चन कमपि पृच्छति त्वया प्रातरुत्थायेदानीं यावत् किं किं कृतम्? तदा स स्मरति, स्मरणं यदनुपदं कृतं तस्याशु भवति यद् विलम्बेन कृतं तस्य स्मृतिः पश्चाद् भवति, एवं यदि शब्दस्मरणेऽपि विपर्ययः स्यात् तदा ''साक्षरः'' राक्षसोऽपि भवितुमर्हति, सरो रसोऽपि स्यात् तदा तेनार्थबोधे महदनर्थं स्यात्, अतो वैयाकरणा हृद्देशे स्फोटाभिव्यक्तिं कल्पयन्ति। स स्फोटो नित्यवर्णोच्चारणेनाभिव्यक्तो भवति तस्मादर्थः प्रतीयत इति, अत एव स स्फोटपदेनोच्यते स्फुटत्यर्थोऽस्मादिति व्युत्पत्तेः। स्फोटव्यञ्जकश्च मुखादुच्चरितः

शब्दो ध्वनिशब्देनोच्यते। इत्थं व्यञ्जके (व्यङ्ग्यव्यञ्जकभावे ध्वनिशब्दस्य प्रयोगैस्तैः कृतः ततस्तन्मतानुयायिन आलङ्कारिका अपि व्यञ्जके शब्देऽर्थे (वाच्ये) व्यङ्ग्ये व्यञ्जनायां काव्ये च ध्वनिशब्दः प्रयुञ्जते। तदुक्तम्– वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः (ध्व.लो.,प्र.उ.)।

## साहित्यं व्याकरणस्य परिशिष्टम्

साहित्यशास्त्रं व्याकरणस्य परिशिष्टं खिलभागः। वस्तुतः साहित्यं व्याकरणस्य परिशिष्टम्। व्याकरणं पदसाधुत्वलक्षणं पदविद्यापदेन निर्दिष्टम्। कवयोऽपि वर्णयन्ति– "शब्दविद्येव नो भाति राजनीतिरपस्पशा" इति।

स्वयं महाभाष्यकारः "अथ शब्दानुशासनम्" इति शब्दशास्त्रं ब्रूते। श्रुतिश्चोपदिशति– एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः, सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति। तत्राशङ्कितम्– किं पुनः शब्दस्य ज्ञाने धर्म उत प्रयोगे? इत्याशङ्क्य समाहितम्— शास्त्रपूर्वके शब्दप्रयोगे धर्मः, तत्र शब्दानुशासनं व्याकरणं करोति प्रयोगनियमं साहित्यशास्त्रमनुशास्ति।

अत एव भामहेन स्वकृते काव्यालङ्कारे वामनेन च प्रायोगिके पञ्चमेऽधिकरणे प्रयोगनियमः कृतः। तथा हि— "नैकं पदं द्विः प्रयोज्यं प्रायेण" इति। एवं "न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः", "एवं सम्बन्धसम्बन्धेऽपि षष्ठी क्वचित्", "बलेरात्मनेपदमनित्यं ज्ञापकात्", "न पादादौ खल्वादयः"। 'अतिप्रयुक्तं देशभाषापदम्' इत्यादि। तथा द्विरेफशब्दो भ्रमरे प्रयुज्यते द्विकशब्दः काके न प्रयोज्य इत्यादि प्रयोगनियमानुशासनम्।

एवं भामहालङ्कारेऽपि प्रयोगनियमनिर्देशो द्रष्टव्योऽन्तिमेऽध्याये। अपि च शास्त्रपूर्वके शब्दप्रयोगे श्रुतिरपि प्रमाणं वर्तते। यथोक्तं भाष्ये योऽग्निष्टोमेन यजेत य उ एवं वेद इति।

एवं शास्त्रपूर्वकं शब्दज्ञानं व्याकरणेन भवति, प्रयोगनियमस्तु साहित्यशास्त्रेणेति।

अपि च व्याकरणं बोधयति चतुष्टयी शब्दानां प्रवृत्तिर्भवति। जाति-शब्दा गुणशब्दा क्रियाशब्दा यदृक्षाशब्दाश्च। व्याकरणे यदुक्तं तदेव साहित्यं विशदीकरोति। मीमांसाशास्त्रं तु सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तं बोधयति।

गौरनुबन्ध्य इत्यत्र मीमांसकैः व्यक्तिबोधो लक्षणया भवतीति प्रतिपादयन्ति, वैयाकरणाश्चाक्षेपाद् अर्थापत्तेः श्रुतार्थापत्तेर्वा विषयं स्वीकुर्वन्ति, गौणीलक्षणां गुणयोगात् स्वीकुर्वन्ति, परं साऽप्यप्रसिद्धा शक्तिः। मीमांसकाः गौणी लक्षणातो भिन्ना पृथग्वृत्तिरिति स्वीकुर्वन्ति। काव्यस्यात्मभूतो ध्वनिः व्याकरणाद् गृहीतः, व्यञ्जनावृत्तिश्च निपाता द्योतका इति सिद्धान्ताद्गृहीता, मीमांसका नैयायिकाश्च व्यञ्जनां नोपस्कुर्वन्ति। इत्थं न्यायमीमांसादिभ्यो भिन्नं सिद्धान्तं प्रतिपादयति व्याकरणं साहित्यं च, अतः साहित्यशास्त्रं व्याकरणशास्त्रस्य परिशिष्टो भागः, खिलभागः।

अपि च व्याकरणं प्रयुक्तानामन्वाख्यानं करोति। अतस्तत्र जिज्ञासा जायते कथं तर्हि ''आजघ्ने विषमविलोचनस्य वक्षः''। अन्यत्र च ''हापितः क्वासि हे सुभ्रूः। क्वचिद् दमयन्तीकमनीयतामदम्'' इति आशङ्कितं समाहितं च।

उपमाविवेचने तद्धितगा— समासगेत्यादयो भेदा व्याकरणमूलकाः सन्ति। लुप्तोपमाभेदास्तु प्रायशो व्याकरणमूलका एवेति दोषविवेचनं चापि व्याकरणशास्त्रमूलकमिति अनुपदमेव प्रतिपाद्यते।

**अथ दोषाः**

दोषनिरूपणे मूलं दुष्प्रयोग एव, तदुक्तं दण्डिना—

**गौर्गौः कामदुघा लोके सुप्रयुक्ता स्मृता बुधैः।**

**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुरेव शंसति।।** इति।

अतः ''सर्वथा पदमप्येकं न निगाद्यमवद्यवत्। इति (का.ल. प्रथमे)। **स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।।** (का.द.) इत्यादिना भामहदण्डिप्रभृतिभिः सर्वैरपि दोषस्य निन्दितत्वाद् दोषाभावः काव्येऽपेक्षितः।

भरतोऽपि दशकाव्यदोषानाह—

**''गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम्।**
**न्यायादपेतं विषयं विसन्धिः शब्दच्युतं वै दश काव्यदोषाः''।।**

भामहो दण्डी च दशविधानेव दोषानाहतुः। वामनश्च पद-पदार्थ-वाक्य-वाक्यार्थदोषानाह। परमानन्दवर्धनो द्विविधमेव दोषमाह-अव्युत्पत्तिकृतम्, अशक्तिकृतं च। तत्राव्युत्पत्तिकृतो दोषः कविशक्तितिरोहितो न लक्षितो भवति, अशक्तिकृतश्च झटिति प्रतीतिपथमायाति। धीमतामनौचित्यप्रतीत्योद्वेगो भवति। रसप्रतीतिश्च मन्थरा भवति, भग्ना वा भवति। अतोऽनौचित्यं परिहर्तव्यम्। तदुक्तम्—

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**

**प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।।** इति। (ध्व.लो.,तृ.उ.,पृ. ३३०)

महिमभट्टोऽपि व्यक्तिविवेके द्वितीयविमर्शे अमुमेव सिद्धान्तं प्रतिपादयति, द्विविधमनौचित्यम्– अर्थविषयं शब्दविषयं च। तत्रार्थविषयं साक्षाद्रसभङ्गकारणत्वादन्तरङ्गम्। तल्लक्षणं च— विभावानुभावव्यभिचारिणां समुचितविनियोगाभावः। अपरं शब्दविषयं बहिरङ्गं भवति, वाच्यद्वारा रसभङ्गहेतुत्वात्। स च बहुविधः।

(१) विधेयाविमर्शः, विधेयः प्रधानं भवति, तस्याविमर्शः, अर्थाद् उपसर्जनीकरणम्। (२) प्रक्रमभेदः–प्रक्रमस्यारम्भस्य भेदः, अर्थाद् अन्यथोपक्रमः, अन्यथा निर्वाहः। (३) क्रमभेदः, अर्थाद् व्युत्क्रमः। (४) पौनरुक्त्यम्, अर्थाद् उक्तस्य तेनैव क्रमेण पुनः कथनम्। (५) वाच्यावचनम्– वाच्यस्य अवश्यवक्तव्यस्यार्थस्य अवचनमनुक्तिः। एतेषां दोषाणां सामान्यलक्षणमुक्तम्— "विवक्षितरसादिप्रतीतिविघ्नविधायित्वं दोषत्वम्। तत्र विधेयाविमर्शादीनां निर्देशः स्वयमाचार्यैः पाणिन्यादिभिः कृत इति महिमभट्टैरुक्तः (व्य.वि.,द्वि.वि.)

तथा हि– दास्याः पुत्रः, वृषल्याः कामुक इत्यादौ षष्ठीसमासं विधायापि महर्षिपाणिनिः पुत्रे कामुके चाक्रोशादपकर्षप्रतिपत्तये "षष्ठ्या आक्रोशे" इति सूत्रं प्रणिनाय। तेन च षष्ठी— विभक्तेरलुक्कृतः। अन्यथा दासीपुत्र इत्यत्र समासत्वात् प्रातिपदिकत्वे विभक्तिलुकि तत्पुरुषे उत्तरपदार्थस्य प्राधान्यात् पुत्रेऽपकर्षप्रतीतिर्याऽपेक्षिता वर्तते सा न स्यात्। आक्रोशप्रतिपत्तये विभक्तिः कारणमित्यलुकमाह षष्ठ्याः। पुत्रे दासीजन्यत्वेनैवापकर्षः प्रतीयते, अत आक्रोशप्रतिपत्तये प्रधानं, तत्पुरुषसमासे पूर्वपदार्थस्याप्राधान्याद् गुणीभावाद् व्याहता स्यात्, अतो विधेयप्राधान्यप्रतिपादनाय समासं विधायापि विभक्तेरलुकमाह।

यतो हि समासः प्रायोऽर्थाद् द्वन्द्वं विहायान्ये समासा विशेषणविशेष्याभिधायिभिः पदैरुपरचिता भवन्ति, अन्यथा द्वयोर्बहूनां वा पदार्थानां मिथ एकार्थीभावरूपसामर्थ्याभावः प्रसक्तः स्यात्, तेन "समर्थः पदविधिः" इति नियमोल्लङ्घनात् समास एव न स्यात्। अयं विशेष्यविशेषणभावो द्विधा भवति— समानाधिकरणः, व्यधिकरणश्च। तत्र द्वयोः पदयोः समानाधिकरणे कर्मधारयसमासो भवति— "तत्पुरुषसमानाधिकरणः कर्मधारयः" इति नियमात्। तत्रैव संख्याया विशेषणभावे "संख्यापूर्वो द्विगुः" इति द्विगुर्भवति। नञर्थस्य प्रतिषेधस्य

विशेषणभावे नञ्समासो भवति। यत्र च द्वे पदे बहूनि वा पदानि अन्यपदार्थे विशेषणानि भवन्ति तत्र बहुव्रीहिर्भवति ''अनेकमन्यपदार्थे'' इति सूत्रात्।

व्यधिकरणे च कारकाणां सम्बन्धस्य च विशेषणत्वाद् बहुविधः। तत्र प्रथमा-द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमीभेदात् तत्पुरुषोऽनेकविधो भवति। तत्र यदाऽव्ययार्थस्य विशेष्यता स्यात्, तदाऽव्ययीभावसमासो मन्यतेऽधिहरि, उपकृष्णमित्यादौ।

द्वन्द्वे च सर्वेषां पदानां प्राधान्यं भवति। अत एव पूर्वपदार्थप्रधानोऽ-व्ययोभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थ प्राधान्ये बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्व इति प्रायोवादः।

(१) तदेवमेतेषां समासानां विशेषणविशेष्यभावगर्भित्वेन यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थस्य चमत्कारकारणं भवति, तदा तस्य प्राधान्येन विधेयतया समासेन गुणीभावो न विधेयः। कृते सति विधेयस्य प्राधान्यस्याविमर्शाद् विधेयाविमर्शो भवति।

(२) प्रक्रमभेददोषो महामहर्षिणा पतञ्जलिना सूचितः। तथा हि— ''स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च'' इति सूत्रेण स्वामीश्वरादीनां योगे षष्ठी सप्तमी च विभक्ती विधीयेते। अतो गवां स्वामी, गोषु स्वामीति प्रयोगौ उभौ सिद्ध्यतः। एवं गवां स्वामी, अश्वानां चेत्यपि साधु, गोषु स्वामी अश्वेषु चेत्यपि साधु। परं गवां स्वामी, अश्वेषु चेति प्रयोगं महाभाष्यकारोऽसाधुः इति ब्रूते। 'कृञ्चानुप्रयुज्यते लिटि' इति सूत्रे भाष्ये कथयति तद्यथा गोषु स्वामी अश्वेषु चेति। न भवति गोषु अश्वानां च स्वामी। अर्थाद् उपक्रमोपसंहारयोरेकयैव विभक्त्या निर्वाहो विधेयः प्रक्रमभङ्गो नाचरणीय इति।

(३) क्रमभेदोऽपि महाभाष्यकारेणैव निर्दिष्टः, स च अस्थान–प्रयोगलक्षणः। 'कृञ्चानुप्रयुज्यते लिटि' इति सूत्रे महाभाष्ये कृञोऽनुप्रयोगः किमर्थमित्याशङ्क्य ''विपर्यासनिवृत्त्यर्थमव्यवहितनिवृत्त्यर्थं च'' इति समादधे। अनुपदार्थपर्यालोचनया आमन्तस्याव्यवहितोत्तरं कृ-भू-अस्तीनामनुप्रयोगो विधेयः, व्यवहितप्रयोगो विपरीतप्रयोगश्च मा विधेयः।

अत 'ईहाञ्चक्रे' इति प्रयोगः साधुः। ''ईहां देवदत्तश्चक्रे'' इति व्यवहितप्रयोगोऽसाधुः। अतो विपर्यासोऽपि न विधेयः। अनुपयुक्तस्थानेऽपि प्रयोगो न विधेय इति चादीनां निपातानां प्रयोगनियमं दर्शयता सूचितस्तेन क्रमभङ्गो दोष इति।

(४) वार्तिककार: कात्यायनोऽपि वृत्तिलाघवं विमृशन् पुनरुक्तिदोषं सूचितवान्। ''कर्मधारय-मत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् स्यात्'' इति वार्तिकं व्याहरन् प्राह कर्मधारयमत्वर्थीयापेक्षया बहुव्रीहेर्विधानं कुर्वन् पुनरुक्तिपरिहारमाह। यथा पीताम्बरशब्द:। यदि पीतं च तदम्बरमित्यर्थो विवक्षितस्तदा कर्मधारयसमास: करणीय:। परं पीतस्याम्बरस्य धारयिता यदि विवक्षितस्तदा कर्मधारयकरणानन्तरं मत्वर्थीय: प्रत्ययोऽपि विधेय इति गौरवमापद्यते वृत्तिद्वयकरणात्। अतस्तदपेक्षया बहुव्रीहिसमासकरणे एकयैव वृत्त्यार्थप्रतीतौ लाघवम्। पीतमम्बरं यस्य स: पीताम्बर इति। बहुव्रीहौ तद्वान् अर्थ: प्रतीयते, मत्वर्थीयेनापीति पुनरुक्तिरपि भवतीति। न्यायोऽयं शब्दभेदेन साहित्यशास्त्रेऽपि निरूपित:। ''न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थ-प्रतिपत्तिकर:'' इति। वामनेन च न कर्मधारयो बहुव्रीहिप्रतिपत्तिकर इति। तेन विपर्ययो व्याख्यात इति सूत्राभ्यां व्याख्यात:।

वाच्यावचनदोषोऽपि ''ईषदसमाप्तौ कल्पब्देश्यदेशीयर:'' इति सूत्र-व्याख्याने भाष्यकारेण सूचित:। तथा हि ईषदसमाप्ति: कस्य विशेषणं प्रकृत्यर्थस्य प्रत्ययार्थस्य वा? यदि प्रकृत्यर्थस्य विशेषणं तदा ''गुडकल्पाद्राक्षा'' इति कल्पप्प्रत्ययान्तात् टाप् नोपपद्यते, गुडशब्दस्य पुल्लिङ्गत्वात् ''प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्ति:'' इत्याशङ्क्य समादधे (सिद्धं तु तत्सम्बन्ध उत्तरपदार्थे प्रत्ययवचनात्) इति।

अर्थात् प्रकृत्यर्थस्य विशेषणं चेद् गुडशब्द: ईषदसमाप्तिशब्दस्य फलितमर्थं सादृश्यं स्वार्थाभ्यन्तरं विधायाभेदसम्बन्धेन द्राक्षायामन्वेति तदा गुडाभिन्ना द्राक्षा इत्यर्थ: सम्पद्येत तदा गुडशब्दात् टाप् नोपपद्यते तस्य पुल्लिङ्गे वर्तमानत्वात्। तथाऽभेदसम्बन्धेनान्वयाद् रूपकं स्यात् नोपमा। परं प्रत्ययार्थविशेषणेन गुडसदृशा द्राक्षा इत्यर्थे द्राक्षाया: प्राधान्यादुपमात्र सिद्ध्यति टाबपि भवति, अतो गुडकल्पा द्राक्षा इति निष्पद्यते। अत्र भाष्यकार उपमां स्वीकृत्य वाच्यावचनरूपं दोषं परिहृतवान्। अन्यथा रूपकाश्रयणेन अवाच्यस्य वचनं स्यादिति। इत्थं सर्वे दोषा: पाणिनि-कात्यायनपतञ्जलिभि: सूचिता:। एतेषामेव दोषाणां प्रपञ्चभूता अन्ये दोषा: सन्तीति। वृत्तस्य दु:श्रवत्वमपि शब्दानौचित्यमेव वर्तते। इत्थं सर्वेषां दोषाणां मूलं त्रिमुनि-व्याकरणमेवेति निष्पन्नम्। तदेवोद्भाविता आचार्यैरिति।

परमिमे दोषा: सन्निवेशविशेषवशाद् गुणतामपि आपद्यन्ते यथा पुष्पस्रजां मध्ये गुम्फिता हरितपलाशा अपि कामपि कमनीयतां दधति। केचन दोषा आश्रयसौन्दर्यात् कान्ताविलोचनन्यस्तं मलीमसमञ्जनमिव शोभामादधति। अत: केचन दोषा नित्या: केचनानित्या अपरे गुणतामापन्ना भवन्ति। अत:

सर्वे न सर्वथा परिवर्जनीया एव, परं च्युतसंस्कृत्यादयो नित्या दोषास्तु सर्वथा हेया एवेति दिक्।

अतः सिद्धं साहित्यशास्त्रस्य व्याकरणशास्त्रखिलभागत्वमिति। तेनात्र "मुखं. व्याकरणं स्मृतम्" इत्युक्तेः साहित्यशास्त्रस्यापि वेदमुखत्वम्। राजशेखरेण तु "उपकारकत्वात् सप्तममङ्गमलङ्कारः" इति यदुक्तम्, तदपि युक्तम्। यतो हि स केवलमलङ्कारांशमादायोक्तवान्। अलङ्कारज्ञानं विना "द्वा सुपर्णा" इत्यादीनामर्थज्ञानमेव न भविष्यतीति।

**काव्यम्–** काव्यं वस्तुतः विशिष्टशब्दार्थाविव। यतो हि कविकर्म (वर्णनात्मकं कर्म) काव्यम्, वर्णनं च कस्यचित् पदार्थस्यैव भवति परं तत्साधनं शब्द एव। यो हि यदर्थमुपादीयते स तद्गुणीभूत इति सिद्धान्ताद् यत्रार्थस्य प्राधान्यं तत्र शब्दो गुणीभूतः, यत्र शब्दस्य प्राधान्यं तत्रार्थस्य सहकारिता सिद्ध्यति, तदुक्तम्— एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता इति। लोकेऽपि दृश्यते "घटमानय" इति प्रयोगे घटपदार्थस्यानयनं भवति, घटमुच्चारयेत्यत्र घटशब्दस्योच्चारणं क्रियते। इत्युभयोः स्थलविशेषे प्राधान्यम्।

तदुक्तमाचार्यैः "काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा गुणाः शौर्यादिवद् आत्मधर्माः, अलङ्काराः कटककुण्डलादिवत् शरीरे धार्याः, दोषाः काणत्वादिवद् हेयाः" इति।

## काव्यम्

वस्तुतः शब्दार्थाविव काव्यम्, यद्यपि कविकर्मता शब्दनिर्माणे नास्ति तेषामनादित्वात् तथापि वर्णनीयार्थोपयोगिसमुचितशब्दचयने गुम्फने च कविकर्मताऽस्त्येव। एवमर्थोऽपि कविना नोत्पाद्यते, परं वर्णनीयेऽर्थे ये दोषाः सन्ति, तान् अपसार्य तत्स्थाने गुणान् पूरयित्वा कवयो वर्णयन्ति, न दोषयुक्तान्। एवंविधानां वर्णने एव काव्यमुपदेशाय प्रभवति, नायकवद् (रामादिवत्) वर्तितव्यं न रावणादिवत् (प्रतिनायकवद्) इति। इत्थं कविकर्मता नायकाद्यर्थनिर्माणेऽस्ति।

लोकव्यवहारोऽपि वर्तते, काव्यं श्रुतं, काव्यं बुद्धमिति, श्रवणं शब्दस्य बोधोऽर्थस्येति। एवं कविप्रौढोक्तिसिद्धेष्वर्थेषु अर्थस्यैव प्राधान्यम्, चमत्कारित्वात्, अत एवार्थालङ्कारा अर्थदोषा बाहुल्येन वर्णिताः सन्ति। "तदधीते तद्वेद" इति सूत्रे महाभाष्यकारेण वेदस्य शब्दार्थमयत्वं साधितम्,

इत्थं 'शब्दार्थौ काव्यम्' इति स्वीकारे दृश्यकाव्येऽपि क्लिष्टकल्पनां विनैव काव्यत्वं सिद्धम्। अपि च 'काव्यस्यात्मा रसः', अर्थ एवास्ति नं शब्दः, इति सिद्धं शब्दार्थौ काव्यमिति।

इत्थं दोषसद्भावे गुणा अलङ्काराश्च विफला एव भवन्ति। यथा— 'अन्धं पतिं प्राप्य विलासिनीनां कटाक्षबाणा विफला भवन्ति'। यदुक्तं कविकुलगुरुणा कालिदासेन— एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः', परं पण्डितराजोऽन्यथा समाधत्ते—

**'अमितगुणोऽपि पदार्थः दोषेणैकेन निन्दितो भवति।**
**निखिलरसायनराजः गन्धेनोग्रेण लशुन इव'।।** इति।

अन्येनापि केनचिदुक्तम्— 'दारिद्र्यदोषो गुणराशिनाशी'। इति।

'सगुणौ सालङ्कारौ' इति विशेषणद्वयमपि युक्तमेव।

लोकशास्त्रेभ्यो भिन्नं काव्यमित्यत्र किं मानम्? चमत्कारयुक्तत्वात्। द्वयं हि चमत्कारजनकं रसो वाऽलङ्कारो वा। यत्र रसकृतश्चमत्कारस्तत्र स्फुटालङ्कारस्यापेक्षा नास्ति, परं यत्र रसः कविविवक्षाविरहितस्तत्र यदि न भवेदलङ्कारस्तदा तत्र किं कृतश्चमत्कारः? अतो मम्मटाचार्यकृतं लक्षणं समीचीनम्।

अत एव पण्डितराजोऽपि काव्यस्य कारणं केवलं प्रतिभां निरूप्य प्रतिभापदार्थं विवृण्वानः प्राह– सा च काव्यघटनानुकूलशब्दार्थोपस्थितिरिति। तत्र द्वन्द्वसमासः, द्वन्द्वे चोभयपदार्थप्राधान्यात् शब्दार्थयोरुभयोः प्राधान्यम्। यदा कारणे उभयोः प्राधान्यं तदा कार्येऽपि द्वयोः प्राधान्यं स्वीकरणीयमिति।

वस्तुतश्चमत्कारिशब्दार्थौ काव्यमिति लघुलक्षणम्, चमकृतिश्चानन्द-विशेषः। शब्दार्थयोश्चमत्कारित्वं सरसौ शब्दार्थाविति रीत्या उपपादनीयम्। दोषस्य चमत्कारापकर्षकत्वाच्चमत्कारिपदेन वारणम्। गुणाऽलङ्कारयोश्चमत्काराधायकत्वाद् ग्रहणमिति गवेषणे धिषणाप्रगल्भैः स्वयमूह्यम्।

## काव्यधर्माः

काव्ये दोषाभावः सर्वैरालङ्कारिकैरपेक्षितः। अतो दोषो हेय एव। गुणा रसा अलङ्काराश्च सर्वैरपेक्षिताः सन्ति। परं दण्डिवामनप्रभृतयो रीतिमपि निरूपयन्ति काव्ये सौन्दर्याधायकतया। अपरे आचार्या वृत्तिमपि निरूपयन्ति।

भरतेन महर्षिणा राजयोगादेर्लक्षणमिव काव्येऽपि लक्षणानि निरूपितानि। पुनश्चन्द्रालोकेऽपि जयदेवो निरूपितवान् अपरेऽपि केचन। इत्थं सङ्कलनया षड् धर्मा: काव्यस्य सन्ति, ते च गुणा रसा लक्षणानि रीतयोऽलङ्कारा वृत्तयश्च सन्ति।

परं ध्वनिसम्प्रदायाचार्यैर्गुणाऽलङ्कारेभ्योऽतिरिक्ता: रीतयो वृत्तयश्च न पृथक् स्वीकृता:। ताश्च गुणालङ्कारयोरन्तर्भाविता:। तथा हि ध्वन्यालोके ध्वन्यभाववादिनां मतनिरूपणे— 'तदनतिरिक्तवृत्तयो वृत्तयोऽपि गता: श्रवणगोचरम्, रीतयश्च वैदर्भीप्रभृतय:'।

अर्थाद् अलङ्कारानतिरिक्तवृत्तयो वृत्तय: सन्ति। तदुक्तमानन्दवर्धनाचार्यै:— ''वर्तन्तेऽनुप्रासभेदा यासु ता वृत्तय:'' इति या: कैश्चिदुपनागरिकादिवृत्तय: प्रतिपादितास्ता अनुप्रासभेदा: सन्ति। इमानेवानुप्रासभेदान् वामनादयो रीतिपदेन व्यवहरन्ति, गुणभेदा रीतयस्ततो न भिन्ना: सन्ति। अतस्तासां रीतिवृत्तीनां विवेचनमत्र न कृतम्।

विश्वनाथेन सङ्ग्रहशीलेन निरूपिता अपि। अलङ्कारसम्प्रदायाचार्यैर्दण्डि-वामन-रुद्रट-जयदेवादिभिरप्युक्ता परमन्यैर्बहुभिर्नाङ्गीकृता:। अतो ध्वनिसम्प्रदाये गुणा रसा अलङ्कारा एवाङ्गतया निरूपिता: सन्ति प्रायश:। अतो द्वयोराचार्ययोर्यत्र यत्र सिद्धान्तभेद:, त एव विषया अत्र समीक्षिता:, तेन साम्बसदाशिव: प्रीयतामिति शिवम्।

## प्रवृत्तिनिरूपणम्

अलौकिकानन्दस्वरूपरसनि:स्यन्दिन: कामिनीकलालापविलासवत्-कमनीयस्य सहृदयहृदयाह्लादकस्य विविधरचनाप्रपञ्चचारुण: काव्यस्यास्ति किमपि लोकशास्त्रातिशायि महत्त्वम्। विविधविज्ञाननिधानस्य भगवत: परमेष्ठिन: कृतिभूतं नामरूपात्मकमिदं जगदपि वस्तुतो विदग्धदृष्ट्या काव्यभूतम्। विलक्षणज्ञानविज्ञानराशे: शब्दब्रह्मणो वेदस्यापि काव्यत्वं वेद एवोपपादितम्–''देवस्य पश्य काव्यम्'' इत्यादिना। परं समुचितललितसन्निवेशचारुणस्तस्य काव्यस्य लोके प्रथमावतार आदिकविना रामायणरूपेणाकारि, तस्य श्रुतिरसायनस्य सहृदयानुरञ्जकस्य यानि तत्त्वानि रमणीयताधायकानि सन्ति, तानि विदग्धै: अग्निपुराणमद्यावधि विविच्यन्ते।

तेषु वाग्देवतावतारो मम्मट: अर्थगौरवयुतं सूत्ररूपेण काव्यप्रकाशं निर्मितवान्। ग्रन्थोऽयं विद्वत्सु आकरग्रन्थतया प्रथित: पदवाक्यप्रमाणज्ञै:

सर्वैरादृतोऽद्यावधि सर्वाण्यलङ्कारशास्त्रग्रन्थानतिशयानो राजते। ग्रन्थमिम-मनेकशः सकलशास्त्रपारावारपारङ्गमेभ्यः श्रीकालीप्रसादमिश्रमहोदयेभ्योऽ-धीयानोऽहमत्रातिशयां श्रद्धामभजम्। पुना रसगङ्गाधरमधीयानस्तत्र पदार्थविवेचनकुशलेन पण्डितराजेनातिगभीरया धिया कृतां काव्यप्रकाशस्य बहुशो निराकृतिं दर्शं दर्शं किमपि विमर्शं विधातुं गुरुचरणेभ्यः पुनर्ग्रन्थद्वयमध्यगीषि।

ततः सम्पूर्णानन्दसंस्कृतविश्वविद्यालये नियुक्तोऽहं विद्यावारिध्युपाधयेऽनुसन्धातुमना अनुसन्धानसञ्चालकेन डॉ. भागीरथ-प्रसादत्रिपाठिना श्रीमम्मटभट्टपण्डितराजयोर्मतभेदविमर्शं विधातुं प्रेरितोऽत्र प्रवृत्तोऽभवम्। ततो मुहुर्मुहुः ग्रन्थद्वयमधीयानस्तदतिशयाश्चर्यनीरनिधौ निमग्नोऽभवम्, यदाज्ञासिषं यत्पण्डितराजोऽत्यादरभरेण मम्मटाचार्यमनुसरति, तन्मतनिराकरणं प्राय आपाततः प्रतीयते ऋते कतिपयविषयेभ्यः। वस्तुतः काव्यप्रकाशतः समवाप्यातिशयप्रकाशं दुष्प्रचारे साहित्यशास्त्रे स्वेच्छया विहरति तत्प्रतिभा। मम्मटभट्टमयं यथार्थतो वेत्ति।

## विषयोपस्थापनम्

ग्रन्थोऽयं पञ्चस्वध्यायेषु विभक्तोऽस्ति। तत्र प्रथमेऽध्याये काव्यस्वरूपविमर्शः कृतो वर्तते। तत्र काव्यस्य प्रयोजनं कारणं स्वरूपं भेदाश्च विमृष्टाः।

तत्र काव्यप्रयोजने प्राचीनाचार्या भामहादयो धर्मार्थकाममोक्षेति चतुर्विधं पुरुषार्थकलासु नैपुण्यं कीर्तिप्रीती च काव्यप्रयोजनानि व्याजह्रुः। मम्मटाचार्योक्तप्रयोजनसूत्रस्यापि व्याख्यातृभिस्तथा व्याख्या विहिता यथा ते सर्वे धर्मार्थकाममोक्षादयो गृहीता भवन्ति। पण्डितराजोऽप्यत्र मम्मटमेवानुसरतीति।

काव्यकारणे मम्मटभट्ट-पण्डितराजयोर्मतं निर्दिश्य विविधाचार्यमतनिरूपणपुरस्सरं विमृश्य दृष्टिभेदाद् द्वयोर्वैशिष्ट्यमुपपादितम्। काव्यलक्षणे च द्वयोराचार्ययोर्लक्षणं सम्यग्विविच्य पूर्वाचार्याणां च मतं निर्दिश्य विविधाभिर्युक्तिभिर्मम्मटमतं समीचीनमित्युपपादितम्।

अत्रैकं स्वकीयमपि लक्षणमुपात्तम् 'चमत्कारिशब्दार्थौ काव्यम्' इति एतस्य निर्वचनं पण्डितराजरीत्यैव ज्ञेयम्। काव्यभेदोऽप्युभयरीत्या निर्दिश्य विमृष्टः।

द्वितीयेऽध्याये च वृत्तिविमर्शः, तत्र वाचक-लक्षक-व्यञ्जकशब्दानां निरूपणमभिधाया निरूपणं, सङ्केतग्रहविषयविवेचनं, व्यक्तौ शक्तिस्वीकारे व्यभिचारदोषवारणाय मानसलक्षणाप्रत्यासत्तेर्निरूपणपूर्वकं निराकरणं, द्वयोर्मते अभिधाया: स्वरूपम्, अभिधाभेदः, दार्शनिकानां मतम्, लक्षणाया: स्वरूपं, लक्षणायां बीजम्, कारणम्, प्रयोजनम्, उभयोराचार्ययोर्मते उपपाद्य भेदनिरूपणं तत्र तत्र मतभेदः, विमर्शः, तात्पर्यवृत्तेर्निरूपणं व्यञ्जनाया निरूपणं, व्यञ्जनायां विप्रतिपत्तयः, तन्निराकरणं चेत्यादिकमुपपादितम्।

तृतीयेऽध्याये रसस्वरूपविमर्शः। तत्र मम्मटाचार्यमते रसस्वरूपम्, भट्टलोल्लटश्रीशङ्कुकभट्टनायकाभिनवगुप्तपादाचार्याणां मते रससूत्र-व्याख्यानपूर्वकं तत्तन्मते रसस्वरूपनिरूपणम्, पण्डितराजस्य वैशिष्ट्यम्, मतभेदः, रसस्वरूपस्य निरूपणे क्रमिको विकासः, विमर्शः, शान्तशृङ्गाररौद्र–वीरादिरसेषूभयोराचार्ययोर्मतभेदयोः विमर्शः, भावध्वनौ मतभेदः, तस्य विमर्शो गुणनिरूपणमित्यादयो विषया विवेचिताः सन्ति।

चतुर्थेऽध्याये द्वयोराचार्ययोर्मते ध्वनिभेदाः, वर्णानां रसव्यञ्जकत्वे विप्रतिपत्तयः, अर्थशक्त्युद्भवध्वनिभेदे शब्दशक्त्युद्भववस्तुध्वनावलङ्कारध्वना-वभिधानियामकोदाहरणेषु अन्यत्राप्युभयोर्मतभेदः, विमर्शश्च विविधाभिर्युक्तिभिर्निरूपिताः।

पञ्चमेऽध्याये अलङ्कारविमर्शः, उपमालङ्कारस्यालङ्कारेषु महत्त्वं, सादृश्यसाधर्म्ययोर्भेदः, उपमाभेदाः, वाचकलुप्तोदाहरणे मतभेदः, प्रतीपोपमेयोपमयोरुपमायामन्तर्भावस्य समीक्षापूर्वकं निराकरणमन्येषां चालङ्काराणां विषये मम्मटभट्टपण्डितराजयोर्मतभेदनिरूपणं तस्य विमर्शः, विविधाचार्याणां मतनिरूपणमित्यादि निरूपितम्।

अत्र मतभेदः क्वचित् शब्दत उपात्तो यथा काव्यलक्षणे काव्यकारणे क्वचिच्चार्थतोऽवसेयो यथा काव्यभेदे। मम्मटः काव्यं त्रिविधमाह। पण्डितराजश्चतुर्विधमिति। एवं रीत्या रसगङ्गाधरे काव्यप्रयोजनमारभ्य लक्षणां वृत्तिं यावद् वाच्यविधयाऽन्यथा वोपपादिता मतभेदाः सर्वे विमृष्टाः। अलङ्कारेषु क्रमो रसगङ्गाधररीत्यैवाश्रितः। कतिपयेऽलङ्काराः क्रमं विनाऽपि प्रसङ्गसङ्गत्या निर्दिष्टाः सन्ति।

परं प्रतिपदं ग्रन्थग्रन्थिग्रहिलेऽस्मिन् शास्त्रे मादृशां प्रवेशो न सुकरस्तथाऽपि निरन्तरमधीयानेन विविधग्रन्थालोडनेन च यथाज्ञातं तथोपपादितम्। न ह्यत्र कस्यापि मतं निराक्रियते प्रत्युतोभयोर्मतं समाद्रियते। यतो मम्मटभट्टो वाग्देवतावतार एव, पण्डितराजश्च वाचामाचार्यतायाः पदमनुभवतीत्यतो विविधशेमुषीजुषोस्तयोर्विदुषोर्मतमतीव शोभनम्।

यद्यपि मम्मटाचार्यः शब्दव्यापारविचाराभिधमन्यमपि लघुग्रन्थं जग्रन्थ। परं तत्रत्यं विषयं पण्डितराजो न विरुणद्धि। अतोऽस्य प्रबन्धस्य शीर्षकस्याभिप्रायोऽयमेव निष्पन्नः "**श्रीमम्मटभट्टपण्डितराजसिद्धान्तमीमांसा**" इति।

मम्मटभट्टस्योपजीव्यभूता आचार्यो भामहः, दण्डी, वामनः, रुद्रटः, ध्वनिकारो लोचनकारश्च। दर्शनान्तरेषु निष्णातोऽपि अयं मुख्यतो वैयाकरणः साहित्यिकः। अयं सूत्ररूपेण ग्रन्थं व्यधात। पण्डितराजस्य विशेषतो मम्मटः, अप्पयदीक्षितः, रुय्यकप्रभृतय उपजीव्याः सन्ति। अयं दीक्षितं रुय्यकं च तत्र तत्र निराकरोति परं सुतरां प्रभावितस्ताभ्याम्। रूपके लक्षणानिराकरणं नानार्थस्थले व्यञ्जनानिराकरणमुपमादिषु विशिष्टभेदाश्चाप्पयदीक्षितरीत्यैव करोति। अयं सर्वदर्शनेषु निष्णातोऽपि मुख्यतया नैयायिकः साहित्यिकः। नैयायिकरीत्या पदार्थं विविनक्ति। परं बहुशो मम्मटभट्टं स्वमतसंवादाय स्मरति।

## कृतज्ञताज्ञापनम्

अहं सर्वप्रथमं विविधविद्याविद्योतितान्तःकरणान् पदवाक्यप्रमाणपारावार–पारीणान् काशिकहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयप्राचार्यान् प्रथितयशसो गुरूणामपि गुरून् पूज्यचरणान् पण्डितराजान् **श्रीकालीप्रसादमिश्र**महाभागान् प्रति सादरं सश्रद्धं प्रणतिपुरस्सरं कृतज्ञतां प्रकाशयामि येषां चरणोपासनया यथामति-लब्धविद्यो येषां च निर्देशने प्रारब्धमनुसन्धानकार्यमद्य प्रकाश्यतां गतमिति—

**तत्तत्पदस्थितसुशिष्यसरोजमालाबोभूष्यमाणयुगलाङ्घ्रिसमेधितश्रीः।**
**वार्धिर्धियां भृशमुदारमयस्वभावः कालीप्रसादबुधराट् विबुधैरपीड्यः।।**

पुनश्च शब्दविद्यावतां लब्धप्रतिष्ठानां वाराणसेयसंस्कृतविश्वविद्यालयस्य व्याकरणविभागाध्यक्षचराणां पण्डित**श्रीमुरलीधरमिश्र**महाभागानां कृतज्ञोऽस्मि, समये समये येषां निर्देशो लब्धः—

**यश्शब्दशास्त्रमननोदितबुद्धिदक्षः**
**पारेसहस्रमपि पाठितवान् स्वशिष्यान् ।**
**लोकद्वयोचितसुचारुविचारदक्षः**
**वन्द्यो गुरुर्हि मुरलीधरमिश्रनामा।।**

व्याकरणसाहित्यशास्त्रयोः पारदृश्वनां विद्वत्समाजसभाजितानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरणविभागाध्यक्षचराणां पण्डित-**श्रीभूपेन्द्रपतित्रिपाठि**महाभागानामतीव कृतज्ञोऽस्मि यैरतिस्नेहेनात्र निर्दिष्टोऽस्मि—

**यो वाग्वैभववैदुषीपरिलसत्प्राचुर्यचातुर्यतः**
**काशीस्थाखिलपण्डितेन्द्रवलये सम्मानितः सर्वदा।**
**काव्यव्याकरणादिशास्त्रमथनप्रौढैकलीलास्पदं**
**श्रीभूपेन्द्रपतिस्त्रिपाठिमतिमानत्यादरं नम्यते।।**

विविधभाषावधूविशेषकाणां देशे विदेशे च प्रथितयशसां विद्वन्मण्डलमण्डनायमानानामन्वर्थाभिधानानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-स्याधुनिकभाषा–भाषाविज्ञानविभागाध्यक्षचराणां ततः कुलपतिचराणां च पण्डित**श्रीविद्यानिवासमिश्राणां** कृतज्ञोऽस्मि, यैर्बहुधोपकृतोऽस्मि—

**विद्याप्रभावपरिभावितसर्वलोको विश्वेऽत्र विश्ववलये परिलब्धकीर्तिः।**
**भाषावधूनवविलासविभूषितश्रीः विद्यानिवासमतिमानतिमान्य एषः।।**

साहित्यशास्त्रविदां वरिष्ठानां वाराणसेयसंस्कृतविश्वविद्यालयस्य साहित्यविभागाध्यक्षचराणां **श्रीद्विजेन्द्रनाथमिश्र**महाभागानां कृतज्ञोऽस्मि यैरत्र सम्मतिर्निर्दिष्टा–

**अशेषसाहित्यविशेषविद्याविद्योतितान्तःकरणप्रसन्नः।**
**द्विजेन्द्रनाथेति यथार्थनामा श्रीनिर्गुणोऽयं नितरां गुणौघः।।**

प्राच्यप्रतीच्योभयविधविद्यावदातान्तःकरणानां सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य पूर्वकुलपतीनां **श्रीकरुणापतित्रिपाठि**महाभागानाम्, व्याकरणादिसकलशास्त्रपरिवृढानां कृतज्ञोऽस्मि, यैः सस्नेहं महत्साहाय्यं विहितम्—

**यस्याधिकारसमये हि निबन्ध एष**
**प्रारब्ध एव मयका परितो विशोध्य।**
**श्रीमत्त्रिपाठिकुलवारिधिपूर्णचन्द्रो**
**भूयोऽर्च्यतिऽत्र करुणापतिरीड्यवृत्तः।।**

दर्शनकेसरीणां देशिकवैदेशिकपण्डितमूर्धन्यानां शास्त्रार्थपारङ्गतानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य न्यायविभागाध्यक्षाणां कुलपतिचराणां पण्डितश्रीबदरीनाथशुक्लमहाशयानां पादपद्मेषु नतिपरम्परां समर्पयामि, येषां कृपालेशतः न्यायग्रन्थग्रन्थिविस्फोरणे समर्थोऽभवम्—

**श्रीमद्भारतदेशदेशिकचयैर्वैदेशिकैर्देशिकैः**
**पूज्यो दर्शनदर्शनीयचरितोऽप्यादेशकृद्धीमताम्।**
**कल्याणैकमना इदम्प्रथमतो विद्यालयानामपि**
**श्रद्धाभक्तियुतो नमामि बदरीनाथाह्वयं तं मुहुः।।**

**पृथिव्यां पण्डितमण्डितो विजयतेऽयं विश्वविद्यालयो**
**विश्वस्थाखिलधीमताञ्च विजयी शङ्खः स देध्मीयते।**
**वित्तो दर्शनदर्शनैः कुलपतिस्तत्रैव विद्याबलात्**
**काशीपण्डितमण्डनं स बदरीनाथो मुहुर्नम्यते।।**

अपि च **श्रीरामप्रीतिद्विवेद**महोदयानामपि कृतज्ञोऽस्मि—

**शाब्दे शास्त्रे भूमविश्रान्तबुद्धिं**
**विद्यावादे सुप्रतिष्ठं सदैव।**
**धीरास्तुष्टाः सन्ततं यस्य पाठाद्**
**रामप्रीतिं पण्डितं तं नमामि।।**

अतः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरणविभागाध्यक्ष-चरं पण्डित**श्रीकालिकाप्रसादशुक्लं** सुहृद्वरं प्रति कार्तज्ञ्यभावं व्यनज्मि—

**स शब्दशास्त्रसिन्धुबन्धुबन्धुरः सुहृद्वरः**
**तथाऽस्मदग्रजोपमो विशुद्धवंशसम्भवः।**
**विभागरत्नभूत एष ''कालिकाप्रसाद'' भृत्**
**समर्च्यतेऽत्र कालिकाप्रसादतः समृद्धधीः।।**

अस्मिन्नवसरे स्वशिष्यप्रवरं साहित्यशास्त्रे लब्धप्रतिष्ठं काशीस्थश्री-जो०म०गोयनकासंस्कृतमहाविद्यालयस्य स०साहित्यप्राध्यापकं प्रखरप्रतिभं

**श्रीत्रिलोकीनाथद्विवेदिन**माशीर्वचसा सभाजयामि येन महता श्रमेणाहर्निशं विविधं साहाय्यमकारि—

**पुरा पाठं पाठं मम हि सविधे शास्त्रनिकरं**
**ततो ज्ञायं ज्ञायं तदुदितमहातत्त्वममलम्।**
**अभूच्छास्त्रप्रेष्ठः सपदि च मुदाध्यापनबलात्**
**त्रिलोकीनाथाख्यः सहृदयवरिष्ठो विजयताम्।।**

यैः सम्पादिताः ग्रन्थाः, कृता व्याख्या वा साक्षात्परम्परया वोपाकार्षुस्तेषां विदुषामाभारभरं वृणोमि।

ग्रन्थोऽयं मम शोधप्रबन्धः प्रायः त्रिंशद्वर्षादनन्तरं प्रकाश्य विदुषां करकमलयोरुपायनीक्रियते। तत्र प्रतिबन्धकादृष्टमेव कारणं मन्ये। सर्वमपि कार्यं समये एव सिद्ध्यतीति श्रीविद्याधिपस्य काशीविश्वनाथस्य कृपयेदानीं प्रकाशनेन सम्पन्नतां मन्यमानः प्रपञ्चपितरौ पार्वतीपरमेश्वरौ मुहुर्मुहुर्वन्दे।

अस्मिन् समये स्वनामधन्यान् गुरूणामपि गुरून् स्वविद्यागुरून् विद्याविद्योतितान्तःकरणान् विदुषः, सुहृदः, विचारकुशलान् मनीषिणः, शास्त्रदृष्टीन् कुलपतीन्, अधिकारिणः कतिपयशिष्यांश्च शब्दप्रसूनाञ्जलिभिः साधुवादैः शुभाभिर्वाग्भिश्च यथायोगं सम्भावयामि सभाजयामि कृतज्ञतां ज्ञापयामि आशीर्वचसाऽभिनन्दयामि च।

विश्वविद्यालयीयप्रकाशनसंस्थानतः प्रकाश्यमानोऽयं ग्रन्थः सौम्यमूर्तेः कुलपतिवर्य्यस्य **प्रो. अशोककुमारकालिया**महोदयस्य गुरुगम्भीरप्रस्तावनया विभूष्य विराजते, अतस्तेभ्यः कृतज्ञतां विनिवेदयामि—

**प्राच्यप्रतीच्योभयदर्शनेषु**
**पारं गतश्चारुविचारदक्षः।**
**श्रीकालियाऽशोककुमार एष**
**प्रणम्यते वाङ्मयपारदृश्वा।।**

ततः साहित्यसुधारसरसिकेभ्यः साहित्यविभागाध्यक्षेभ्यो मधुपोपनामभ्यः **प्रो. रमाशङ्करमिश्र**महोदयेभ्यः शिवसङ्कल्पं समर्पयामि—

**शाब्दागमाम्भोनिधिमन्थनोत्थ-**
**रत्नप्रभाभासितचित्तवृत्तिः।**
**निमज्य साहित्यसुधासमुद्रे**
**रेमे रमाशङ्करमिश्रसूरिः।।**

ग्रन्थस्यास्य सुमनोहरप्रकाशनकर्त्रे प्रकाशनसंस्थानस्य यशस्विने निदेशकाय सहृदयधुरीणाय संस्कृतगौरववर्द्धनतत्पराय **डॉ. हरिश्चन्द्रमणित्रिपाठि**महाशयाय समुपहरामि मङ्गलान्याशीर्वचांसि—

**शब्दागमे यः प्रथितो यशस्वी**
**प्रकाशने लब्धयशा मनस्वी।**
**प्रकाश्य लोके सुषमां गिरां तां**
**जीव्याद् हरिश्चन्द्रमणिस्त्रिपाठी।।**

अतः परं प्रकाशनसंस्थानस्य सहायकसम्पादकं **डॉ. ददन-उपाध्यायं** धन्यवादैराशीर्वचोभिः शुभाशंसाभिश्च वर्धापनं प्रदाय तस्य योगक्षेमार्थं भगवन्तं साम्बं काशीविश्वनाथं प्रार्थये—

**साहित्यशास्त्रं निपुणं समीक्ष्य**
**प्रकाशने लब्धपदः प्रवीणः।**
**विद्वद्वराणां मतिमाददानः**
**चकास्तु लोके ददनाभिधानः।।**

अन्ये च येऽस्य प्रकाशने कृतश्रमाः, तान् सर्वान् शिवाभिर्वाग्भिर्भूषयामि।

अन्ते ग्रन्थमिमं साम्बाय सान्नपूर्णाय श्रीकाशीविश्वनाथाय समर्प्य कामये यद् गुणलेशेऽप्यभिनिवेशिनो विद्वांसो यदि प्रबन्धमिमनुग्रहीष्यन्ति तदाऽयं मम श्रमः सफलतामेष्यतीति।

विदुषां विधेयः
**वायुनन्दनपाण्डेयः**
राष्ट्रपतिसम्मानितः
उपाचार्यचरः, साहित्यविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**वाराणसी**
मकरसङ्क्रान्तिः,
वि.सं. २०६४
(१५ जनवरी, २००८)

# विषयानुक्रमणिका

## द्वितीयोऽध्याय:

## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

**परिशिष्टम्**





# श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा

## अथ प्रथमोऽध्यायः

### काव्यप्रयोजनम्

तत्र तावत्काव्यप्रयोजने मम्मटभट्टपण्डितराजयोर्वैमत्याभावः, यानि प्रयोजनानि मम्मटाचार्येण यशोऽर्थप्राप्तिव्यवहारज्ञानाशिवक्षतिपरनिर्वृति-कान्तासम्मिततयोपदेशादीनि-

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**

(का०प्र०१/२)

इत्यादिना निबद्धानि तान्येवैकया पङ्क्त्या पण्डितराजेन सङ्कलितानि, कानिचित् साक्षात् शब्दतः, कानिचिद् आदिपदेन। यथा—

**''तत्र कीर्तिपरमाह्लादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य'' इत्युक्तेः। इति तत्र न विमतिः स्फुरति।**

(रसगङ्गाधरः -। पृ०८)

### विमर्शः

प्रेक्षावतां प्रवृत्तये ''प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते'' इति रीत्या—

**सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते।**
**शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।**

(श्लो० वा०)

इत्यभियुक्तोक्तेः शास्त्रादौ सर्वत्र प्रारिप्सितग्रन्थस्याभिधेयेन सह सम्बन्धः, ग्रन्थस्य प्रयोजनसम्बन्धश्च प्रयोजनाभिधेयसम्बन्धप्रकरणेन प्रतिपाद्यते। अतो मम्मटाचार्योऽपि अस्य ग्रन्थस्य काव्याङ्गतया (काव्याङ्गभूत-शब्दार्थध्वनिदोषहानगुणालङ्कारादीनामुपपादकतया) तत्फलैरेवास्य फलवत्त्वमुपपादयन् प्रयोजनमभिदधद् भामहादीन् वामनादींश्च स्वपूर्ववर्तिन आचार्याननुसार। भामहः प्रयोजनं निरूपयन्नाह-

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्।।** इति।

(काव्यालङ्कार १/२)

**वामनश्च**

**काव्यं सद् दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात्।**

(का० सू० १/५)

इति प्रयोजनं निरूपयाञ्चक्रे। अत्र मम्मटोक्ते प्रयोजने व्यवहारविच्छब्देन धर्मज्ञानमेव विवक्षितम्, यतो हि तद्वृत्तौ ''राजादिगतोचिताचारपरिज्ञानम्'' इत्युक्तम्। उचिताचारश्च धर्म एव। ''आचारः प्रथमो धर्मः'' इति मनुस्मरणात्। अर्थप्राप्तिश्च शब्दतो निबद्धा, शिवेतरक्षतिरिति क्षतिपदेनेष्टकामप्राप्तिरपि कैमुत्यन्यायेन विवक्षिता, परनिर्वृतिस्तु मोक्षसुखमेव। ''रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती''ति श्रुतेः। ''कीर्तिं स्वर्गफलामाहुः'' इत्यपि। प्रयोजनमिदं कवेः सहृदयस्य च यथायोगं ज्ञेयम्, तथा हि यशोऽर्थप्राप्तिश्च कवेरेव। व्यवहारज्ञानं कान्तासम्मिततयोपदेशश्च सहृदयस्यैव। शिवेतरक्षतिः कवेस्तत्पाठात् सहृदयस्य च। परिनिर्वृतिस्तु सहृदयस्यैव।

पण्डितराजोऽपि मम्मटमतमेव स्वीचक्रे इति नास्त्यत्र वैमत्यम्। प्रयोजनोपपादनमनुबन्धचतुष्टयान्तर्गतत्वात्। अनुबन्धत्वं च ''प्रवृत्तिप्रयोजकज्ञानविषयत्वम्'' इति प्रवृत्तिप्रयोजकं च ज्ञानम्— इदं मदिष्टसाधनम्, इदं मदिष्टाननुबन्धि, इदं मत्कृतिसाध्यमिति। स च चतुर्विधः— अधिकारी, विषयः, सम्बन्धः, प्रयोजनमिति भेदात्।

इत्थं दृष्टादृष्टानेकप्रयोजनकत्वात् काव्ये प्रवृत्तिरुचितेति। परं यदीदृशप्रयोजनकं काव्यं तदा ''काव्यालापांश्च वर्जयेत्'' इति स्मृत्या कथं प्रतिषिद्धमिति न शङ्क्यम्, तन्निषेधस्यासत्काव्यविषयत्वात्। भगवतो भगवद्भक्तस्य वर्णनविषयकस्य काव्यस्य विहितत्वात्। अत एव श्रीमद्भागवते

''न यद्वचश्चित्रपदं हरेर्यशः'' ''स वाग्विसर्गो जनताघविप्लवः'' इत्यादिना तद्विहितम्। अत एव वाल्मीकिप्रभृतिभिः भगवतः, कालिदासादिभिश्च भक्तस्यापि वर्णनं कृतम्।

## काव्यकारणम्

तत्रभवान् मम्मटः काव्यकारणं विमृशन्नभिधत्ते

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे।।**

(काव्यप्र० १/३)

शक्तिः कवित्वस्य सहृदयत्वस्य च बीजभूतः संस्कारविशेषः। शक्तिसत्त्व एवानुपहसनीयकाव्यप्रसारदर्शनात्, शक्तिं विना कवित्वन्नोदीयात्, कथञ्चिदुदितं वोपहास्यतां यायादित्यन्वयव्यतिरेकाभ्यां शक्तेः कवित्वहेतुत्वमवसीयते। न च शक्तिं विनापि काव्योदयदर्शनाद् व्यतिरेकव्यभिचारान्न काव्यं प्रति शक्तिः कारणमिति वाच्यम्, काव्यपदव्यपदेशभाजो रसास्वादानुकूलरचनायाः शक्तिं विना कदाप्युद्भवादर्शनाद् व्यतिरेकव्यभिचाराभावात्, पदगुम्फनमात्रस्य कवित्वाभावात्।

कारिकास्थलोकपदं लोक्यतेऽसौ लोक इति व्युत्पत्तेर्लक्षणया वा लोकवृत्तपरम्, लोकवृत्तस्यैव रचनोपयोगित्वात्। शास्त्रपदं च— उक्ताऽत्युक्तादिछन्दोज्ञानोपयोगिनां पिङ्गलादिप्रणीताष्टाध्यायिच्छन्दोविचित्यादीनां छन्दःशास्त्राणाम्, सुशब्दापशब्दज्ञानोपयोगिपाणिन्यादिप्रणीतव्याकरणशास्त्राणाम्, पर्यायानेकशब्दलिङ्गभेदादिज्ञानोपयोगिनाममरसिंहादिप्रणीताभिधानकोशानाम्, नृत्यगीतादिकलाप्रतिपादकभरतादिकृतनाट्यशास्त्राणाम्, धर्मार्थकाममोक्षरूपचतुर्वर्गप्रतिपादकानां, मन्वादिस्मृतिशुक्रकौटिल्यादिकृत-नीतिशास्त्रवात्स्यायनकृत-कामशास्त्रव्यासादिकृत- वेदान्तादिशास्त्राणाम्, शालिहोत्रादिकृतगजतुरगखड्गादिलक्षणग्रन्थानाम्, इतिहासपुराणादीनां च वाचकम्। काव्यानां महाकविकालिदासादिकृतानां रघुवंशकुमारसम्भवादीनाम्, तेषां विमर्शनाद् व्युत्पत्तिस्तत्तदवधारणजनितदृढतरसंस्कारविशेषो निपुणता। लोकवृत्तान्तादीनि काव्याङ्गत्वेनोक्तानि। यथा भामहेन—

**न स शब्दो न तद् वाच्यं न सा विद्या न सा कला।**
**जायते यन्न काव्याङ्गमहो भारो महान् कवेः।।**

(काव्यालङ्कारः ५/४)

अग्निपुराणे च-

**विद्याः समस्ता यत्राङ्गमहोभारो महान् (गुरुः) कवेः।** इति।

अत्र केचन काव्यानां स्वकृतानां विमर्शनाद् व्युत्पत्तिः, व्युत्पत्तिश्च काव्योद्भवे कारणम्। एवं व्युत्पत्तौ (स्व) काव्यविमर्शः कारणम् (स्व) काव्योद्भवे च व्युत्पत्तिरिति, अन्योन्याश्रय इत्याशङ्कन्ते। तन्न युक्तम्— महाकविकालिदासादिकृतकाव्यानां विमर्शः स्वकाव्योद्भवे कारणम्, न तु स्वकृतकाव्यमिति।

काव्यज्ञशिक्षयाऽभ्यासः — काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पुनः पुनः प्रवृत्तिरभ्यासः। न च काव्यकरणे सत्यभ्यासः, अभ्यासे सति काव्यकरणमिति परस्पराश्रय इति वाच्यम्। पूर्वपूर्वजन्मनि कृतस्याभ्यासस्योत्तरोत्तरजन्मनि काव्यसमुल्लासे हेतुत्वात्। अथवा अत्राभ्यासस्योत्तरोत्तरजन्मनि काव्यसमुल्लासे हेतुत्वात्। अथवा अत्राभ्यासपदेन काव्यार्थोन्नयनाभ्यासस्य गृहीतत्वात्, तस्य च काव्यं प्रति हेतुत्वात्। रचनायां पुनः पुनः प्रवृत्तिरभ्यास इति वा। स च रसानुगुणरचनायां हेतुरिति।

अत्र काव्यकर्तुरुपदेशात् कश्चन कर्त्ता भवति, न तु भावकः (सहृदयः)। असहृदयो रचनायां प्रवृत्तो रसानुकूलप्रतिकूलरचनाया निर्णयेऽसमर्थतया रसप्रतिकूलमेव रचयेत्। केवलं विचारयितुरुपदेशाद् भावको भवेन्न (काव्यस्य) रचयिता। अतः काव्यस्य कर्तुर्विचारयितुश्चोपदेशादेवाभ्यासः काव्यास्योद्भवे समुल्लासे च हेतुः।

अतः काव्यस्य निर्माणे रसाभिव्यञ्जकतया चमत्कारे च शक्तिनिपुणताभ्यासास्त्रयः समुदिताः फलोपधायकतया कारणम्। व्यस्तेषु न फलोपधायकत्वम्, अपि तु स्वरूपयोग्यतेति।

अत्र काव्यदर्पणकृदाचष्टे– दोषाभावगुणालङ्कारादिविशिष्टशब्दार्थमयस्य काव्यास्यानेकविशेषणविशिष्टस्य नीलघटवदेकसामग्रीप्रयोज्यत्वासम्भवात् काव्यं न कार्यम्। एवं काव्यं प्रति शक्त्यादिकमपि न कारणम्, अपि तु शक्तिर्दोषतिरस्कारेण काव्यस्योद्भवे हेतुः। गुणालङ्कारयोः स्वीकारेऽभ्यासो हेतुः। रसाभिव्यञ्जने व्युत्पत्तिर्हेतुः। त्रयाणामार्थसमाजे सति तत्तद्विशेषणोपहितं काव्यमपि नीलघटवत् सम्पद्यते। तदुक्तम्—

**कवित्वं जायते शक्त्या वर्धतेऽभ्यासयोगतः।**
**अस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी।।**

(का०प्र०, विव०, पृ०२२)

परमिदमपरे न क्षमन्ते, नीलघटत्वस्यैककारणजन्य-त्वासम्भवरूपबाधसत्त्वेन कार्यत्वानवच्छेदकत्त्वेऽपि काव्यत्वे तादृशबाधकाभावेन तस्य कार्यताऽवच्छेदकमविरूद्धम्। अनित्यप्रमात्वं कार्यताऽवच्छेदकमिति नैयायिका अपि मन्यन्ते। (का०द०१–३)

**रसगङ्गाधरकारस्तु** काव्यस्य कारणं केवलां कविसमवेतां प्रतिभां मनुते। प्रतिभा च काव्यरचनानुकूलशब्दार्थोभयस्य झटिति परिस्फूर्तिः। ''सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः'' इत्युक्तेः। प्रतिभात्वं च जातिविशेषः।

स च काव्यकारणताऽवच्छेदकतया सिद्धः। अर्थात्— जातिः द्विधा सिध्यति– प्रत्यक्षेण, अनुमानेन च। तत्र नीलपीतहरितादिविभिन्नगुणविशिष्टेषु लघुबृहत्प्रमाणेषु च घटेषु घटः, घट इति यदापामरैकाकारप्रतीतिर्जायते तत्र मूलं घटत्वजातिरेवेति घटत्वादिजातिः कार्यतावच्छेदकतया प्रत्यक्षसिद्धा। यत्र द्रव्यादिषु सर्वत्र द्रव्यं द्रव्यमित्येकाकारप्रतीतिर्न जायते सर्वेषाम्, तत्र द्रव्यत्वादिजातीनां कारणतावच्छेदकतयाऽनुमानेन सिद्धिः।

इत्थं काव्यविषयकं ज्ञानं समवायेन कवयितरि वर्तते, प्रतिभा च समवायेन तत्रैव। एवञ्च स्वविषयकज्ञानसमवायित्वसम्बन्धेन काव्यं प्रति समवायेन प्रतिभा कारणम्। ततश्च ''स्व(काव्य)विषयकज्ञान-समवायित्वसम्बन्धावच्छिन्नकाव्यत्वावच्दिन्नकार्यतानिरूपिता समवाय–सम्बन्धाऽवच्छिन्ना प्रतिभानिष्ठा कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणतावत्'' इत्याकारकानुमानेन सिद्धं प्रतिभानिष्ठं प्रतिभात्वं जातिविशेषः। इदं मीमांसकरीत्या ज्ञेयम्। न्यायनये तु सखण्डोपाधिरेव, प्रतिभाया अदृष्टजन्यत्वाद् व्युत्पत्त्यभ्यासजन्यत्वाच्च भेदात्, प्रतिव्यक्तिभिन्नत्वादपि तारतम्यदर्शनाच्चानैक्यस्वीकारे प्रतिभात्वस्यानैक्यात्। प्रतिभापदार्थस्य नवनवोन्मेषशालित्वादिपदार्थान्तरघटिततत्वात् सखण्ड इति। पदार्थान्तरधटिततत्वं सखण्डत्वम्। पदार्थान्तराघटिततत्वमखण्डत्वमिति तल्लक्षणात्।

प्रतिभायाश्च हेतुः क्वचिद् देवतामहापुरुषप्रसादादिजन्यमदृष्टम्, क्वचिच्च लोकशास्त्रकाव्याद्यवेक्षणाद् व्युत्पत्तिः, काव्यज्ञशिक्षया काव्यकरणाभ्यासश्च। अत्र हेतुता तृणारणिमणिन्यायेन ज्ञेयम्, न तु अदृष्टव्युत्पत्त्यभ्यासाः संहता दण्डचक्रचीवरादिन्यायेन कारणम्। बालादेः व्युत्पत्त्यभ्यासाभ्यां विनाऽपि केवलमहापुरुषप्रसादात्प्रतिभोत्पत्तिदर्शनात्। श्रूयते हि श्रीकृष्णचैतन्यप्रसादान्मूकः कर्णपूरो मधुरां कवितां चकवे। देव्याः प्रसादात् मूककवेः काव्यं तु प्रसिद्धमेव।

न च यत्र साम्प्रतिकव्युत्पत्त्यभ्यासयोरभावेऽपि बालादेर्महापुरुष-प्रसादादिजन्यादृष्टात् प्रतिभोत्पत्तिस्तत्र तयोर्जन्मान्तरीययोः सत्त्वान्न दोष इति वाच्यम्, (दृश्यते च जन्मान्तरसंस्काराद् विलक्षणविद्यावाप्तिः) जन्मान्तरीययोः कल्पने गौरवात्, मानाभावात्, कार्यस्यान्यथाप्युपपत्तेश्च।

अयं भावः — ग्रन्थादौ मङ्गलनिबन्धनरूपशिष्टाचारदर्शनादनुमित-श्रुतिबोधितेति कर्तव्यताकस्य मङ्गलस्य समाप्तिरूपं फलमनुमीयते। तथा हि मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादिति। अतः ''समाप्तिकामो मङ्गलमाचरेदि''ति श्रुतिः सम्भाव्यते। तथा च ज्ञातं समाप्तिं

प्रति मङ्गलं कारणम्। परं नास्तिकग्रन्थेषु किरणावल्यादिषु मङ्गलाभावेऽपि समाप्तिदर्शनाद् बलवता प्रमाणेनागमादिना बोधितस्य कार्यकारणभावस्य व्यभिचार उपस्थितः। तद्वारणाय ग्रन्थकृता पूर्वजन्मनि मङ्गलं कृतमित्यनुमीयते। परं यत्रागमादिबलवत्प्रमाणेनाबोधितः कल्पितः कार्यकारणभावस्तत्र व्यभिचारो दृष्टश्चेत्तदा पूर्वनिर्णीतकार्यकारणभावे भ्रमात्मकप्रतीतिरेव जायते। अतः बालादेस्तौ विनाऽपि केवलादृष्टात्प्रतिभोत्पत्तिदर्शनात् तयोर्जन्मान्तरीययोरनुमाने गौरवाद्, बलवदागमादिप्रमाणाभावात्। तौ विनापि केवलाददृष्टादपि कार्योत्पत्तेश्च।

न चैवं केवलादृष्टादेव प्रतिभोत्पत्तिर्जायताम्, किं व्युत्पत्त्यभ्यासयोः कारणत्वकल्पनयेति वाच्यम्, कतिपयकालं काव्यं कर्तुमक्षमस्यापि तादृशाविरतकविसहृदयशिक्षातः काव्यशास्त्राद्यालोचनात् सञ्जाताभ्यां व्युत्पत्त्यभ्यासाभ्यां प्रतिभाप्रादुर्भावदर्शनात्। न च तत्रापि (विलक्षणव्युत्पत्त्यभ्यासाभ्यां प्रतिभोत्पत्तिस्थलेऽपि) अदृष्टमेव प्रतिभां प्रति कारणमिति वाच्यम्, व्युत्पत्त्यभ्यासाभ्यां प्रागपि प्रतिभोत्पत्तिप्रसङ्गात्। न चैतादृशस्थले प्रतिभायाः बाधकं साधकं चेत्यदृष्टद्वयं कल्पनीयम्। यावत्कालं न प्रतिभोत्पत्तिस्तावत्कालं प्रतिबन्धकमदृष्टमासीत्, पुनर्व्युत्पत्त्यभ्यासाभ्यां दुरदृष्टसमाप्तौ क्लृप्तव्युत्पत्त्यभ्यासयोरेव प्रतिभाहेतुत्वकल्पने (प्रतिबध्यप्रतिबन्धकभाव-कल्पनाया अभावात्) लाघवात्। अतो व्युत्पत्त्यभ्यासावपि प्रतिभां प्रति कारणमित्येव युक्तम्।

ननु कारणतानिर्णयोऽन्वयव्यतिरेकाभ्यां जायते। परं यत्रादृष्टात् प्रतिभोत्पत्तिस्तत्र व्युत्पत्त्यभ्यासरूपकारणाभावेऽपि प्रतिभारूपकार्योत्पत्तिदर्शनाद् व्यतिरेकव्यभिचारः स्यात्, विलक्षणप्रतिभां प्रति अदृष्टं विलक्षणप्रतिभां प्रति व्युत्पत्त्यभ्यासौ कारणमिति स्वीकारे व्यभिचाराभावात्। अत्र कार्यतावच्छेदकं प्रतिभागतं वैलक्षण्यम्। अर्थात् प्रतिभा कार्यम्, कार्यता प्रतिभायाम्, तदवच्छेदकं प्रतिभागतं वैलक्षण्यम्। अर्थाद् अदृष्टाव्यवहितोत्तरजायमानत्वं व्युत्पत्त्यभ्यासाव्यवहितोत्तरजायमानत्वञ्च। इत्थम्– अदृष्टाव्यवहितोत्तरजायमानां प्रतिभां प्रति, अदृष्टं कारणम्। व्युत्पत्त्यभ्यासाव्यवहितोत्तरजायमानां प्रतिभां प्रति व्युत्पत्त्यभ्यासौ कारणमिति कार्यताऽवच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्न व्यभिचार इति।

न चेत्थमदृष्टजन्यव्युत्पत्त्यभ्यासजन्येति भेदात् प्रतिभाद्वयस्वीकारे एकस्याः काव्योत्पत्तावपरस्या अभावे पुनः व्यतिरेकव्यभिचार इति वाच्यम्, कवितां प्रति कारणतावच्छेदकस्य प्रतिभात्वस्य सत्त्वात्। ''ययोर्विशेषेण कार्यकारणभावस्तयोः सामन्येनापि'' इति न्यायात् सामान्येन

कार्यकारणभावस्वीकारात्। अथवा विलक्षणादृष्टजन्यप्रतिभाव्यवहितोत्तरजायमानं काव्यं प्रति, अदृष्टजन्यप्रतिभाकारणम्, एवं व्युत्पत्त्यभ्यासजन्यप्रतिभाव्यवहितोत्तरजायमानं काव्यं प्रति व्युत्पत्त्यभ्यासजन्या प्रतिभा कारणमिति विशेषेणापि कार्यकारणभावस्वीकारे व्यभिचाराभावात्।

न च यत्र व्युत्पत्त्यभ्यासात्मककारणसत्त्वेऽपि न प्रतिभारूपकार्योत्पत्तिस्तत्र कारणसत्त्वेऽपि कार्याभावादन्वयव्यभिचार इति वाच्यम्। विलक्षणव्युत्पत्त्यभ्यासाभ्यामेव प्रतिभोत्पत्तिस्वीकारात्, तत्र तादृशवैलक्षण्ये मानाभावेनादोषात् (तयोः कारणतावच्छेदकानवच्छिन्नत्वात्)। अर्थात् प्रतिभां प्रति विलक्षणव्युत्पत्त्यभ्यासौ कारणम्, कारणता तयोः, कारणताऽवच्छेदकं वैलक्षण्यं तदनवच्छिन्नत्वात् (तदभावात्) न व्यभिचारः।

न च व्युत्पत्त्यभ्यासवृत्तिवैलक्षण्यमदृष्टासहकृतत्वमेव, तस्य च तयोः सत्त्वात् कथं वैलक्षण्ये मानाभाव इति वाच्यम्, पापविशेषस्य तत्र प्रतिबन्धकत्वकल्पनाददोषात्। न च भवन्मते प्रतिबन्धकादृष्टाभावस्य कारणताकल्पने गौरवमिति वाच्यम्, प्रतिबन्धकाभावस्य समुदितशक्त्यादित्रयहेतुतावादिनो मम्मटस्य शक्तिमात्रहेतुतावादिनो मम च तुल्यरूपेण स्वीकार्यत्वात्। प्रतिवादिना मन्त्रादिभिः कृते कतिपयदिवसव्यापिनि वाक्स्तम्भे विहितानेकप्रबन्धस्यापि कवेः काव्यानुदयस्य दर्शनादिति पण्डितराजः।

## अनयोर्भेदः

प्रकाशकृन्मते काव्यं प्रति शक्तिव्युत्पत्त्यभ्यासाः समुदिताः दण्डचक्र–चीवरादिन्यायेन कारणम्। एतदेव बोधयितुं सूत्रे "इति हेतुस्तदुद्भवे" इत्यत्र हेतुरित्येकवचनमुपात्तम्।

अयं भावः – 'इति हेतुस्तदुद्भवे' इति कारिकांशं व्याकुर्वन् मम्मटः "त्रयः समुदिताः हेतुः इति प्राह। तत् कथं सङ्गच्छते? यतो हि विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्। अतो "हेतवः" इति वक्तव्यं स्यात्। मैवम्, यत्र विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयसंख्याविरूद्धसंख्याया अविवक्षितत्वम्, तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः (अत्र विभक्तितात्पर्यविषयेत्यस्य विभक्तिजन्यबोधविषय-त्वेनेच्छाविषयेत्यर्थः)। अत्र विशेष्यवाचकपदं त्रय इति, तदुत्तरविभक्तिः जस् इति, तत्तात्पर्यविषयसंख्या बहुत्वसंख्या, तद्विरूद्धसंख्या एकत्वसंख्या, सा विवक्षितैवातो नात्र समानवचनकत्वनियमः। यतो ह्यत्र हेतुपदं कार्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वित-

मेकवचनार्थः। अत एव शक्तिव्युत्पत्त्यभ्यासानां समुदितानां दण्डचक्रचीवरादिन्यायेन कारणता। ''हेतवः'' इत्युक्तौ पृथक्–पृथक् तृणारणिमणिन्यायेन प्रत्येकस्मिन् कारणतायां सत्यामेकैकसमवधानेऽपि कार्योत्पत्तिः स्यादिति तन्नाभिप्रेतमिति सूचनायैकत्वं विवक्षितम्।

पण्डितराजमते काव्यं प्रति केवलं प्रतिभा कारणम्। प्रतिभां प्रत्यदृष्टं व्युत्पत्यभ्यासौ च पृथक्–पृथक् तृणारणिमणिन्यायेन कारणमिति। प्रतिभा च–

**स्मृतिर्व्यतीतविषया मतिरागाभिगोचरा।**
**बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता।।**
**प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः।।**

(रुद्रकोशः)

अपि च

**द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविवर्त्म च।**
**प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम्।।** इति।

(काव्यद०)

शक्तिः प्रतिभेत्यनर्थान्तरम्। तथा हि— प्रतिबन्धकाभावस्य कारणतानिरूपणावसरे स्वयं जगन्नाथो भणति—

''प्रतिबन्धकाभावस्य च कारणता समुदितशक्त्यादित्रयहेतुतावादिनः शक्तिमात्रहेतुतावादिनश्चाविशिष्टेति''।

अत्र समुदितशक्त्यादित्रयहेतुतावादी मम्मटः। शक्तिमात्रहेतुतावादी जगन्नाथः। जगन्नाथश्च ''तस्य च कारणं केवला कविगता प्रतिभा'' इत्यादिनिरूपितवान्। यदि शक्तिप्रतिभयोर्भेदः स्यात्तन्मते तदा आदौ प्रतिभायाः कारणत्वं निरूप्य पुनः उभयमते गौरवाभावमागूरयन् ''शक्तिमात्रहेतुतावादिनश्चाविशिष्टा'' इति कथनमसङ्गतं स्यात्।

## विमर्शः

पण्डितराजस्येयं मान्यता न सर्वथा स्वोपज्ञतामासज्जते। प्रत्युतराजशेखरेण काव्यमीमांसायां पूर्वमेवैतदभिहितम्, समाधिः कवेरान्तरः प्रयत्नः, अभ्यासो बाह्यः। समाध्यभ्यासौ शक्तिमुद्भासयतः।

**''सा केवलं काव्ये हेतुः''।** (का०मी०, पृ० २७)

शक्तिरेव केवलं काव्यं प्रति हेतुः, इति यायावरीयः। अपि च स्मृतिः मतिः प्रज्ञेति त्रिविधाऽपि बुद्धिः कवीनामुपकर्त्री। दुर्बुद्धेस्तु न किञ्चित्प्रतिभाति।

परं सरस्वतीकृपाकटाक्षेण सोऽपि कविर्भवितुमर्हति—

"यदि सारस्वतोऽनुभावः प्रसादयति तमौपनिषदिके वक्ष्यामः" (काव्यमीमांसा– पृ० २६) इत्युक्तेः। एतेन ध्वनितं यत् काव्यं प्रति शक्तिर्हेतुः, शक्तिं प्रति सारस्वतोऽनुग्रहः (अदृष्टम्) इति।

परमग्रे राजशेखरोऽपि कारयित्रीं प्रतिभां सहजाऽऽहार्यौपदेशिकीभेदात् त्रिधामुपपाद्य तद्वशात् कविरपि सारस्वताभ्यासिकौपदेशिकभेदात् त्रिविध इत्युपपेदे। तेषु—

**"सारस्वतः स्वतन्त्रः स्याद् भवेदाभ्यासिको मितः।**
**औपदेशिककविस्त्वत्र वल्गु फल्गु च जल्पति।।**

उत्कर्षः श्रेयान् इति यायावरीयः। स चानेकगुणसन्निपाते भवति"।

(काव्यमीमांसा पृ० ३१)

इत्युपपादितदिशा व्यज्यते यत्सोऽपि शक्तिव्युत्पत्त्यभ्याससमवाये एव काव्योत्कृष्टतामादिशति। यतो हि केवलाभ्यासवशात् परिमितकाव्यमुद्भवति। औपदेशिकश्च मधुरं परं तुच्छमभिधत्ते। अनेकगुणसन्निपात एव काव्ये उत्कृष्टता आयाति। परन्तु—

**बुद्धिमत्त्वं च काव्याङ्गविद्यास्वभ्यासकर्म च।**
**कवेश्चोपनिषच्छक्तिस्त्रयमेकत्र दुर्लभम्।।**

(काव्यमीमांसा, पृ० ३)

इत्यादिना यद् दौर्लभ्यमुक्तं तत्तु स्यादेव। अपरत्र चानन्दवर्धनाचार्यमते प्रतिभाम्, मङ्गलमते व्युत्पत्तिं श्रेयसीमाह— "प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ, इति यायावरीयः" (काव्यमीमांसा, पृ० ३८–४०) इत्यादिना द्वयोरावश्यकत्वं व्याजहार। प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते।

हेमचन्द्रोऽपि केवलां प्रतिभां काव्यं प्रति हेतुं निरूपयति—

"व्युत्पत्त्यभ्यासौ प्रतिभां संस्कुरुतः। तथा हि प्रतिभाऽस्य हेतुः 'व्युत्पत्त्यभ्यासाभ्यां संस्कार्या। न तु काव्यस्य साक्षात्कारणम्, प्रतिभोपकारिणौ तु भवतः"। (काव्यानुशासनम्, पृ० ५–६)

इत्थं ज्ञायते यत् केवलादृष्टवशात् प्रतिभोत्पत्तौ भवेन्नाम काव्योद्भवः परमनुपहसनीयकाव्यप्रसारे त्रय एव परं व्याप्रियन्ते। अत एव वाग्भटः प्राह—

**प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्।**
**भृशोत्पत्तिकृदभ्यास इत्याद्यकविसङ्कथा।।**

(वाग्भटालङ्कारः, १/३)

**भामहस्तु**

**''काव्यं तु जातु जायेत कस्यचित्प्रतिभावतः''**। (काव्यालङ्कार १/५)

तथा च-

**शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।**
**लोको युक्तिः कलाश्चेति मन्तव्या काव्यगैर्ह्यमी।।**

**शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम्।**
**विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः।।**

(काव्या०, १/९/१०)

इत्याद्युक्त्या क्रमशः प्रतिभां व्युत्पत्तिमभ्यासं च कारणतयाङ्गीकरोति। तत्र सर्वेषां समुच्चयात् न पृथक् कारणतेति प्रतीयते।

दण्डी च–

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः।।**

(काव्यादर्शः, १/१०३)

इति काव्यकारणं निरूपयन् व्याजहार। यद्यप्यत्र शब्दभेदो वर्तते तथापि प्रतिभाव्युत्पत्त्यभ्यासा एव कारणतयाभिमता अस्येति नाविदितचरं प्रतिभावताम्। परमयं प्रतिभाभावेऽपि श्रुतयत्नाभ्यां काव्योद्भवं स्वीकुरुते—

**न विद्यते यद्यपि पूर्ववासना गुणानुबन्धिप्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।।**इति।

(काव्यादर्शः १/१०४)

तथापि प्रतिभाऽभावे श्रुतयत्नाभ्यां कवित्वं कृशमेवेति तन्मतम्, कृशे कवित्वेऽपीत्युक्तेः। तदेतदभिहितं मम्मटेन—

''शक्तिः कवित्वबीजरूपः संस्कारविशेषः। यां विना काव्यं न प्रसरेत्, प्रसृतं वा उपहसनीयं स्यात्''। (काव्यप्रकाशः पृ०१२)

**रुद्रटोऽपि**

**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य।**
**अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः।**

(काव्यालङ्कारः, १/१०५)

इति व्याहृत्य पुन:—

**प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति।**
**उत्पाद्या तु कथञ्चिद् व्युत्पत्त्या जन्यते परया।।**

(तत्रैव)

इति व्याजहार। एतन्मते शक्तिर्द्विधा सहजा, उत्पाद्या च। तत्र सहजा तु स्वाभाविकी परमुत्पाद्यां शक्तिं प्रति व्युत्पत्ति: कारणम्।

**वामनश्च–**

**''लोको विद्या प्रकीर्णं च काव्याङ्गानि''** (काव्यालङ्कारसूत्रम् १/३/१)

इति सूत्रमारभ्य–

**''कवित्वबीजं प्रतिभानम्''**। (तत्रैव, १/३/१६)

**जयदेवश्च**

**प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।**
**हेतुर्मृदम्बुसम्बद्धा बीजमाला लतामिव।।**

(चन्द्रालोक:, १/६)

इति काव्यप्रकाशमेवानुससार। काव्यदर्पणस्तु काव्यप्रकाशस्य टीकैवेति न तत: पृथग् निरूपणमर्हति।

आनन्दवर्धनस्तु यद्यपि काव्यकारणं न न्यरूपयत्, तथापि प्रसङ्गतो यत् किञ्चिदवोचत्, तेनेदं निर्धार्यते यत्– शक्तिमन्तरा अदुष्टं काव्यं न जायते। व्युत्पत्त्यभावे जातो दोष: कवे: शक्त्या संवृतो भवति, परमशक्तिकृतो दोष: संवरीतुमशक्य: सहृदयवैमुख्याधायक इति। तथा हि—

**अव्युत्पत्तिकृतो दोष: शक्त्या संव्रियते कवे:।**
**यत्त्वशक्तिकृतस्तस्य झटित्येवावभासते।।**

(ध्वन्यालोक:, ३१६ पृ०)

अत्र लोचनकार:–''शक्ति: प्रतिभानं वर्णनीयवस्तुविषयनूतन-तयोल्लेखशालित्वम्। व्युत्पत्तिस्तदुपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलमिति'' निजगाद।

(तत्रैव, पृ०३१७)

एवं काव्यं प्रति शक्तेरावश्यकत्वं सिद्धम्। परमन्यत्र ध्वन्याभासविवेकप्रस्तावे यदाह—

**अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।**
**शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः।।**इति।

(ध्वन्यालोकः २/३२)

तेन प्रतीयते यत् काव्यात्मभूतध्वनिनिष्पत्तये शक्तिव्युत्पत्ती उभे अपेक्षिते, अन्यथा व्युत्पत्त्याऽपि कृतो गौणलाक्षणिकशब्दप्रयोगो ध्वनिनिष्पादनेऽसमर्थः सहृदयानुद्वेजयति।

**अग्निपुराणेऽपि–**

**कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा।**
**व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः।।**

इत्याद्युक्त्या शक्तिव्युत्पत्तिविवेकानां काव्येऽतिशयाधानायापेक्षेति विभाति।

अच्युतरायस्तु प्रायः पण्डितराजमेवानुरसन्नेकेन पद्येन काव्यकारणमाह—

**"तद्धेतुस्तत्स्वरूपानुकूला शब्दाद्युपस्थितिः।**
**सा देवतादिकृपया शास्त्राभ्यासादितोऽथवा"।।**

(साहित्यसारः, १/३४)

इत्थमाचार्याणां द्विधा परम्परा लक्ष्यते। केचन शक्तिमात्रहेतुतावादिनः, अपरे समुदितशक्त्यादित्रयहेतुतावादिनः। तेषु शक्तिमात्रहेतुवादिनः–राजशेखर–रुद्रट–हेमचन्द्रादयः। समुदितशक्त्यादित्रितय-हेतुतावादिनः – अग्निपुराणकारः, भामहः, दण्डी, वाग्भटः, वामनः, जयदेवः, राजचूडामणिश्चेति। राजशेखरोऽपि विलक्षणकाव्यनिष्पत्तये शक्तिव्युत्पत्ती अपेक्षत एव। एवं सिद्धम् – समुदितशक्त्यादित्रयहेतुतावादिनां मतमनुसृत्य मम्मटस्तथाऽभिधत्ते, शक्तिमात्रहेतुतावादिनोऽनुसृत्य पण्डितराजस्तथेति।

वस्तुतो मेधाविरुद्रकुमारदास(उभौ जात्यन्धौ) ध्रुवकर्णपूरप्रभृतीनां काव्यकर्तृत्वदर्शनात् सिद्धा केवलायाः प्रतिभायाः कारणता। तथा हि — "पञ्चवर्षदेशीयो ध्रुवो यदा तपसा भगवन्तं साक्षात्कृत्य तद्रूपमंक्षिलक्षीकृत्य विस्मितः सन् स्तोतुं न शशाक, तदा परमकारुणिको भगवान् कृपया स्वकम्बुना तत्कपोलं पस्पर्श।"

(श्रीमद्भागवतम् ४/९/४)

तत्स्पर्शाद् व्युत्पत्त्यभ्यासयोरभावेऽपि तन्मुखाद् "योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तम्" इत्यादिकविभारती प्रसृतेति पुराणप्रसिद्धमैतिह्यम्।

एवं देवीभागवतेऽपि एका कथा वर्णिताऽस्ति। आसीत् कश्चन मूढो वने देवीमन्दिरपार्श्वे स्थितस्तत्राकस्माद् व्याघ्र आयातः। स मूढस्तं वीक्ष्य भयाकुलितः सन् "ए ए" इत्यवोचत्, तच्छ्रुत्वा महामाया एवममन्यत, यदयमनुस्वारविहीनं मम बीजं स्मरतीति झटिति प्रादुर्भूय तं व्याघ्रं विद्राव्यास्मै वरं ददौ। स सरसकाव्यरचनाशीलः कविरभूदिति।

अनेन वर्णनेन प्रतीयते यद्देवताप्रसादादिजन्यादृष्टेन प्रतिभोत्पद्यते, तया च काव्यमिति नास्ति विप्रतिपत्तिस्तथापि विलक्षणानुपहसनीयोत्कृष्ट-काव्यस्योद्भवाय समुल्लासाय च समुदितशक्त्यादित्रय एव हेतुः।

## शक्तिभेदः

शक्नोति काव्यं कर्तुं विचारयितुमनयेति शक्तिः। एवं शक्तिर्द्विधा—काव्यकारिका कारयित्री, भाविका भावयित्री च। कारिका कविषु, भाविका सहृदयेषु जायते। तत्र द्वयोरेकत्र सन्निवेशः सुतरां दुर्लभः। अत एव कश्चन कविरेव, कश्चन आलोचक एवेति। तथा हि कविकुलगुरुः कालिदासो रघुवंशमहाकाव्यं निबध्नन् गुणदोषविवेचकान् भावकान् श्रोतुं प्रार्थयति—

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।।**

(१/१०)

एवमभिज्ञानशाकुन्तलेऽपि—

**आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।**
**बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः।।**

(१/२)

अर्थात् कविः काव्यं करोति तस्य गुणदोषविवेचकास्तु भावका एव। हेम्नो विशुद्धिरथवा श्यामिका अग्नौ संल्लक्ष्यते। एवं प्रयोगविज्ञानस्य साधुत्वं विदुषां परितोषे सत्येवोपपद्यते। एवमुभयथा सिद्धं यत्- कारिका शक्तिः काव्यमुद्भावयति, भाविका शक्तिस्तस्य गुणदोषविवेचने क्षमतामादधाति। द्वयोरेकत्र समावेशः कुत्रचिदेव सौभाग्यातिशयवशान्महामहिमशालिनि लक्ष्यते। यथोक्तमेव राजशेखरेण—

**कश्चिद्वाचं रचयितुमलं श्रोतुमेवापरस्तां**
**कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति।**
**नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-**
**मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः।।**

(काव्यमीमांसा, अ०४, पृ०३३)

परं सौभाग्यादुभयविधशक्तिसम्पन्नः पण्डितराज आसीद्, यस्य वस्तुविवेचनरीतिरतीव सूक्ष्माऽस्ति अतिगहनतरमपि विषयं सहजतया यथा विविनक्ति तथैव स आसेतुहिमालयं वाचामाचार्यतायाः पदमप्यनुभवति। मम्मटाचार्यस्तु– विषयोपपादने लब्धसामर्थ्योऽतिस्फुटपदमर्थगौरवयुतं प्रकाशं तथा निरमीयत यथाऽऽकरग्रन्थतया लोके प्रकाशो व्यवहृतोऽभूत्। तथा पदवाक्यप्रमाणशास्त्रविद्भिः सर्वैः समादृतश्चाभूत्। मम्मटश्च वाग्देवतावतारत्वेन ख्यातोऽपि कवित्वशक्तिविरहित इव लक्ष्यते।

तत्र कारिकाशक्तिः सहजा, तया काव्योत्पादेऽपि व्युत्पत्तिमन्तरा भाविकाया अभावाद् रसानुगुणरचनाविरहादुत्कृष्टानुपहसनीयकाव्यस्योद्भवः समुल्लासश्च न स्यात्, विलक्षणकाव्यत्वाधानायैवाभ्यासोऽपेक्षित इति समुदितशक्त्यादित्रयहेतुतैव विलक्षणकाव्यं प्रति युक्तेति।

अत एव गङ्गाधरशास्त्रिणः –

**''प्रतिभा कारणं तत्र व्युत्पत्तिस्तु विभूषणम्।**
**भृशोत्पत्तिकृदभ्यासः – – – – – ।।**

इति रीत्या विलक्षणकाव्यं प्रति तृणारणिमणिन्यायेन समुदितशक्त्यादित्रितयकारणतावाद एवोचितः। शक्तिर्द्विधा— उत्पादिका व्युत्पादिका च। उत्पादिक्या पदसमुदायस्य गुम्फनेऽपि व्युत्पादिकाया अभावे सहृदयहृदयावर्जकविलक्षणवाक्यार्थबुद्ध्युत्पादकताया असम्भवात् कविनिष्ठस्य लोकोत्तरवर्णनानैपुण्यस्याभावात्, तत्सत्त्वे एव विशिष्टकविकर्मतासम्भवात्। सा च निपुणतैव। एवमभ्यासोऽपि लोकोत्तरत्वं प्रत्येवोपयुज्यते। तथा समुदितशक्त्यादित्रितयसत्त्वे एव लोकोत्तरवर्णनानिपुणताविशिष्टकविकर्मरूपं काव्यं जायत इति निगदन्ति।

## नागेशभट्टाश्च

''विलक्षणत्रितयजन्यप्रतिभा चातिविलक्षणा, तज्जन्यं काव्यं चातिविलक्षणमेवेति (केवलान्महापुरुषप्रसादाद् बालादेः प्रतिभोत्पत्तावपि) न दोषः'' (गुरुमर्मप्रकाशः– पृ० १३) इति प्रणिजगदुः। अर्थात् – केवलया प्रतिभया काव्योत्पत्तावपि विलक्षणं काव्यं तु शक्त्यादित्रितयसमवधान एव जायत इति।

तदयं निष्कर्षः –''शक्तिः कवित्वबीजभूतः संस्कारविशेषः, यां विना काव्यं न प्रसरेत्, प्रसृतं वोपहसनीयं स्यात्'' इत्युक्त्या मम्मटोऽपि व्यतिरेकविधया शक्तिमेवानुपहसनीयकाव्यं प्रति कारणं मनुते। पण्डितराजोऽपि

केवलां कविगतां प्रतिभां हेतुं ब्रवीति। अत्र तु द्वयोरैक्यम्। परं वामनमम्मट-जयदेवादिमते शक्तिः कवित्वबीजभूताऽत उपादानकारणम्, व्युत्पत्यभ्यासौ च निमित्तकारणम्। पण्डितराजमते तु विलक्षणशब्दः काव्यम्, कारणं च प्रतिभा, सा च काव्यघटनानुकूलशब्दार्थोपस्थिति–(शब्दार्थयोः स्मृति)–रूपा न तु शब्दरूपा, अतो निमित्तकारणम्।

परमग्रे ''त्रयं समुदिता, न व्यस्ता, हेतुर्न तु हेतवः'' (काव्यप्रकाशः-३, वृत्तौ)। इत्युक्त्या मम्मटमते विलक्षणकाव्यं प्रति समुदितशक्त्यादित्रयं हेतुः सिद्ध्यति, पण्डितराजमते व्युत्पत्त्यभ्यासौ विलक्षणप्रतिभां प्रत्येव कारणम्, न तु काव्यं प्रतीति वैमत्यम्।

तत्र विचार्यमाणे सतीदं युक्तं प्रतिभाति यद् वस्तुतः काव्यनिर्माणं शक्त्या ''नवनवोन्मेषशालिन्या प्रज्ञया अपूर्वनिर्माणक्षमया प्रज्ञया (प्रतिभया) वा, एवोपजायते।'' व्युत्पत्त्यभ्यासादिना प्रतिभायामेव वैशिष्ट्यं जायते। यतो हि निपुणता व्युत्पत्तिः, दृढतरसंस्कारोऽपि दृढं ज्ञानं जनयति। अभ्यासेनापि दृढतरसंस्कारो, दृढा बुद्धिर्जायते। अतो व्युत्पत्यभ्यासौ प्रतिभां संस्कुरुत इति समीचीनम्।

इत्थं व्युत्पत्त्यभ्याससंस्कृतप्रतिभैव प्रतिभाविशेषपदेनाभिधीयते। प्रतिभाविशेष एव दोषहानगुणोपादानाऽलङ्कारयोगरसावियोगविशिष्टकाव्यनिर्माणे क्षमा। तदाहुः सहृदयहृदयेऽनश्वरीं प्रतिष्ठामाप्त आनन्दवर्धनाचार्यः—

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।**
(ध्वन्यालोकः १/६)

स्फुरता प्रतिभाविशेषेणैव महाकवित्वलाभो महाकवीनाम्।।

अभिनवगुप्तश्च—प्रतिभा अपूर्वनिर्माणक्षमा प्रज्ञा, तस्या ''विशेषे रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम्''। अर्थात् (रसस्य य आवेशः साक्षात्कारः, तत्सम्बन्धि (तदुपयोगि) यद् वैशद्यं नैर्मल्यं दोषरहितत्वे सति माधुर्यादिगुणवत्त्वं तेन चमत्कृत्याधायकत्वं यस्य काव्यस्य तस्य निर्माणे क्षमत्वम्। ''तेन प्रतिभाविशेषेण निमित्तेन महाकवित्वगणनेति'' (ध्व०, लोचने पृ०९२)

''कार्यंनिदानाद्धि गुणानधीते'' इति श्रीहर्षोक्तिमनुसृत्य वक्तुं शक्यते यद् यादृशं निमित्तं तादृशं कार्यम्। विलक्षणकार्योत्पत्तये निमित्तवैलक्षण्यमपेक्षितमेव।

अपि च कान्तासम्मिततया शास्त्रीयदुरूहतत्त्वानां सुखेनोपदेशार्थं कृते महाकाव्ये गिरिनगरीनद्युदधिवनऋतु–भूगोल–खगोल–सूर्योदयास्तादिस्त्रीपुरुष–

गज–वाजिसैनिक–शिविरसन्निवेश–विविधविहार–धर्मार्थकाममोक्षादीनामन्येषां च वर्णनमपेक्षितम्। तद् व्युत्पत्त्यभ्याससंस्कृतप्रतिभयैव सेत्स्यतीति।

यदि संस्कारविशेषः शक्तिः, निपुणताऽभ्यासावपि संस्कारविशेषावेव, तदा तु प्रतिभायामतिशयाधानाय त्रितयमेवापेक्षितम्। अतो मम्मटमतं ज्यायः। कल्पनेयं न सर्वथा नवीना, राजशेखरोऽपि प्रतिभाव्युत्पत्तिभ्यां पृथगेव शक्तिमङ्गीकरोति—

''विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम्। शक्तिकर्तृके हि प्रतिभाव्युत्पत्तिकर्मणी। शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते'' इत्याद्युक्त्या। (काव्यमीमांसा – पृ० २७)

पण्डितराजोऽपि अदृष्ट-(संस्कारविशेष)समुद्भवं व्युत्पत्त्यभ्याससमुद्भवञ्चेति प्रतिभाद्वयं स्वीकृत्य तदुक्तं सञ्जग्राह। येषामदृष्टसमुद्भवा व्युत्पत्त्यभ्याससमुद्भवा च—द्विविधा प्रतिभा, त एव विलक्षणकाव्यनिर्माणक्षमतामापन्नाः महाकवयो नान्ये। अत एव—

''एतस्मिन्नतिविचित्रकविपरम्परावगाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवयः गण्यन्ते''। (ध्वन्यालोकः, १/६)

इत्यानन्दवर्धनोक्तिः सङ्गच्छते। परं मतेऽस्मिन् शक्तिप्रतिभयोर्भेदात् ''समुदितशक्त्यादित्रयहेतुतावादिनः, शक्तिमात्रहेतुतावादिनश्चाविशिष्टा'' इति पण्डितराजोक्तिरसङ्गता स्यात्।

अपि च – पण्डितराजमतं परिणतमतीनामेव बुद्धिगम्यम्, मम्मटमतं तु सुकुमारमतीनामपि सुबोधतया समीचीनमिति शिवम्।

## काव्यस्वरूपम्

तदेवंविधदृष्टादृष्टार्थप्रयोजनकस्य प्रेक्षावद्भिः समादृतस्य काव्यस्य किं तावत् स्वरूपमिति जिज्ञासायामाह मम्मटाचार्यः—

''तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'' इति। अत्र स्वं लक्ष्यपदार्थः रूप्यते इतरव्यावृत्ततया ज्ञायतेऽनेनेति स्वरूपं लक्षणम्, इतरभेदग्राहकम्।

अत्र लक्षणे 'तत्' शब्दस्य पूर्वपरामर्शकत्वात् पूर्वं च – ''काव्यं यशसे'' इत्यादौ काव्यस्य प्रकृतत्वात् तत् काव्यमित्यर्थः। एवं दोषाभावगुणालङ्कारादिविशिष्टौ शब्दार्थौ काव्यम् – इति लक्षणं सम्पन्नम्। रसोद्बोधकत्वस्योभयत्र सत्त्वात् ''काव्यं श्रुतं बुद्धमित्युभयविधव्यवहारदर्शनाच्च शब्दार्थौ काव्यम्। अत्र दोषरहितं काव्यं

दुर्लभम्, तथा च भवद्भिरेवोत्तमकाव्यतयोदाहृतानां "निःशेषच्युतचन्दनमि"त्यादिकाव्यानां विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्।

**अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्।**
**न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति।।**

(श्लो०वा०)

इत्यभियुक्तोक्तेः स्तनतटमित्युद्देश्यस्य प्रथमं वक्तुमुचितत्वात् तथाऽकरणादिति। दोषत्वमुद्देश्यप्रतीतिप्रतिबन्धकत्वम्। तच्च तत्तद्व्यङ्ग्यवाच्यवैचित्र्यविरहविशिष्टदोषस्यैव ज्ञेयम्। निःशेषेत्यादौ विशिष्टाभावसत्त्वान्न दोषः। गुणानां रसमात्रधर्मत्वेन शब्दार्थयोः धर्माभावात् सगुणाविति शब्दार्थयोर्विशेषणमनुपपन्नमिति न शङ्क्यम्। गुणानां स्वाश्रयाभिव्यञ्जकत्वसम्बन्धेन शब्दार्थनिष्ठत्वात्। स्वं गुणः, तदाश्रयो रसस्तदभिव्यञ्जकत्वं शब्दार्थयोरिति। अनलङ्कृतीति सालङ्काराविति विशेषणं ग्राहयति, नञः ईषदर्थकतयाऽस्फुटत्वे पर्यवसानात्। तदाह ग्रन्थकारः– "सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः" इति। स्फुटस्यास्फुटस्य वाऽलङ्कारस्य सर्वत्रापेक्षितत्वात्।

**तत्रभवान् पण्डितराजः–**

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति काव्यलक्षणं व्यधात्। अत्र काव्यत्वमुद्दिश्य विशिष्टशब्दत्वं विधीयते। अनुरागादिरूपरमणीयार्थप्रतिपादके कामिनीकटाक्षादावतिव्याप्तिवारणाय शब्द इति। घटानयनाद्यर्थप्रतिपादके "घटमानय" इत्यादिवाक्येऽतिव्याप्तिनिरासाय रमणीयेत्यर्थविशेषणम्। रमणीय(साधु)शब्दप्रतिपादके पदशास्त्रे व्याकरणेऽतिप्रसक्तिनिरासाय अर्थेति। रमणीयार्थप्रतिपादकानां वाचक-लक्षक-व्यञ्जकानां सामान्यतयोपादानाय प्रतिपादक इति। रमणीयार्थः शब्दः काव्यमित्युक्त्या रमणीयोऽर्थो यस्येति विग्रहे यस्येति सम्बन्धे षष्ठीसत्त्वात् सम्बन्धश्च शब्दस्यार्थेन सह वाचकत्व–लक्षकत्व–व्यञ्जकत्वाद्यनेकविधस्तेषां सर्वेषां ग्रहणाय स्फुटावगतये प्रतिपादक इति। एवं रमणीयार्थप्रतिपादकत्वे सति शब्दत्वं काव्यत्वमिति फलितम्।

परं लोकरुचिवैचित्र्यात् किमपि वस्तु कस्मैचिद्रोचते, अपरस्मै नेति अर्थनिष्ठरमणीयताया अव्यवस्थितेः काव्यत्वमप्यव्यवस्थितं स्यात्। अपि च "यथा घटरूपस्यार्थस्य प्रतिपादको घटशब्दस्तथा रमणीयस्यार्थस्य प्रतिपादको रमणीयशब्दोऽतस्तत्रापि (रमणीयशब्देऽपि) काव्यत्वापत्तिः। अत आह – "रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरतेति"। अर्थात् लोकोत्तराह्लाद

(अलौकिकानन्द)निष्ठजन्यतानिरूपितजनकतावज्ज्ञानविषयता। यदर्थविषयक-ज्ञानेनालौकिकानन्दो जायते, तस्य ज्ञानस्य विषयभूतोऽर्थो रमणीय इति रमणीयताया व्यवस्थितेः।

परम् आह्लादे विशेषणीभूतं लोकोत्तरत्वं सातिशयं (अपेक्षयोत्कृष्टम्) निरतिशयं (सर्वोत्कृष्टम्) वा। आद्ये तदपेक्षयाप्युत्कृष्टस्यानन्दस्य सम्भवादव्यवस्थितेः। अन्त्ये ब्रह्मानन्द एव तथाविधालौकिकानन्दः, तस्य च निर्विकल्पकसमाधावेवानुभूतेः सत्त्वात् काव्यत्वं पुनरलक्षितं स्यादतो लोकोत्तरत्वं व्याख्याति— "लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः" इति। आह्लादे विशेषणीभूतं लोकोत्तरत्वं जातिविशेषः, सहृदयहृदयप्रमाणकः, यस्य द्वितीयं नाम चमत्कारत्वमिति।

एतादृशचमत्कारे कारणमभिधत्ते– "कारणं च तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसन्धानात्मा"। अर्थात् चमत्कारत्वावच्छिन्ने (चमत्कारे) कारणं च भावनाविशेषः (इयं भावना नैयायिकाभिमतभावनाख्यसंस्कारतो भिन्ना)। कीदृशी सा? धारावाहिकज्ञानरूपेति– "पुत्रस्ते जातः" इति वाक्यार्थविषयकं ज्ञानं लौकिकमेवानन्दं जनयतीति न तस्मिन् वाक्ये काव्यतेति।

इत्थं काव्यत्वं परिष्करोति पण्डितराजः— चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, काव्यत्वमिति। अर्थात्– चमत्कारनिष्ठजन्यतानिरूपितजनकतावती या भावना, तस्या विषयो योऽर्थस्तस्य प्रतिपादकत्वे सति शब्दत्वं काव्यत्वमिति पर्यवस्यति। अत्र रमणीयतानिरूपणावसरे "लोकोत्तराह्लादजनकं ज्ञानमित्युक्तम्, पुनः ज्ञानं परित्यज्य "कारणं च तदवच्छिन्ने भावनाविशेष इत्युक्तम्, तत्र हेतुर्यत् कस्यचित् पुंसः काव्यार्थविषयकं तथेतरार्थविषयकमेकमेव समूहालम्बनात्मकं ज्ञानं जातम्, तज्ज्ञानमेकमेव तस्य विषयभूतोऽर्थो यथा काव्यार्थस्तथेतरार्थोऽपि। एवमितरार्थप्रतिपादकशब्दे काव्यत्ववारणाय भावनेत्युपात्तम्।

ज्ञानं स्यादितरार्थस्य कदाचित् सामग्रीबलेन, परं स्मृतिरूपं धारावाहिकज्ञानमितरार्थस्यापि भवितुं नार्हतीति। परं भावनाऽपि समूहालम्बनात्मिका भवतीति, इतरार्थस्यापि भावनायाम्, तस्या विषय इतरार्थोऽतस्तत्प्रतिपादकशब्दे काव्यत्वापत्तौ अतिप्रसक्तिः स्यादेवेति तद्वारणाय द्वितीयलक्षणमुपात्तम् – "यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकताऽवच्छेदकं तत्त्वम्" इति। यत्पदजन्यार्थप्रतीतिविषय–भूतार्थनिरूपितविषयितासमानाधिकरणं चमत्कारत्वावच्छिन्नजन्यता-निरूपितजनकतावच्छेदकं भावनात्वं काव्यत्वमिति फलितम्।

इदमपि लक्षणं न युक्तम्, यतो ह्यस्य लक्षणस्याननुगमकयत्पद–घटितत्वादननुगमकतया दुष्टत्वात्। लक्षणं ह्यनुगमकं भवति। अतस्तृतीयं लक्षणमुपात्तम्– "चमत्कारत्ववत्त्वं काव्यत्वम्" इति।

"कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन" इति नियमात् मतुबन्तात् चमत्कारत्ववत् शब्दाद् विहितस्य त्वप्रत्ययस्य सम्बन्धमात्रमर्थः। एवं चमत्कारत्वविशिष्टः शब्दः काव्यम्, वैशिष्ट्यं च स्वविशिष्ट-जनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण। स्वं चमत्कारत्वं तद्विशिष्टा भावनानिष्ठा जनकता (वैशिष्ट्यञ्च स्वाश्रयनिष्ठजन्यतानिरूपितत्वसम्बन्धेन। स्वं चमत्कारत्वं तदाश्रयश्चमत्कारस्तन्निष्ठजन्यतानिरूपिता जनकतेति समन्वयः) तस्या (भावनानिष्ठजनकतायाः) अवच्छेदको योऽर्थः (अत्रावच्छेद्यावच्छेदकयोः सामानाधिकरण्यनियमात्, अवच्छेद्याजनकता स्वरूपसम्बन्धेन भावनायाम्, अवच्छेदकोऽर्थश्च विषयितासम्बन्धेन भावनायामिति समानाधिकरण्यसिद्धिः) तस्य प्रतिपादकत्वे सति शब्दत्वं काव्यत्वमिति फलितम्।

लक्षणमिदं लघु "चमत्कारत्ववत्त्वमिति"। यद्यपि स्वविशिष्टेत्यत्रापि सर्वनाम्नोऽननुगमकस्य स्वशब्दस्योपादानमस्ति तथापि तन्न लक्षणघटकम्, अपि तु सम्बन्धघटकमिति नात्रातिव्याप्त्यव्याप्त्यसम्भवाननुगमकादिदोषाणां सम्भावना। एवञ्च—"समवायसम्बन्धावच्छिन्नचमत्कारत्वावच्छिन्नचमत्कारनिष्ठजन्यता-निरूपिता या समवायसम्बन्धावच्छिन्ना भावनात्वावच्छिन्ना, भावनानिष्ठाजनकता, तन्निष्ठा या स्वरूपसम्बन्धावच्छिन्नाऽवच्छेद्यता, तन्निरूपिता विषयितासम्बन्धाऽच्छिन्नाऽवच्छेदकताश्रयो योऽर्थस्तद्विषयकप्रतिपत्तिजनकत्वे सति शब्दत्व काव्यत्वमिति निष्कृष्टं लक्षणम्।

## शब्दार्थयोः काव्यत्वस्य निराकरणम्

इत्थं पण्डितराजः काव्यलक्षणं परिष्कृत्य मम्मटोक्तं काव्यलक्षणं खण्डशः खण्डयितुमुपक्रमते, तद्यथा— शब्दार्थौ काव्यमिति भामह-रुद्रट-प्रभृतयः प्राञ्चः, अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति यदाहुर्मम्मटभट्टास्तत्र शब्दार्थयोरुभयोः काव्यशब्दाभिधेयत्वे किं मानम्? शब्दस्य काव्यशब्दाभिधेयत्वे तु व्यवहार एव मानम्। "काव्यमुच्चैः पठ्यते" "काव्यादर्थोऽवगम्यते" "काव्यं श्रुतमर्थो न ज्ञातः" इत्यादि हि सार्वजनिको व्यवहारः। अर्थस्य पाठासम्भवात्, अर्थस्य श्रोत्रेन्द्रियविषयत्वाभावात्, पूर्वोक्तव्यवहारोऽसङ्गतः स्यादतो विलक्षणशब्द एव काव्यपदाभिधेयः।

न च समुदाये प्रवृत्तः शब्दोऽवयवेष्वपि अवयवावयविभावरूपमुख्यार्थसम्बन्धमूलकलक्षणया प्रवर्तते, तद्यथा– "तैलं भुक्तं" "घृतं भुक्तम्" "हस्ताग्रे हस्तः" "उत्तराः कुरवः," पूर्वे पाञ्चालाः" इत्यादिवत् शब्दार्थोभयवाचककाव्यशब्दस्य लक्षणया शब्दमात्रेऽपि व्यवहार इति वाच्यम्। शब्दार्थौ काव्यशब्दवाच्यावित्यत्र दृढतरप्रमाणाभावात्। काव्यशब्दशक्तिर्यदा शब्दार्थयुगलं बोधयेत्तदाऽन्यतरस्मिन्नर्थे प्रयुक्तः काव्यशब्दो लक्षणया तमर्थं बोधयेत्। परं शब्दार्थौ काव्यमित्यत्र दृढतरं किमपि प्रमाणं नोपलभ्यते, येन काव्यशब्दो लक्षणया तमर्थं बोधयेत्। परं शब्दः काव्यमित्यत्र व्यवहार एव प्रमाणमतः काव्यशब्दस्य "शब्दो" मुख्योऽर्थस्तद्बोधनाय लक्षणाया अनावश्यकत्वम्।

न च विलक्षणशब्दार्थौ काव्यमिति मम्मटोक्तिरेवात्र प्रमाणम्। (शब्दप्रमाणम्) विमतवाक्यस्य निराकरणीयत्वेनाश्रद्धेयत्वात्। एवं शब्दविशेष एव व्यवहारतः काव्यपदाभिधेयः सिद्धः। अतः शब्दार्थौ काव्यमित्यत्रेव शब्दविशेषः काव्यमित्यत्रापि दृढप्रमाणाभावात् (विनिगमकाभावात्) शब्दार्थयुगलमेव काव्यमिति मतं निराकृतम्। शब्दे व्यवहारस्य दृढप्रमाणस्योपलब्धेः।

न चास्वादोद्बोधकत्वं काव्यत्वम्, तच्च यथा शब्दे तथाऽर्थेऽपीत्युभयोः काव्यत्वमिति वाच्यम्। आनन्दवर्धनप्रभृतिसकलालङ्कारिकाणां रसाभिव्यञ्जकतया सम्मतस्य रागस्य सर्वेषां नाट्याङ्गानां च काव्यत्वापत्तेः। तेषामपि रसोद्बोधकत्वात्। तथा हि आनन्दवर्धनः ध्वन्यालोकस्य तृतीयोद्योते (त्रयस्त्रिंशत्तमकारिकावृत्तौ ४१७पृष्ठे) अवाचकस्यापि गीतशब्दादे रसादिलक्षणार्थाऽवगमदर्शनाद् इत्यादिप्राह। एतेन रसोद्बोधसामर्थ्यस्य व्यञ्जनस्य शब्दार्थयोरुभयोः सत्त्वात् शब्दार्थौ काव्यमित्यपास्तम्, रागादिष्वतिव्याप्तेः।

अपि च काव्यत्वं शब्दार्थयोर्व्यासज्यवृत्या वर्तते, उत शब्देऽर्थे च प्रत्येकस्मिन् पर्याप्तिसम्बन्धेन। तत्र नाद्यः, श्लोकवाक्यं न काव्यमिति व्यवहारापत्तेः। यतो हि व्यासज्यवृत्तित्वं नाम – (विविधमासज्य वर्तत इति-) एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वमिति। अर्थात् शब्दार्थौ काव्य-मित्यत्र काव्यत्वं शब्दार्थयोरुभयोः पर्याप्त्या वर्तते, तस्याश्च शब्दार्थावनुयोगिनौ काव्यत्वं च प्रतियोगि–इति शब्दार्थोभयत्वाऽवच्छिन्नानुयोगिताया अपेक्षितत्वात् केवले श्लोकवाक्ये एकत्वा–(शब्दत्वा)–वच्छिन्नानुयोगितायाः सत्त्वाद् व्यासज्यवृत्त्या तत्र काव्यत्वं न स्यात्। एकसत्त्वेऽपि द्वयं नास्तीति (एको न द्वाविति) व्यवहारस्येव श्लोकवाक्यस्य काव्यत्वानापत्तेः।

शब्दे चार्थे च प्रत्येकं पर्याप्त्या काव्यत्वं वर्तत इति स्वीकारे शब्देऽर्थे पृथक् पृथक् काव्यत्वस्य सत्त्वात् सर्वाभिमतेऽप्येकस्मिन् काव्ये काव्यद्वयव्यवहारापत्तेः। एवं चोत्तरासंख्या पूर्वां संख्यां बाधते इति नियमाद् एकं काव्यमिति प्रमात्मकप्रतीतेरुच्छेदापत्तेः।

इत्थं यथा शब्दविशेषो वेदः, शब्दविशेषः शास्त्रम्, शब्दविशेष एव पुराणं तथैव विलक्षणशब्द एव काव्यमिति।

**''अदोषौ सगुणावनलङ्कृती पुनः क्वापि'' इत्यस्य खण्डनम्**– अपि च काव्यसामान्यलक्षणप्रस्तावे गुणालङ्कारादीनां दोषाभावस्य च निवेशो न युक्तः। यतो हि गुणालङ्कारादिविशिष्टयोरेव काव्यत्वे दूत्यभिसारिका–विरहिणीसहचरीप्रभृतिभिरुदीरिते क्रमशोऽभिसरणविधि–निषेध-जीवनाभावमानपरित्यागवल्लभविहारादिरूपरमणीयार्थाऽभिव्यञ्जके ''उदितं मण्डलं विधोः'' इति काव्ये गुणालङ्कारादिवैधुर्यात् काव्यत्वानापत्तेः। एवं ''गतोऽस्तमर्कः'' इत्यादावपि ज्ञेयम्। न च ''उदितं मण्डलं विधोः'' ''गतोऽस्तमर्कः'' इत्यादिवाक्यमकाव्यमेवेति वाच्यम्, काव्यतया भवद्भिरभिमते निःशेषच्युतचन्दनं स्तनतटमित्यादावपि तथा वक्तुं शक्यत्वात्। काव्यस्य जीवातुभूतं चमत्कारित्वं यथा भवदभिमते गुणालङ्कारादिविशिष्टे ''निःशेषे'' इत्यादौ तथैव ''उदितं मण्डलं विधोः'' इत्यादावपि समानमेवातोऽस्याकाव्यत्वोपपादनमयुक्तम्।

अपि च लक्षणमनुगमकं भवति तत्राननुगमकस्य प्रवेशोऽनुचितः गुणत्व-मलङ्कारत्वञ्च स्वरूपसंख्याश्रयादीनामनियतत्वादननुगतम्। भरतो दशगुणानाह। वामनप्रभृतयो दशशब्दगुणान्, दशार्थगुणान् उपपादयन्ति। अग्निपुराणे च शब्दगुणाः सप्त, अर्थगुणाः षट्, उभयगुणाश्च षट्, इति एकोनविंशतिगुणा गणिताः। भोजराजश्च चतुर्विंशतिगुणानाह। भामहानन्दवर्धनोऽभिनवगुप्तः भवान् (मम्मटः) विश्वनाथादयश्च त्रीनेव गुणानाहुः। आश्रयविषयेऽपि विवाद उपलभ्यते। केचन सङ्घटनाश्रिता गुणाः, अपरे शब्दार्थाश्रिताः, इतरे रसाश्रिता इति विवदन्ते।

लक्षणविषयेऽपि विमतयो दृश्यन्ते, तथा हि—

**''आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्''** इति मम्मटः।

(काव्यप्रकाशः ८/)

**विश्वनाथश्च– ''चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते''**

(सा०द० ८/)

वामनादयोऽन्यथा लक्षणमूचिरे। इति निजगदतुः।

एवमलङ्कारविषयेऽपि बहवो मतभेदाः। तत्र संख्याविषये, यथा—

भरतः – चतुरोऽलङ्कारान् निर्दिदेश। दण्डी पञ्चत्रिंशत्, भट्टोद्भटः-एकचत्वारिंशत्, भोजराजो द्विसप्ततिः, हेमराजः पञ्चत्रिंशत्, वाग्भटालङ्कारकृद् वाग्भटः एकोनचत्वारिंशत्, एवं काव्यानुशासनकृद् वाग्भटः, (द्वितीयः) त्रिषष्टिः, मम्मटः सप्तषष्टिः, विश्वनाथोऽष्टसप्ततिः, भामहो मुख्यतयाऽष्टत्रिंशत्। अग्निपुराणे त्रयोविंशतिः मुख्याः, जयदेवः शतम्। अप्पयदीक्षितश्च त्रयोविंशदुत्तरैकशतमिति।

उक्तं च दण्डिना– "ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति" इति। केचन गुणालङ्कारयोरैक्यम्, अपरे पार्थक्यं वाञ्छन्ति। इत्थमनियतत्वादननुगमकानां गुणालङ्कारादीनां लक्षणे प्रवेशोऽनुचितः।

अपि च शब्दार्थयोरदोषाविति विशेषणमनुचितम्" दोषरहितयोरेव काव्यत्वे "दुष्टं काव्यम्" इति सार्वजनीनव्यवहारानुपपत्तेः। न च गुणालङ्कारसंस्कृतयोः शब्दार्थयोः "दुष्टयोरपि काव्यसादृश्याद् भाक्तः (गौणः लाक्षणिकः) दुष्टं काव्यमिति प्रयोग इति वाच्यम्। अदुष्टयोरेव (दोषरहितयोरेव) काव्यत्वे दृढतरप्रमाणाभावेन दुष्टं काव्यमिति वाक्यप्रयोगे मुख्यार्थबाधरूपलक्षणाबीजाभावात्, तस्य गौणलाक्षणिकत्वानुपपत्तेः।

न च "महीरुहस्य मूलावच्छेदेन विहङ्गमसंयोगं" शाखावच्छेदेन च तत्संयोगाभावं च निश्चित्य पक्षिसंयोगमव्याप्यवृत्तिं मत्वा नैयायिका विहङ्गसंयोगाभाववान् महीरुहो विहङ्गमसंयोगीति यथा व्यवहरन्ति, तथैवांशभेदेन दोषरहितत्वात् काव्यम्, अंशभेदेन दुष्टमिति व्यवहारे बाधकाभाव इत्यपि न शङ्क्यम्। मूले महीरुहो विहङ्गमसंयोगी न शाखायामिति प्रतीतिवदिदं पद्यं पूर्वार्धे दोषरहितत्वात् काव्यमुत्तरार्धे तु दोषविशिष्टत्वान्न काव्यमिति स्वारसिकस्य सर्वलोकानुभवस्याभावाद् दोषाभावस्याव्याप्यवृत्तित्व स्वीकारस्यानुचितत्वात्।

अपि च यथा शौर्यादयो गुणा आत्मधर्माः, अलङ्काराश्च लौकिकालङ्कारहारादिवच्छरीरवृत्तयो न तु शरीरघटकास्तथैव माधुर्यादयो गुणा अपि काव्यात्मनो रसस्य धर्माः, अनुप्रासादयोऽलङ्काराः शब्दवृत्तयः, उपमादयश्चार्थवृत्तयो न तु शब्दार्थमयकाव्यरूपा इति शब्दार्थयोः सगुणौ सालङ्काराविति विशेषणे अनुपपन्ने एवेति।

अत्र महामहोपाध्यायगोकुलनाथः काव्यप्रकाशप्रथमोल्लासे काव्यलक्षणविवरणे शब्दार्थाविति प्रतीकमुपादाय प्राह— कविकर्म काव्यम्, अर्थश्च न कविकर्मेति नार्थस्य काव्यत्वमिति यद्यपि सुवचम्, तथापि

प्रथमप्रकाश्यमेवात्र कर्म विवक्षितम्। अन्यथा ''शब्दो नित्यः'' इति शाब्दिकानां मते केनचिन्मौनिना लिखित्वा वेदिते च शब्देऽपि कविकर्मता न स्यात्, अतः प्रथमप्रकाश्यत्वरूपकर्मताया अर्थेऽपि सत्त्वाद् अर्थोऽपि काव्यम्। शब्द एव काव्यं नार्थ इत्यत्र विनिगमनाभावाद् ''अर्थविशेषावरुद्धः (वाच्यवाचकभावेन सम्बद्धः) शब्द इव शब्दविशेषावरुद्धोऽर्थोऽपि लोकोत्तर-चमत्कारव्यञ्जकतया काव्यमित्युभयोः प्राधान्येन निर्देशः।

न चार्थस्यापि काव्यत्वेऽर्थस्य श्रवणविषयताभावात् काव्यं शृणोतीति व्यवहारो नोपपद्यत इति वाच्यम्, शब्दबोधार्थकशृणोतिनाऽर्थेऽपि व्यवहारस्योपपादयितुं शक्यत्वात्, ''आत्मा श्रोतव्यः'' इतिवत्।

यद्यपि दण्डिनोक्तम्-

''**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली**'' इति।

तदपि व्यवच्छेदः समुच्चय एव, अवच्छिन्नत्वस्वीकारे मानाभावात्। चमत्कारो हि आनन्दभोगः। तत्र प्रथम आनन्दभोगो वाक्यश्रवणसमकालावगतेन शब्दालङ्कारेण, गुणाभिव्यञ्जकैश्च वर्णैः शब्दार्थयोः प्रतीत्यनन्तरमुल्लास्यते। इममानन्दभोगमाश्रित्य- ''स्वच्छन्दोच्छलदच्छकच्छकुहर'' इत्यादौ काव्यत्वम्। द्वितीयः शब्दार्थप्रतीतिकालस्फुरितेनार्थालङ्कारेण वस्तुध्वनिमपेक्ष्य व्यभिचारिभावोल्लास-समकालमुत्थाप्यते। (वस्तुध्वनिमनपेक्ष्यैवोपमादीनामानन्दभोजकत्वाङ्गीकारे ''गौरिव गवयः'' इत्यादि उपमावाक्यानामप्यानन्दभोजकता स्यात्।) यमाश्रित्य ''विनिर्गतं मानदमात्ममन्दिरात्'' इत्यादिषु काव्यत्वम्। तृतीयो व्यञ्जितव्यभिचारिभावोपरक्तशब्दार्थमयवाक्यार्थबोधेन साधारणीकृतविभावादि-पदार्थोपस्थितिकाले जन्यते, यमाश्रित्य भावध्वनिषु काव्यत्वव्यवहारः। चतुर्थः— (अन्यस्तु) साधारणीकृतविभावानुभावव्यभिचारिपरिबृंहितस्थायिभावस्वरूप-काव्योल्लासेन स्वसत्ता समुद्भाव्यते। यमाश्रित्य रसध्वनिषु काव्यव्यवहारः। रसध्वनौ च स्थायिभावाभेदेनानन्दो भासते। भावानां चास्वादे द्रुतिः, दीप्तिः विकास इति चेतसस्तिस्रोऽवस्था भवन्ति। त एव क्रमशो माधुर्यौजःप्रसादेत्याख्या-स्त्रयो गुणाः सन्तिः। तेषामभिव्यक्तौ वर्णविशेषघटनैवोपयुज्यते।

काव्ये चालङ्कारभावरसचमत्कारेष्वन्यतमोऽवश्यमपेक्ष्यते। भावचमत्काररसचमत्कारौ गुणं विना न सम्भवत इति तयोर्गुणाभिव्यञ्जिका घटनाऽपेक्ष्यंत एव। विपरीतघटनायामलङ्कारोऽपि चमत्कृतिं न जनयतीति तत्रापि गुणाभिव्यञ्जिका घटनाऽपेक्ष्यते एवेति काव्यलक्षणे सगुणाविति विशेषणं युक्तमेवेति।

भावरसास्वादे सति अलङ्कारमन्तराऽपि काव्यत्वमिति अलङ्कारसत्ता नाऽवश्यमपेक्षते। दोषास्तु चमत्कारप्रतिबन्धका भवन्ति, इति दोषाभावः सर्वत्रापेक्ष्यत इति चमत्कारासाधारणकारणान्येव परिगणितानि, इति।

राजचूडामणिदीक्षितश्च- सर्वा इमा विप्रतिपत्तीरुत्थाप्य निराचक्रे। तद्यथा— ननु काव्यशब्दस्य योगः "कवेः कर्म" इति। एवं शब्दार्थविषयककविव्यापार एव काव्यं न तु शब्दार्थौ। शब्दार्थयोः सर्वसाधारण्येन "रघुवंशादिकाव्यं कालिदासकृतम्" इति व्यवहारो नोपपद्यते। यथा सूत्रपुष्पयोः साधारण्येऽपि गुम्फनमेव मालाकारव्यापारस्तथैव शब्दार्थयोः साधारण्येऽपि योजनमेव कविव्यापार इति तदेव काव्यमिति चेत् – सत्यम्, तथापि कविकर्मविषयभूतयोः शब्दार्थयोरेव लोके काव्यपदप्रयोगाच्छब्दार्थौ काव्यम्। यद्यपि लोकव्यवहारेण शब्दविशेषस्यैव काव्यत्वं वक्तुमुचितं तथापि व्यञ्जकत्वाविशेषादर्थस्यापि काव्यत्वमुचितम्। शब्दार्थयोः शब्दस्यैवाभ्यर्हितत्वात् शब्दस्य पूर्वप्रयोग इति।

न चादोषौ इति पदं लक्षणान्तर्गतं न युक्तम्। तथा हि– दोषाभावविशिष्टस्यैव काव्यत्वे "निःशेषच्युतचन्दनस्तनतटम्" इत्यादेर्विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात् "**अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्**" इत्यभियुक्तोक्तेः स्तनतटमुद्दिश्य चन्दनच्युतिं विधातुमुचितत्वात्तथाऽभावात्। न चेदमकाव्यमिति वक्तुं शक्यम्। तस्योत्तमकाव्यत्वेन मम्मटाप्पयदीक्षितादिभिरुदाहृतत्वात्।

किं चादुष्टयोरेव काव्यत्वे काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात्। एवं सगुणाविति विशेषणमप्यनुचितं, गुणस्य रसमात्रधर्मत्वेन व्यवस्थितेः शब्दार्थधर्मत्वाभावात्।

न च रसवत्त्वोपपादनायैव सगुणावित्युक्तम्— एवं सति सरसावित्येव वक्तव्यं स्यात्, नहि शूरवन्तो (प्राणिमन्तो वा) देशा इति वक्तव्ये शौर्यादिमन्तो देशाः कैरप्युच्यते। इति चेत्, न–

**"नीरसो हि निबन्धो यः सोऽपशब्दो महान् कवेः"।**

इति ध्वनिकारोक्त्या रसाभिव्यञ्जकस्यैव काव्यत्वमभिमतम्। दोषसत्त्वे रसाभिव्यक्तेरभावात् (रसाभिव्यक्तिप्रतिबन्धकस्यैव दोषत्वात्) अदोषाविति विशेषणं युक्तमेव।

निःशेषच्युतचन्दनं स्तनतट"मित्यादिकं दुष्टमेव। अदुष्टमेवोत्तमं काव्यम्, अन्यथा काव्यतदाभासविवेको न स्यात्। काव्यस्य प्रविरलविषयता त्विष्टैव। यदुक्तं ध्वनिकृता— "द्वित्रा एव कवयो द्वित्राण्येव काव्यानि" इति।

न चैवमपि दोषाणामननुगमात्, तदभावविशिष्टस्य लक्षणस्याप्यननुगम एव। रसाभिव्यक्तिप्रतिबन्धकत्वेन दोषाणामननुगम इति वक्तुं न शक्यते, श्रुतिकटुत्वस्य शृङ्गाररसप्रतिबन्धकत्वेन दोषत्वेऽपि रौद्ररसाभिव्यञ्जकश्रुतिकटु-वर्णयुक्तकाव्येष्वव्याप्तेः। तत्तत्पद्याभिव्यङ्ग्यरसप्रतिबन्धकदोषाभावविवक्षाया-मननुगमत्वं तादवस्थ्यमेवेति चेत् न। "अतीतानागतवर्तमानतत्तत्काव्याभासव्यक्तिवृत्ति-तत्तद्दोषव्यक्तिविषयकसमूहालम्बनात्मकयोगिज्ञानविषयत्वेनानुगमे तदभाव-घटितलक्षणस्याप्यनुगमादिति केचित्। लक्ष्यस्याऽप्यननुगतत्वात् लक्षणस्याऽप्यननुगमो न दोषायेत्यन्ये।

यच्च गुणानां रसमात्रधर्मत्वेन शब्दार्थवृत्तित्वाभावाद् दूषणमभिहितं तदपि न, "**गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता**" इत्युक्तेः। अथवा "शरीरावच्छिन्नात्मनिष्ठस्यापि सुखस्य शरीरे सुखमिति प्रतीतेः परम्परया यथा शरीरवृत्तित्त्वं तथैव शब्दार्थाभिव्यङ्ग्यरसनिष्ठस्यापि गुणस्य "शब्दो मधुरः, अर्थो मधुरः, रचना मधुरा" इत्यादिप्रतीतेः परम्परया शब्दार्थरचनानिष्ठताया अप्यङ्गीकारात्।

ननु सालङ्कारत्वविशेषणमयुक्तम्, दोषाभावगुणवैशिष्ट्याद्रसाभि-व्यक्तिसत्त्वेन काव्यत्वोपपत्तेः। तदुक्तं गोपालस्वामिना—

**"दोषहानं गुणादानं कर्तव्यं नियमात्कृतौ।**
**कामचारः पुनः प्रोक्तोऽलङ्कारेषु मनीषिभिः।।**

**ध्वनिकारेणापि**

**मुख्या महाकविगिरामलङ्कृतिभृतामपि।**
**प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्।।**

इत्यत्रापि शब्देनालङ्काराणामनास्था द्योतितेति सत्यम्, उक्तवचनद्वयस्य स्फुटतरालङ्कारानास्थापरत्वात्। शब्दार्थालङ्काराणां रसाभिव्यञ्जकशब्दार्थोपस्कारकत्वेनालङ्कारकत्वादुपस्कारकाभावे पुष्कल-रसाभिव्यक्तेरभावात्, सालङ्कारत्वस्याप्यावश्यकत्वात्। स्फुटोऽस्फुटो वेत्यन्यदेतत्। उम्बकेन कन्यकावस्थायां चौर्येणसंभुक्तायाः पुनस्तेनैव पाणौ गृहीतायाः कुटुम्बिनीपदमधिरूढाया उम्बायाः सखीं प्रति उक्तस्य—

**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।**
**सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते।।**

इति काव्यस्यापि, अस्फुटालङ्कारत्वेनैव काव्यत्वम्। तथा हि अत्रातिसुन्दरवरादिसद्भावोपपादनेनोत्कण्ठाकारणप्रतिषेधो गम्यते, तथापि, उत्कण्ठाप्रतिपादनेन कारणं विनापि कार्योत्पत्तिरूपो विभावनालङ्कारोऽस्त्येव। अयं चास्फुटः। यतोऽत्रोत्कण्ठाकारणस्यातिसुन्दरवरस्योपकरणस्य चाभावस्याभावोऽतिसुन्दराद्यभावाभावत्वेन न प्रतिपाद्यते। एवमनुत्कण्ठाकारणे निरुक्तवरादिरूपे कण्ठत एव प्रदर्शितेऽप्युत्कण्ठाविधिनानुत्कण्ठाविरहो गम्यते, इति अनुत्कण्ठाकारणे सत्यपि, अनुत्कण्ठारूपकार्यानुत्पादरूपाऽत्र विशेषोक्तिः। इयमप्यस्फुटा, अनुत्कण्ठारूपकार्यानुत्पादस्य तत्त्वेनाप्रतिपादनात्। एवमस्फुटयोः विभावनाविशेषोक्त्योरेकवाक्यानुप्रवेशात् तयोः सङ्करोऽप्यस्फुट एव।

न चात्र रसवदलङ्कारः शङ्कनीयः। यत्र हि रसस्य गुणीभावस्तत्रैव रसवदलङ्कारस्य वक्ष्यमाणत्वात्। प्रकृते चोत्कण्ठाव्यङ्ग्यो विप्रलम्भात्मकः शृङ्गाररसः प्रधानभूत एवेति न रसवदलङ्कार इति। ततश्च स्फुटालङ्काराभावेऽपि अस्फुटालङ्कारत्वस्यात्र सत्वात् न लक्षणाव्याप्तिरिति।

**प्रदीपकाराः** "केचित्तु— अदुष्टत्वे सति गुणालङ्कारान्यतरवत्त्वमेव लक्षणं न तु विशिष्टमेकं लक्षणं तथा सति—

**मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।**
**येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ।।**

इत्यत्र निरलङ्कारेऽव्याप्तिप्रसङ्गात्। न च तदलक्ष्यमिति शङ्क्यम्— तत्राद्भुतरसाभिव्यक्तेः काव्यत्वस्वीकारात्। न चात्रापि माहात्म्यं जयं च प्रति हेतुत्वमेकचुलुके दिव्यमत्स्यकच्छपदर्शनस्य, हेतुत्वप्रतिपादकविभक्त्यभावेऽपि प्रतीयत इति वाक्यार्थहेतुकं काव्यलिङ्गम्, "कुम्भसम्भव" इत्यत्रानुप्रासश्च स्फुट इति वाच्यम्–

**सप्तापि वारिनिधयो येनैकचुलुकीकृताः।**
**लोपामुद्रासहचरः सोऽयमास्ते पुरो मम।।**

इत्यत्र तथाप्यव्याप्तेः। इत्याहुः (चण्डीदासादयः, दर्पणकारश्च) अपरे – रसाभिव्यञ्जकशब्दार्थयुगलत्वमेव लक्षणम्। न च वस्त्वलङ्कारव्यञ्जकेऽव्याप्तिरिति वाच्यम्, तथापि व्यङ्ग्यवच्छब्दार्थयुगलस्यैव लक्षणस्वीकारादित्याहुः। अर्थाद् व्यङ्ग्याभिव्यञ्जकशब्दार्थयुगलं काव्यमिति।

(स्वमतम्)केचित्तु- व्यङ्ग्यवच्छब्दार्थयुगलत्वस्य लक्ष्यतावच्छेदकत्वान्न लक्षणत्वमित्याहुः। (काव्यदर्पणः १, पृ० १०–१७)

नागेशः– आस्वादाभिव्यञ्जनकत्वमेव काव्यत्वबीजम्, तच्च शब्देऽर्थेऽपि समानम्। "चमत्कारिबोधजनकज्ञानविषयतावच्छेदकधर्मवत्त्वरूप-मनुपहसनीयकाव्यलक्षणं शब्दार्थोभयवृत्ति। "काव्यं पठितं" "श्रुतं काव्यं" "बुद्धं काव्यम्" इति व्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति। वेदत्वमपि शब्दार्थोभयवृत्ति। अत एव "तदधीते तद् वेद" (पा०सू. ४/२/५१, पा०२, सू०५९, अ०अ०४) इति सूत्रस्थो भगवान् पतञ्जलिः सङ्गच्छते।) इत्थं हि तत्र भाष्यम्–

'तदधीते तद्वेद' किमर्थमुभावप्यर्थौ निर्दिश्येते। न योऽधीते वेत्त्यप्यसौ। यस्तु वेत्ति, अधीतेऽप्यसौ। नैतयोरावश्यकः समावेशः। भवति हि कश्चित् सम्पाठं पठति न वेत्ति। तथा कश्चिद् वेत्ति न च सम्पाठं पठति— इति। तत्र प्रदीपकारः— यो हि यं ग्रन्थमधीते स तं स्वरूपतोऽवश्यं वेत्ति। यश्च स्वरूपतो वेत्ति सोऽवश्यमधीत इति भावः। नैतयोरिति – अर्थावबोधो वेदनमभिप्रेतम्, न तु स्वरूपमात्रवेदनम्, तत्र परस्परव्यभिचारदर्शनादुभयोपादानमित्यर्थः। सम्पाठमिति— अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः।)

अवयवावयविभावसम्बन्धमूलकलक्षणया शब्देऽर्थेऽपि काव्यत्वात्– "एको न द्वौ" इतिवन्न श्लोकवाक्ये काव्यत्वाहानापत्तिः। अतः काव्यप्रकाशोक्तमनुपहसनीयं काव्यलक्षणं निर्बाधम्। "एवमास्वादादौ वैलक्षण्यनिवेशादुक्तलक्षणद्वयमपि निर्बाधमिति नान्यमतमपि दुष्टमित्युच्यते तर्ह्यस्तु तथा, इत्याचष्टे— गङ्गाधरशास्त्री— "तददोषौ शब्दार्थौ, अदोषं गुणवत्काव्यम्" इत्यादिप्रदर्शितानां दोषाभावगुणालङ्काराणां काव्यसामान्यलक्षणे नास्ति प्रवेशः। काव्यमुद्दिश्य शब्दार्थयोरेव विधानम्, न तु शब्दमात्रस्य। शब्दमात्रे कविसंरम्भगोचरायोगात्। लोकोत्तरवर्णनानिपुणकविकर्मता शब्देऽर्थे चाऽविशेषात्। कवेरुच्चारणकर्मता शब्दे, कविसमवेतरसबोधौपयिकसामग्रीसङ्घटनविषयकज्ञानकर्मताऽर्थे चास्ति। अर्थपदेन त्रिविधस्यापि वाच्य–लक्ष्य–व्यङ्ग्यात्मनोऽर्थस्य ग्रहणं सर्वविधेषु व्यङ्ग्येषु निरुक्तज्ञानकर्मतायाः सत्त्वात् काव्यत्वस्यानपायात्"। (गु०म०प्र०पृ० ९–१०)

इत्थं च— "कविकर्तृकरसविषयकज्ञानौपयिक-सामग्रीसङ्घटनविषयकज्ञानविषयत्वं शब्दार्थयोरनुगतं काव्यत्वम्"।

**"अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता"।**

(का.प्र. ३/२३)

**''अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः''।**

(का.प्र. २/२०)

इत्युक्तदिशोभयस्यापि निरुक्तसामग्रीघटकतायाः सूपपादत्वात्।

इत्थं च लास्याङ्गानां न काव्यत्वापत्तिः। तस्य कविकर्तृकनिरुक्तज्ञान–विषयताया अभावात्। विषयान्तरव्यासक्तसामाजिकमनसां तद्विषयाभिमुख्य-परिहारपूर्वकं काव्यार्थभावनाप्रवणतासम्पादकत्वेन रसोद्‌बोधं प्रति परम्परया प्रयोजकत्वेऽपि प्रदर्शितसामग्रीघटकताया अभावाच्च''।

अत एवार्थदोषाणाम्, अर्थगुणानाम्, अर्थालङ्कारणाम्, अर्थशक्त्युद्भवध्वनीनाञ्च निरूपणमुपपद्यते। शब्दमात्रस्य काव्यत्वे तद्‌गतानामेव दोषगुणालङ्कारध्वनीनां निरूपणस्यौचित्येन भूयसामर्थगतानां तेषां निरूपणस्याप्रसक्त्या तन्निरूपणस्योन्मत्तप्रलापत्वापत्तेः। न च तेषामुत्तमाद्यन्यतमकाव्यप्रदार्थप्रवेशाऽभावेऽपि रसोपयोगितामात्रेण निबन्धनमुपपद्यत इति वाच्यम्, काव्याङ्गनिरूपणं प्रतिज्ञाय तेषां निरूपणस्यासङ्गत्यापत्तेः, दुःसमाधानत्वात्। प्रत्युत त्वदापादितप्रकारेण लास्याङ्गानां निरूपणीयतापत्तेस्त्वन्मत एव दोषसत्वात्। एवं ''काव्यं श्रुतम्'' इत्यादिप्रतीतीनामपि ऋृक्त्वादेरर्थशब्दोभयवृत्तिताया महाभाष्यकारादिनिरुक्तत्वेन ''ऋृचः पठति'' इत्यादिप्रतीतीनामिव भाक्तत्वमेव।

एतेन ''वाक्यं रसात्मकं काव्यम्'' इति शब्दमात्रे काव्यसामान्यलक्षणयोगितां प्रतिजानानः स्वयमेवाग्रे—

**''दृश्यश्रव्यविभेदेन पुनः काव्यं द्विधा मतम्''।**

इत्यभिदधत् पूर्वापरविरोधमनाकलयन् दर्पणग्रन्थोऽन्योऽपि तज्जातीयो ग्रन्थश्चिन्त्य एव– इति सहृदया विभावयन्तु'' इति व्याजह्रे। (गु०म०प्र०टी०पृ० १०)

**मतभेदनिष्कर्षः**

पण्डितराजमते विशिष्टशब्द एव काव्यम्, न तु शब्दार्थौ। तत्र हेतवः—

क– शब्दार्थयोः काव्यत्वे मानाभावः।

ख– व्यासज्यवृत्त्या शब्दार्थयोः काव्यत्वस्वीकारे श्लोकवाक्यं काव्यं न स्यात्। पर्याप्त्या स्वीकारे एकस्मिन् काव्ये काव्यद्वयव्यवहारापत्तिः।

ग– वेदपुराणादिवच्छब्द एव काव्यम्।

घ– शब्दार्थयोः सगुणत्वसालङ्कारत्वविशेषणमनुपपन्नम्। उदितं मण्डलं विधोः (इत्यस्याकाव्यत्वापत्तेः)।

ङ– गुणानामलङ्काराणां चाननुगमकत्वात् लक्षणे प्रवेशोऽनुचितः।

च– आत्मधर्माणां गुणानां हारादिवदुपस्कारकाणामलङ्काराणां च शरीरघटकत्वानुपपत्तिः।

छ– अदोषाविति विशेषणमप्ययुक्तमेव।

इत्थं सप्तविप्रतिपत्तय उपलभ्यन्ते।

**विमर्शः**

तत्र तावत् काव्यपदान्वाख्याने विशेषणतया प्रविष्टस्य कविशब्दस्य व्युत्पादनमुपक्रमते–

यद्यपि कविशब्द उणादिनिष्पन्नः, "उणादयोऽव्युत्पन्नानि व्युत्पन्नानि च प्रातिपदिकानि" इति पाणिनीयाः पठन्ति। तथापि "सर्वं नामधातुजम्"– इति यास्कोक्तेः–

**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।**
**यन्न विशेषविधेश्च समुत्थं प्रत्ययतः प्रकृतेश्च तदुत्थम्।।**

इत्यभियुक्तोक्तेः व्युत्पत्तिपक्ष एव युक्तः। तत्र कविशब्दप्रकृतिभूतधातुजिज्ञासायां "कबृ वर्णे" "कुङ्शब्दे" "कुशब्दे" "कूङ् कुङ् वा शब्दे" इति चत्वारो धातवो दृष्टिपथमायान्ति। तत्र प्रथमः "अथ पवर्गीयान्ताः, तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत्" (सि०कौ०) इत्युपक्रम्य भ्वादौ पठितः। तस्मात् कबते इति कबिरिति पवर्णीयोपधः स्यात्। "कविशब्दस्य कबृ इत्यस्य धातोः काव्यकर्मणो रूपम्" इति (का०मी० ३/१६पृ०) राजशेखरोक्त्या इत्थमुक्तम्। परं कविशब्दः सर्वत्र दन्तोष्ठोपध एव लभ्यते। अतः सर्वेभ्य इदं न रोचते। द्वितीयः – डीङन्तङित्सु भ्वादौ पठितः "कुङ शब्दे" (सि०कौ०भ्वा०) इति। तस्मात् "कवते इति कविः सिद्ध्यति। राजशेखरोऽपि हृदयकविं विवृण्वान आह— "यो हृदय एव कवते निह्नुते च स हृदयकविः (का०मी० ५/प०४८) इति तत्र कवते इत्यत्र दन्तोष्ठ्य एवोपलभ्यते। तृतीयः– "कुशब्दे" इति "अथ कौत्यन्ता परस्मैपदिनः" इत्युपक्रम्य "अदादौ" पठितः, तस्मात् कौतीति कविः स्यात्। चतुर्थः— "कूङ् शब्दे अथवा कुङ्शब्दे" इति धातुर्मतभेदाद् द्विविधो लभ्यते। (सि०कौ० तुदादौ) तत्र कैयटमते दीर्घान्तः न्यासकारमते ह्रस्वान्तः। उभयथा प्रकृतेऽनुपयुक्तः। यतो हि "कुवते" इति विग्रहे "अच इः" इत्युणादिसूत्रेण

'इप्रत्यये ङित्वात् "क्ङिति च" (पा०सू०अ० १/१/५) इति गुणनिषेधे उवङि कृते कुविरिति स्यान्न कविरिति। अत: "कवते इति" कौतीति "वा विग्रहे" "अच इ:" (उ०सू०सं० ४७८४) इति इप्रत्यते, कृते गुणे, अवादेशे च कविशब्दस्य सिद्धि:।

यद्यपि शब्दार्थकोऽयं धातुस्तथापि तस्य विलक्षणवर्णन एव पर्यवसानम्। वर्णनञ्च विलक्षणशब्दात्मकं विलक्षणज्ञानात्मकं चेति। (र०गं०२/पृ०२०९) सत्यपि दर्शनवैदुष्ये वाल्मीकेस्तावत् कविसंज्ञा नाभूद् यावद्वर्णना न जाता। "नहि कवेरितिवृत्तवर्णनमात्रेणात्मपदलाभो भवति" इति ध्वनिकृदुक्तेश्च प्रतीयते यद् विलक्षणवर्णयिता एव कवि:।

महाभाष्येऽपि "अकथितं च" (पा०सू० १/४/५१) इति सूत्रे— अकथितपदं विवृण्वाना महाभाष्यकारा "तदकीर्तितमाचरितं कविना" इत्युक्तवन्त:। (महा०भा० १/४/३आ०) तत्रैव कविशब्दो मेधाविवचन: क्रान्तदर्शनादिति कैयट: (प्रदीपे)। नागेशश्चाह– कवि: क्रान्तदर्शनो भवति– इति निरुक्तात्। क्रान्तानि दर्शनानि येनेति विग्रह: इत्युद्योते तत्रैव।

उक्तं च–

**जानीतो यन्न चन्द्रार्कौ जानन्ते यन्न योगिन:।**
**जानीते यन्न भर्गोऽपि तज्जानाति कवि: स्वयम्।।**इति।

यत्त्वाधुनिका: "संख्यावान् पण्डित: कवि:" इति कोशं दृष्ट्वा "कविर्मनीषी परिभू:" इति (ई०वा०उ० ४०/८) इति श्रुतिं चावलोक्य "तेने ब्रह्म हृदा य आदिकवये" श्रीमद्भागवते (१/१) वेदवर्णयित्रे ब्रह्मणे आदिकविशब्दस्य प्रयोगात्। अथ च "उशना भार्गव: कवि:" इति कोशात् नीतिशास्त्रवर्णयितु: शुक्राचार्यस्य कृतेऽपि कविशब्दप्रयोगमवलोक्य निगदन्ति यत्– पुरा काले यावन्तो वर्णयितारस्ते सर्वे कविव्यपदेशमलभन्त। अर्वाचीनाश्च सौन्दर्याधायकवर्णनानिपुणानेव कविपदेन व्यवहरन्ति।

मम तु इत्थं प्रतिभाति– ब्रह्मण: शुक्राचार्यस्य च कविसंज्ञापि काव्यकर्तृतयैवासीत्। इदं दृश्यमानमर्थभूतं जगदपि काव्यभूतमेव, शब्दार्थयो: काव्यत्वात्। तदुक्तम्–

**नामरूपात्मकं विश्वं यदिदं दृश्यते द्विधा।**
**तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्भुज:।।** इति।

अपि च वेदोऽप्यपौरुषेयं काव्यमेव–

"**पश्य देवस्य काव्यं यन्न ममार न जीर्यति**" इति श्रुते:।

एवमुशनसोऽपि कविसंज्ञा–

**''या दुग्धापि न दुग्धेव कविदोग्धृभिरन्वहम्।**
**हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती।।**

इत्यादि काव्यकर्तृत्वादेव ''ततः प्रभृति तमुशनसं सन्तः कविरित्याचक्षते''। (का०मी०३ पृ०१६) इति राजशेखरोक्त्या, ''काव्येन काव्यं सृजतादृताभिः'' (नै० ३/४२) इति श्रीहर्षोक्त्या च प्रतीयते।

**अथ काव्यशब्दो विमृश्यते–** तत्र कवेः कर्मेति विग्रहे ''इगन्ताच्च लघुपूर्वात्'' (पा०सू० ५/१/१३१) इति सूत्रेण प्राप्तं णं प्रबाध्य ब्राह्मणादिगणस्याकृतिगणत्वात् ''गुणवचनब्राह्मणादिभ्यः कर्मणि ष्यञ्''। (पा०सू० ५/१/१२४) इति सूत्रेण ष्यञि कृते आदिवृद्धौ टिलोपे काव्यशब्दस्य सिद्धिः।

इत्थं चमत्कारिवर्णनानिपुणः कविः, तत्कर्म काव्यमिति सिद्धम्। अत्र न केषाञ्चिद् विमतिः। कविकर्मता च शब्दार्थगुम्फने। शब्दं कविर्न निर्माति, तस्य नित्यत्वात्, परम्, अर्थं कविर्निमाति। अर्थो द्विविधः – । – स्वतःसम्भवी २– प्रौढोक्तिसिद्धो वा। (प्रौढोक्तिसिद्धोऽपि केषाञ्चिन्मते द्विविधः) तत्र प्रौढोक्तिसिद्धोऽर्थः प्रतिभाप्रसूतत्वात् कविनिर्मित एव, न जगदुत्पादकेन ब्रह्मणा निर्मितः, लोके तथाऽदृष्टत्वात्। यद्यपि स्वतःसम्भवी लोके दृश्यते तथापि तं कविः याथातथ्येन न गृह्णाति, स्वप्रतिभया तत्रापूर्वतामुपपाद्यैव गृह्णाति।

कान्तासम्मिततयोपदेशार्थं कृते काव्ये दोषगुणविशिष्टानां नायकादीनां यथार्थतया वर्णनं न क्रियते तत्र दोषमपनीय विलक्षणगुणशालितां चोपपाद्य वर्ण्यते कविभिरन्यथा तत्र प्रेक्षावतां प्रवृत्तिर्न स्यात्। अतः काव्यनायकादयः कविप्रतिभाप्रसूता एव। नायिकानामङ्गानि व्यवहारा वा ये काव्ये वर्णितास्ते सर्वे कविप्रतिभाप्रसूतत्वात् कविनिर्मिता एवेत्यर्थे कविकर्मता सिद्धा।

एवं शब्देऽपि – अर्थवाचकेषु सत्स्वनेकेषु शब्देषु कञ्चन एव शब्दं तदर्थप्रतिपादने क्षमं गृह्णाति कविः। यथा—

**''द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः''।**

अत्र कपालिशब्द एव कपालास्थिधारणरूपाऽशुचिबीभत्साद्यर्थबोधकतया शोचनीयतामुपादयन् काव्यानुगुणो न तु पिनाकिशब्दः। तत्र पिनाकधारणरूपार्थावगतेर्वीररसप्रत्यायकतया शोचनीयतोक्तिरसङ्गता स्यात्। एवञ्च मुख्यतया कविकर्मताऽर्थे तदनुकूलतया शब्दचयने शब्दगुम्फने च। तदर्थोपपादने शब्दस्यैव सामर्थ्यमिति कृत्वा केचनार्थविशेषावरुद्धशब्दस्यैव

काव्यतां मन्वते, केचन कविसंरम्भविषयतयाऽर्थस्यापि प्राधान्यमङ्गीकुर्वन्ति। परं तद् वाग्विकल्पमात्रम्। वस्तुतः काव्ये द्वयोः प्राधान्यम्।

अपि च काव्यात्मभूतस्य रसस्य ध्वनेर्वा यथा शब्दो व्यञ्जकस्तथाऽर्थोऽपि। व्यङ्ग्योपपादने द्वयोः प्राधान्यमुपापादि ध्वनिकारेण–

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**

(१/१३)

इत्यादि वदता। अत्र प्राधान्यार्थकः समुच्चयार्थकश्च वाशब्दः –

**''वा विकल्पेऽथ प्राधान्ये सादृश्येऽथ समुच्चये''।** इति कोशात्।

अर्थाद् व्यङ्ग्यार्थप्रतिपादने शाब्द्यां व्यञ्जनायां शब्दस्य प्राधान्यम्, अर्थस्य सहकारिता, आर्थ्यां चार्थस्य प्राधान्यं शब्दस्य सहकारिता। अतः शब्दोऽर्थश्चोभौ प्रधानम्। एतदेव साहित्यम् (सहभावः)। अतः शब्दार्थौ काव्यं युक्तम्।

अथ क्रमशः पण्डितराजापादिताऽऽपत्तीनामालोचनम—

क– शब्दस्य काव्यत्वे यथा भवता व्यवहारप्रामाण्यमभ्युपगतं तथा शब्दार्थयोः काव्यत्वेऽपि स्वीकरणीयम्। ''काव्यं श्रुतं'' इति यथा व्यवहारस्तथा ''काव्यं बुद्धम्'' इत्यपि व्यवहारः। नहि काव्यशब्दं पठित्वाऽर्थज्ञानमन्तरा ''काव्यं बुद्धम्'' इति कश्चिद् व्यवहरति।

ख– शब्दार्थयोः काव्यत्वं व्यासज्यवृत्त्यैव। परं केवले श्लोकवाक्ये काव्यत्वं ''समुदाये प्रवृत्तः शब्दोऽवयवयेष्वपि वर्तते'' (म०भा०प०) इति सिद्धान्तादवयवावयविभावसम्बन्धमूलकलक्षणया वा प्रयुज्जते, इत्यदोषात्।

ग– वेदपुराणादयोऽपि न शब्दमात्रम्, अपि तु शब्दार्थमयाः। तथा हि ''तदधीते तद्वेद'' इति (पा सू. ४/२/५९) सूत्रे महाभाष्ये आशङ्कितं यत्—तदधीते, तद्वेद। इत्युभौ कथं निर्दिश्येते? यः अधीते स जानात्यपि, यो जानाति सोऽधीतेऽपि। समाधत्ते– नैतयोरावश्यकः समावेश इति। कश्चित्सम्पाठं पठति (शब्दमात्रं पठति) अर्थं न वेत्ति। कश्चिदर्थं वेत्ति न च पाठं पठति। एवं लोके दृश्यते। यो वेदमधीते सोऽपि वैदिकः, यो वेदं जानाति सोऽपि वैदिक इष्यते। अत उभयोः ग्रहणम्। (द्रष्टव्यं तत्रत्यं भाष्यं प्रदीपमुद्योतं च) एवं वेदस्य मुख्याङ्गभूतेन व्याकरणेन शब्दार्थयोः उभयोर्वेदत्वमुपपादितम्। ''वेदः श्रुतः, वेदो बुद्धः'' इत्युभयविधव्यवहाराच्च न काचन दुरवस्था। अत्रार्थस्य वेदत्वेऽर्थस्य पुरुषकृतिजन्यत्वात् पौरुषेय-

तयाऽनित्यतया च वेदस्यापौरुषेयत्वं नित्यत्वं च न स्यादिति न शङ्क्यम्। वस्तुतो वेदार्थः परमेश्वर एव (जगतस्तद्विवर्तभूतत्वात्, पारमार्थिकसत्तारहितत्वात्)। अत एव ''वेदैश्च सर्वैरहमेव वेद्यः'' (गीता १५/१५) इति स्मृतिः सङ्गच्छते।

घ– शब्दार्थयोः सगुणत्वसालङ्कारत्वविशेषणं युक्तमेव। यतो हि लोकशास्त्रविलक्षणशब्दार्थमयं काव्यम्, परं य एव शब्दा लोके प्रयुज्जते, य एव तेषामर्थास्तत्र त एव काव्येऽपि यदि भवेयुस्तदा कथं वैलक्षण्यम्? लोकशास्त्रीयशब्दार्थयोः रमणीयार्थप्रतिपादकता नास्ति, काव्यशब्देषु तदस्ति, इत्यत्र को हेतुः? इति मीमांसायां स्फुटं प्रतीयते यत् काव्यशब्दार्थयोरस्ति किञ्चिद् वैशिष्ट्यम्। तद्धि वैशिष्ट्यम्– दोषहानगुणालङ्कारोपादानाभ्यामेव जायते। गुणालङ्कारवैशिष्ट्यादेव ललितोचितसन्निवेशचारुकाव्यं जायते। लालित्यसम्पादका धर्मा गुणास्तदुत्कर्षका अलङ्काराः सन्ति (औचित्यं च रससद्भावे) ''उदितं मण्डलं विधोः'' ''गतोऽस्तमर्कः'' इत्यादीनां वस्त्वभिव्यञ्जकानामलङ्काररहीनत्वाद् अकाव्यत्वोपपादनमप्यसमञ्जसमेव। यतो हि दण्डी अत्र स्वयं ज्ञापकहेत्वलङ्कारमुपपाद्यास्य काव्यत्वं ब्रूते। तथा हि–

**''गतोस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।**
**इतीदमपि साध्वेव कालावस्थानिवेदने''।।**

(का०द० २/२४४)

यदि विविधव्यङ्ग्यार्थरहितोऽयं केवलवाक्यार्थबोधकस्तदानाऽलङ्कारो न वा काव्यमिति भामहो ब्रूते—

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।**
**इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते।।** इति।

(काव्यालङ्कारः २/८७)

अतश्चमत्कारिव्यङ्ग्यार्थाभिधाने चन्द्रस्योद्दीपनविभावत्वात् झटित्यन्यसमाक्षेपे शृङ्गाररसाभिव्यञ्जकतयाऽत्र प्रसादगुणसद्भावोऽस्त्येवेति।

ङ– भवतां ''गुणाऽलङ्कारादिभिर्निरूपणीये तस्मिन्नि''ति पूर्वमुक्तवतां ''गुणा अलङ्काराश्च अननुगताः'' इत्युक्तिस्तु व्याहतैव प्रतिभाति, तेषां स्वरूपसंख्याश्रयादीनां निश्चितत्वात्। गुणा रसधर्माः, अचलस्थितयो रसस्य नियतोत्कर्षकाः सन्ति। अलङ्काराश्च शब्दार्थधर्मा अनियमेन रसोत्कर्षका व्यभिचरितस्थितयश्च सन्ति। तथा हि आनन्दवर्धनाचार्याः –

**"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।।** इत्याहुः।
(ध्वन्यालोक २/६)

तत्र च गुणास्त्रयः इत्यपि निश्चितवन्तः। अलङ्कारा यद्यपि वागविकल्पाः, अनन्ताश्च, ते संख्यातुमशक्याः। उक्तं हि—

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।।** इति।
(का.द. २/१)

परमद्यत्वे तु निश्चितप्राय एव। नवीनोद्भावनप्रतिभाशून्या इवाधुनिका लक्ष्यन्ते। पूर्वाचार्यैर्यथासम्भवमुपपादितमेव। अपि च लक्षणेनैव वस्तुनोऽवगतिः न संख्यया, गवां संख्यासंख्यातुमशक्याऽपि गोत्वमनुगतमेव। मनुष्यसंख्याऽननुगताऽपि मनुष्यत्वमनुगतमेव।

इत्थं "रसवृत्तित्वे सति नियमेन साक्षाद्रसोत्कर्षकत्वं गुणत्वम्"। "शब्दार्थवृत्तित्वे सति परम्परयाऽनियमेन रसोत्कर्षकत्वमलङ्कारत्वम्"। इति गुणालङ्कारयोरनुगतत्वात्।

च- आत्मनोऽभिव्यक्तिः शरीरमन्तरा न सम्भवति, आत्मधर्माणा-मप्यभिव्यक्तिः शरीरद्वारेणैव नान्यथा। गुणानामभिव्यक्तिः शरीरद्वारकतयाऽतः शरीरघटकत्वं तेषां युक्तमेव। अपि च काव्ये गुणाभिव्यञ्जकावेव शब्दार्थौ प्रयोज्याविति सूचनाय सगुणविति विशेषणम्। यद्यपि लौकिका अलङ्कारा न शरीरघटकास्तथापि काव्यालङ्काराः शरीरघटका एव। लौकिका अलङ्काराः संयोगेन शरीरे वर्तन्ते, काव्यालङ्काराः समवायेनेति पृथक्कर्तुमशक्यत्वात्, तेषां शरीरघटकत्वम्। अत एवोक्तं कुन्तकेन – "नहि काव्येनालङ्कारयोगः क्रियतेऽपि तु सालङ्कारस्य काव्यता" (वक्रो० १/६) इति। अपि च द्वयमेव रमणीयताधायकं तत्त्वं रसो वाऽलङ्कारो वा तत्र रससद्भावे न स्फुटालङ्कारापेक्षा। परं यत्र रसमयी रचना नास्ति तत्रालङ्कारोऽपि यदि स्फुटो न स्यात्तदा रमणीयता केन स्यादिति विभावनीयम्।

अपि च – गुणालङ्काररहितस्यापि शब्दस्य यदि काव्यत्वं स्वीक्रियते तदा "अयमात्मा ब्रह्म" इत्यादिश्रुतिवाक्येषु अलौकिकाह्लादमयस्य ब्रह्मरूपार्थस्य प्रतिपादकेषु काव्यत्वप्रसक्तिः दुर्वारा स्यादिति।

छ- अदोषाविति विशेषणं युक्तमेव। दोषसद्भावेन चमत्कारो न जायते। चमत्कारापकर्षकतया दोषाः सर्वथा परिहर्तव्याः। तथा ह्युक्तं भामहेन–

**सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।**
**विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते।।**

(काव्यालङ्कारः १/११)

इत्थं कविरपि निन्दितो भवति। दण्डिनाऽप्युक्तम्–

**तदल्पमपि नोपेक्ष्यं काव्यं दुष्टं कथञ्चन।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।।**

(काव्यादर्शः – १/७)

इत्थं दोषः कुकवित्वं कवेः ख्यापयति, रमणीयतामपकर्षति, इति सर्वथा हेय एव। एवं दोषो यत्र व्यङ्ग्यवाच्यचमत्कारतिरस्कृतो रमणीयतां न स्थगयति तत्र तस्य दोषत्वमेव नास्ति, ''उद्देश्यप्रतीतिप्रतिबन्धकत्वं दोषत्वम्'' इति पूर्वमुक्तेः। एतदेवोक्तं साहित्यदर्पणकारेण—

**कीटानुविद्धरत्नादि साधारण्येन काव्यता।**
**दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः।।**

(सा०द०, पृ०१३)

एतदुक्त्या स्फुटं प्रतीयते यत्र दोषेण रसादीनां स्फुटा प्रतिपत्तिर्न जायते तत्र तु काव्यत्वं तस्यापि नेष्टम्। सर्वथा लौकिकदृष्टान्तोऽत्र न युज्यते। लोके दुःखकारणत्वेन प्रसिद्धानां शोकादीनां काव्ये करुणरसादौ सुखजनकत्वेन व्यभिचारात्।

द्विविधो हि दोषः – अव्युत्पत्तिकृतोऽशक्तिकृतश्च। तत्राव्युत्पत्तिकृतो दोषः कविशक्तितिरस्कृतत्वान्न लक्ष्यते। अशक्तिकृतो दोषो झटिति प्रतिभासते। तथा हि–

**अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।**
**यस्त्वशक्तिकृतस्तस्य झटित्येवावभासते।।**

(ध्व०लो० ३१६ पृ० परि०)

अत एव दोषोऽपि क्वचिद् गुणतयाऽभिधीयते। एवं रमणीयार्थसद्भावेऽपि तत्समनियततया दोषप्रतीतिश्चित्ते यत्र भासते, तत्र दुष्टं काव्यम्, क्वचित् लक्षणया ''तवायं हेतुराभास'' इतिवद् वा व्यवहारः। परं यत्र रमणीयतामपनयति तत्र तु काव्यत्वं भवतामपि नेष्टम्।

पण्डितराजस्तु सर्वथा दोषं परिहरति। तथा हि यलोपप्रयुक्त–मश्रव्यदोषमुपपाद्याशशङ्के–कथं तर्हि–

**भुजगाहितप्रकृतयो गारुडमन्त्रा इवावनीरमण।**
**तारा इव तुरगा इव सुखलीना मन्त्रिणो भवतः।।**

(र०ग०। पृ२७०)

इति भवदीयं काव्यमिति चेद् अकृत्वैव यलोपं पाठान्न दोष इति तत्क्षणमेव परिजहार।

केचित् कथयन्ति यत्- मम्मटस्य काव्यलक्षणं तु ''लोकोत्तरवर्णना-निपुणकविकर्म'' इति। इदं तु अनुपहसनीयकाव्यस्य लक्षणम्। परमिदं युक्तं न प्रतिभाति। यतो हि तत्तु व्युत्पत्तिबललभ्यः काव्यशब्दार्थः, लक्षणं तु इदमेव। काव्यमुपहासास्पदं चेत् कां प्रीतिं जनयेदिति सहृदयैर्विचारणीयम्।

## पूर्वापरविरोधः

पण्डितराजः काव्यलक्षणावतरणिकायां व्याजहार— ''तत्र कीर्तिपरमाह्लादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य व्युत्पत्तेः कविसहृदययोरावश्यकतया गुणालङ्कारादिभिर्निरूपणीये तस्मिन्'' इत्यादि। (रगंध. पृ. ८) एवं पूर्वं गुणालङ्कारादिभिर्निरूपणीयं काव्यमित्यभिधायानन्तरं लक्षणे गुणालङ्कारादिनिविशो न युक्त इत्यभिधानं किं न पूर्वापरविरूद्धमिति विवेचनीयम्। इदं परकीयं मतमिति वक्तुं न शक्यते, तस्यानवसरत्वात्। इदं तटस्थलक्षणं न स्वरूपलक्षणमित्यपि न। भवन्मते गुणालङ्कारादीनां काव्यशरीराघटकत्वात्, निर्गुणस्य निरलङ्कारस्यापि काव्यत्वात्।

अपि च भवन्मते काव्यकारणं प्रतिभा, सा च काव्यघटनानुकूल-शब्दार्थोपस्थितिरिति। (र०गं० पृ०२७) यदि भवतां मते शब्दविशेष एव काव्यं तदा काव्यघटनानुकूलशब्दोपस्थितिरित्येव वक्तव्यं स्यात्। ''शब्दार्थोपस्थितिः'' इत्युक्त्या शब्दश्चार्थश्च शब्दार्थौ तयोरुपस्थितिरिति विग्रहः। द्वन्द्वे च द्वयोः पदयोः प्राधान्यादर्थस्यापि प्राधान्यमवगम्यते। कारणेऽर्थस्य प्राधान्ये कार्येऽपि तदापत्तेः ''कारणगुणाः कार्यगुणानारभन्ते'' इति न्यायात्।

अपि चोत्तमोत्तमकाव्यलक्षणमुक्तं भवता—

**''शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्''।**

(र०गं० पृ०३६)

तत्र काव्यसामान्यलक्षणेऽर्थस्य गुणीभावः उपपादित एव, शब्दस्यैव प्राधान्यादत्र गुणीभावत्वोपपादनं युक्तं स्यात्, परमर्थस्याप्युपपादितं तत्। अतः

शब्दार्थयोर्द्वयोः रमणीयार्थाभिधाने प्राधान्यादुभयमेव काव्यं सिद्ध्यति इति विवेचनीयम्।

अपि च- ''शब्दार्थौ'' इत्यत्र द्वन्द्वसमासः। द्वन्द्वश्च सहविवक्षायां भवति। इत्थं चमत्कारिणोऽर्थस्याभिव्यक्तौ शब्दार्थयोरुभयोः सहभावो विवक्षितस्तदा— उभयोः काव्यत्वं स्वतः सिद्धम्।

आलङ्कारिकाणां मतबाहुल्यं शब्दार्थयोः काव्यत्वे एव। तत्र भामहोद्भट–वामनरुद्रटाऽऽनन्दवर्धन-मम्मट-हेमचन्द्र-वाग्भटविद्यानाथाच्युतराय-राजचूडामणि-दीक्षित-विद्याधरप्रभृतयः शब्दार्थयोः काव्यत्वमङ्गीकुर्वन्ति। अग्निपुराणकार-दण्डि-शौद्धोदनि–विश्वनाथ–जगन्नाथ–जयदेव– माणिक्यचन्द्रप्रभृतयः शब्दं काव्यं निगदन्ति, इति प्रायोवादः। तत्तदाचार्याणां काव्यलक्षणं विनेयानां सौकर्याय निर्दिश्यते—

भामहः– ''शब्दार्थौ सहितौ काव्यम्''। (काव्यालङ्कारः १/१६)

रुद्रटः– ''ननु शब्दार्थौ काव्यम्''(काव्यालङ्कारः २/१)

वामनः– ''काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते।'' (का०सू०वृ० पृ०१)

आनन्दवर्धनः— ''यद्यप्यानन्दवर्धनाचार्यः काव्यात्मानं ध्वनिमेव निरूपयाञ्चक्रे तथापि प्रसङ्गवशादनेकशः काव्यत्वमभिदधौ, तेन शब्दार्थयोः काव्यत्वं तदभिमतं प्रतिभाति। तथा हि— ध्वन्यभाववादिमतनिरूपणे ''काव्यस्य शब्दार्थौ शरीरम्'' इति।

''शब्दार्थयोः साहित्येन काव्यत्त्वे'' इति च। (ध्वन्या०उ०४ पृ०५३८)

अभिनवगुप्तः— काव्यं शब्दार्थौ इत्यर्थः। (ध्वन्यलोकलोचन २/७ कारिका-व्याख्याने लोचने)

राजशेखरः— ''शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या'' (का०मी०अ०२ पृ०१२) ''शब्दार्थौ ते शरीरम्'' (तत्रैव अ०३ पृ०१५)

कुन्तकः— शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।

(वक्रो० १/७)

भोजराजः— निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।
(स०क०१/२)

अत्रालङ्कारैरित्यनेन शब्दार्थोभयालङ्कारस्य विवक्षितत्वात् ''शब्दार्थौ काव्यमिति प्रतीयते''।

मम्मटः— ''तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'' (का०प्र० १/३)

हेमचन्द्रः— अदोषौ सगुणौ सालङ्कारौ च काव्यम्। (काव्यानु०)

वाग्भटः— साधु शब्दार्थसन्दर्भगुणालङ्कारभूषितम्।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये।। (वाग्भटालं०)

विद्यानाथः— सगुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ।
काव्यम् ...................................।।

विद्याधरः— शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः।

अच्युतरायः— तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम्।
गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम्।।
(सा०सा० १/१८)

राजचूडामणिः— ''काव्यं ह्यदुष्टौ सगुणौ शब्दार्थौ सदलङ्कृती''।
(का०द०१/४)

विशिष्टशब्दस्य काव्यत्ववादिनः—

अग्निपुराणकारः— सङ्क्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।
काव्यम् .................................।।(अ०३३७/६)

दण्डी— शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।
(काव्यादर्शः १/१०)

शौद्धोदनिः— रसादिमद् वाक्यं काव्यम्।

पीयूषवर्षः (जयदेव)- निर्दोषा लक्षणवती सरीतिर्गुणभूषणा।
सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक्।। (चन्द्रा०१/७)

विश्वनाथः— वाक्यं रसात्मकं काव्यम्। (सा०द०१/३)

जगन्नाथः— रमणीयार्थप्रतिपादकः शब्दः काव्यम्। (र०गं० १/१)

तत्रैकं निदर्शनमुपस्थापयामि। विश्वनाथः– "वाक्यं रसात्मकं काव्यम्" इति पूर्वमुक्त्वा पुनः षष्ठपरिच्छेदे च "दृश्यश्रव्यविभेदेन पुनः काव्यं द्विधामतम् (सा०द०ष०परि०) इत्यभिदधे, तत् कथं सङ्गच्छते? वाक्यस्य श्रव्यत्वात्, दृश्यत्वाभावात्। पूर्वापरविरुद्धमभिधत्तेऽयमित्युक्तिस्तु न रोचते विदग्धेभ्यः, अतो विचारणीयम्।

मम त्वित्थं प्रतिभाति– "पदावली वाक्यम्" पदं च निरूपयन्नाह राजशेखरः– "व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निर्दिष्टस्तदभिधेयोऽर्थस्तौ पदम्" (का०मी०अ०६ पृ०) इति शब्दार्थयोः पदत्वं सिद्ध्यति।

विश्वनाथश्च स्वयमभिधत्ते– "काव्यस्य शब्दार्थौ शरीरम् (सा०द०, प्र०प०) इति शब्दार्थयोः पदत्वे एव सिद्ध्यति। अन्यथा तस्य पूर्वापरविरुद्धाभिधानं व्रजलेपायितं स्यात्। एवञ्च ये ये आचार्याः "पदावली काव्यम्" इत्यभिदधुस्ते सर्वेऽपि शब्दार्थयोः काव्यत्वमङ्गीकुर्वन्ति। विशिष्टा वाक् काव्यमभिदधानो जयदेवोऽपि– "उच्यतेऽसौ वाग् अर्थः, वक्तीति वाक् शब्दः, इति शब्दार्थयोः काव्यत्वं मनुते। वस्तुतो जयदेवविश्वनाथौ तु शब्दार्थयोरेव काव्यत्वमङ्गीकुरुतः।

**अत एव जयदेवः**

> **अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
> **असौ न मन्यते कस्मादनुष्णमनलङ्कृती।।**
>
> (च०लो० १/)

इत्यादिना अनलङ्कृतीत्येवांशं खण्डयति, न शब्दार्थौ काव्यमिति। विश्वनाथोऽपि अदोषौ सगुणौ पुनः क्वापि अनलङ्कृतीत्यादिविशेषणांशान् पृथक् पृथक् निराकृत्यापि विशेष्यांशं "शब्दार्थौ" इति न दूषयति। वदति च "काव्यस्य शब्दार्थौ शरीरम्" इति।

पण्डितराजः – दृश्यं पृथक्कृत्य केवलं श्रव्यमेव काव्यं मनुते। परं तत्रापि रमणीयार्थोपपादने स्थलभेदेन शब्दार्थयोर्द्वयोः प्राधान्यादुभयं काव्यमिति। अपि चानुपहसनीयकाव्यादेव कीर्त्यादिप्रयोजनानां सिद्धिरिति विशेषणान्यपि युक्तान्येवेति।

यद्यपि शब्दोऽपि विशेषणतया शाब्दबोधे भासत इति वैयाकरणानां राद्धान्तादत्रार्थपदेन शब्दोऽपि गृह्यते। एवं "रमणीयार्थरमणीयशब्दप्रतिपादकः शब्दः काव्यम्" इति फलितम्। अर्थाद् रमणीयशब्दार्थौ काव्यम्, तथापि

तयोरुपस्थापकः शब्दविशेषविन्यास एवेति दृष्ट्या रमणीयार्थप्रतिपादकः शब्दः काव्यम्'' इत्युक्तम्।

वस्तुतः ''चमत्कारिशब्दार्थौ काव्यम्'' इति निर्दुष्टं लक्षणं ज्ञेयम्। चमत्कर्तुं शीलमनयोरिति चमत्कारिणौ, तौ च शब्दार्थौ चमत्कारिशब्दार्थौ काव्यम्। चमत्कृतिश्चानन्दविशेष इति पण्डितराजः। काव्यं च कविकर्म एव, ''गुणवचनब्राह्मणादिभ्यः कर्मणि ष्यञिति सूत्रेण कर्मणि ष्यञो विधानात्, (कवेर्भाव इति विग्रहे तु ''इगन्ताच्च लघुपूर्वात्'' इत्यणि कृते ''कावम्'' स्यात्।) कविश्च लोकोत्तरवर्णनानिपुणो भवति, लोकोत्तरत्वं च चमत्कारत्वापरपर्याय इति पण्डितराजः। वर्णनं च कस्यचित्पदार्थस्यैव भवति, परं शब्देनैव भवति, अतो विलक्षणशब्दात्मकं, विलक्षणज्ञानात्मकं भवति। ज्ञानं च निर्विषयं न भवति, कस्यचित् पदार्थस्यैव भवतीति चमत्कारि-शब्दार्थौ काव्यमिति सिद्धम्।

वर्णनानिपुणः कविरित्यत्र वर्णनाशब्दः स्त्रीलिङ्गः, ल्युप्रत्ययान्तः सा च प्रतिभा, प्रतिभा च नवनवोन्मेषशालिनी प्रज्ञा, नवोन्मेषश्च कवीनां शब्दार्थयोरेव भवति, अतः पण्डितराजः ''काव्यघटनानुकूल-शब्दार्थोपस्थितिरित्याह।''

चमत्काराभिव्यञ्जनसामर्थ्यं च रसानामलङ्काराणां च। परं ''रसो वै सः'' इति श्रुत्या रस आत्मा, स च सच्चिदानन्दमयः, आनन्दविशेषश्चमत्कारश्च रसस्वरूप एव। रससार एव। रसे सारश्चमत्कार इत्युक्तेः। अतो रसानां चमत्काराभिव्यञ्जनसामर्थ्यं साक्षाद् वर्तते। शब्दार्थरूपावयवाश्रितत्वादलङ्काराणां परम्परयेति भेदः।

अयं चमत्कार एव पूर्वाचार्यैः चारुता, रमणीयता, छाया, सौन्दर्याह्लादसुखविशेषलोकोत्तरादिशब्दैर्व्यवहृतः। अतः सर्वेषामाचार्याणामत्रैव तात्पर्यमिति।

लक्ष्याणामनुशीलनेन शब्दार्थयोः काव्यत्वे महाकवयोऽप्यनुकूलाः प्रतिभान्ति। यथा सर्वप्रथमं कविताविलासो महाकविकालिदास एव रघुवंशमहाकाव्यमारभमाणः प्रारिप्सितपरिसमाप्तिकामः—

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

इति मङ्गलमाचरन् ''वागर्थप्रतिपत्तये वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वरौ वन्दमानः शब्दार्थयोः काव्यत्वमभिव्यनक्ति। वाक् च अर्थश्च वागर्थावित्यत्र द्वन्द्वात् (तयोः प्रतिपत्तये) उभयोः प्राधान्यात्।

भारविरपि—

**"स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्"।**

इत्यादिना व्यनक्ति काव्ये द्वयोः प्राधान्यम्।

**माघोऽपि–**

**"शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते"।**

(शिशु० २/७०)

इत्यादिना शब्दार्थयोः काव्यत्वं ब्रूते। इति शिवम्।।

## काव्यभेदः

एवं सामान्यलक्षणे विज्ञाते सति विशेषजिज्ञासायां काव्यभेदानाह मम्मटः। भेदशब्दोऽयं भेदनं भेद इति भावव्युत्पत्त्या विभागपरः, भिद्यतेऽनेनेति करणव्युत्पत्त्या विशेषलक्षणपरः। विभागश्च उत्तममध्यमावरत्वेन, तत्समनियत–ध्वनिगुणीभूतव्यङ्ग्यचित्रत्वेन च। तत्रोत्तमकाव्यस्य विशेषलक्षणम्—

**"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः"।**

(काव्यप्रकाशः १/४)

पार्यन्तिकव्यङ्ग्यापेक्षया न्यूनचमत्कारकारिण्यान्तरालिकव्यङ्ग्येऽव्याप्तिवारणाय वाच्यादिति। यथा- "निश्शेषच्युतचन्दनम्" इत्यादौ आन्तरालिकं व्यङ्ग्यं "तदन्तिकमेव रन्तुं गतासी"ति। तदपेक्षया पार्यन्तिकव्यङ्ग्यो विप्रलम्भशृङ्गारः। तत्रान्तरालिकव्यङ्ग्यमादायास्योत्तमकाव्यत्वाभावनिरासायाह वाच्यादिति। अत्र वाच्यपदं लक्ष्यस्याप्युलक्षणम्, एवं वाच्यलक्ष्यापेक्षयातिशयिव्यञ्जकत्वं ध्वनित्वमिति। वाच्यातिशयित्वं नाम– वाच्यापेक्षयाऽधिकचमत्कारित्वम्, अधिकचमत्कारजनकत्वं वा। रसस्य चमत्काररूपत्वेन, वस्त्वलङ्कारयोश्चमत्कारजनकत्वेन ग्रहणात्।

अत्र ध्वनिशब्दव्यवहारे– "अथवा प्रतीतिपदार्थको लोके ध्वनिः शब्द इत्युच्यते" (पस्पशा०) इति महाभाष्यमेव मूलम्। अयं भावः – घट इत्येकं पदम्, तस्माद् घटरूपोऽर्थो बुध्यते इति लोकव्यवहारः। तच्च नोपपद्यते वर्णाभिव्यक्तेः क्रमिकत्वात्। वर्णानां चाशुविनाशित्वादर्थप्रत्यायनासम्भवात्। अतो मध्यमाया वाचो वाचकत्वं निश्चीयते।

अत्रायमभिसन्धिः— मूलाधारे स्थितायाः पराया वाचो विवर्तो – नाभिदेशे पश्यन्ती वाग् इत्युच्यते। ततो हृद्देशे विवर्तो मध्यमा वाग् इत्युच्यते।

सा च श्रोत्रग्रहणायोग्यान्तबुद्धिनिर्ग्राह्या, अखण्डा, एका, स्फोटरूपा, अर्थप्रत्यायिका च। ततस्तस्याः कण्ठदेशे विवर्तो वैखरीवाग्, सा च ध्वनिरूपा। तया स्वरूपरूषितत्वेन मध्यमा वागभिव्यज्यते, अभिव्यक्ता सा अर्थं प्रत्याययति। तस्याश्चैकत्वेनार्थप्रत्यायकत्वेन च घट इत्येकं पदम्। तस्माद् घटरूपोऽर्थो बुद्ध इति व्यवहारः सिद्ध्यति।

आदौ वैयाकरणैरेव मध्यात्मकस्य स्फोटरूपस्य शब्दस्य व्यञ्जकतया वैखर्या वाचो ध्वनतीति ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतमनुसरद्भिरानन्दवर्धनाचार्यप्रभृतिभिरालङ्कारिकैरपि ध्वन्यालोके व्यङ्ग्यव्यञ्जकत्वसाधर्म्याद् वाच्योपसर्जन(गुणीभूतवाच्य)कारिणो व्यङ्ग्यस्य व्यञ्जने क्षमस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः। अत उत्तमकाव्यस्यापि शब्दार्थमयत्वाद् ध्वनिसंज्ञेति।

पण्डितराजश्चोत्तमकाव्यमुत्तमोत्तमपदेन व्यवहरन् लक्षयाञ्चक्रे–

**"शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्"।**

(रसगङ्गाधरः १/)

अत्र "कमपि" इत्यस्य चमत्काराधायकमित्यर्थः, तदुपादानादगूढास्फुटासुन्दरेषु गुणीभूतव्यङ्ग्यप्रभेदेषु नातिप्रसक्तिः। अगूढस्य वाच्यायमानतया सर्वजनवेद्यत्वात्, अस्फुटस्य विदग्धैरपि झटित्यनाकलनात्, चमत्काराधायकत्वाभावात्। असुन्दरस्य चमत्काररहितत्वात् शब्दार्थयोर्गुणीभावितात्मानाविति विशेषणेन च अपराङ्गवाच्यसिद्ध्यङ्ग–सन्दिग्धप्राधान्यतुल्यप्राधान्यकाक्वाक्षिप्तेषु च व्यङ्ग्येषु नातिव्याप्तिः। एषु चमत्कारिणो व्यङ्ग्यस्य सद्भावेऽपि शब्दार्थयोर्वस्तुतोऽर्थस्य गुणीभावाभावात्।

**"शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।**
**दयिता दायिताननाम्बुजं दरमीलन्नयना निरीक्षते"।।**

इत्याद्युदाहरणम्। अत्र नायक आलम्बनम्; सविधशयनाभिव्यक्तं रहःस्थानमुद्दीपनम्, दरमीलन्नयनात्वविशिष्टनिरीक्षणमनुभावः, नयनस्य दरमीलनेनाभिव्यक्ता लज्जा निरीक्षणेनाभिव्यक्तमौत्सुक्यं च व्यभिचारिभावौ, एतेषां संयोगाद् नायिकानिष्ठा रतिरभिव्यज्यते। निरीक्षणे प्रवृत्या सहृदयैरत्र सम्भोगशृङ्गाररस आस्वाद्यते।

उत्तमोत्तमं ध्वनिकाव्यमेव। "अमुमेव च प्रभेदं ध्वनिमामनन्ति" (रसगङ्गाधरः पृ०४८) इति तदुक्तेः।

**विमर्शः**

उभावप्यानन्दवर्धनमाश्रित्यैव लक्षयाञ्चक्रतुः। तथा हि ध्वन्यालोके—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**

(१/१३)

स्वञ्चार्थश्च स्वार्थौ तौ उपसर्जनीकृतौ याभ्यां तौ। यत्र काव्ये अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दस्तमर्थं स्वादुतदर्थवस्तु व्यङ्ग्यमर्थमभिव्यङ्क्तः स काव्यविशेषो ध्वनिरिति सूरिभिः कथितः। एतदेव मम्मटो वृत्तौ स्पष्टयति– ''न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः'' (काव्यप्रकाशः १/३) पण्डितराजोऽप्येतदेवाभिधत्ते– ''शब्दार्थौ यत्रेत्यादिनेति दिक्।

मध्यमकाव्यस्य (गुणीभूतव्यङ्ग्यस्य) लक्षणं काव्यप्रकाशे—

''**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।** (१/३) इति।

वाच्यार्थापेक्षयाऽतिशयिचमत्कारानाधायके व्यङ्ग्ये तु मध्यमं काव्यं, तदेव गुणीभूतव्यङ्ग्यमिति बुधैः कथितम्। व्यङ्ग्यस्य वाच्यानतिशयश्च न्यूनत्वेन तुल्यत्वेन चेति द्विविधः।

ननु इदं लक्षणमयुक्तम्, अवरकाव्येऽतिव्याप्तेः। न चावरकाव्यमव्यङ्ग्यम्, मध्यमकाव्यं च वाच्यानतिशयिव्यङ्ग्यमिति नातिव्याप्तिरिति वाच्यम्, अव्यङ्ग्यस्य काव्यत्वासम्भवात्तत्राव्यङ्ग्यपदेनास्फुटव्यङ्ग्यस्य सद्भावाङ्गीकारादतिव्याप्तेः। ''वाच्यानतिशयिस्फुटव्यञ्जकत्वं मध्यमत्वम्'' इति लक्षणस्वीकारे अस्फुटव्यङ्ग्याख्यमध्यमकाव्येऽव्याप्तिः स्यादिति न वाच्यम्, उपधेयसङ्करेऽप्युपाधेरसङ्करात्। अथवा'' वाच्यानतिशयित्वं नाम–

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्।**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृता।।**

इत्याद्युक्तागूढाद्यन्यतमत्वम् (का.द.पृ. २३)

इति नावरकाव्ये प्रसक्तिः।

उदाहरणम्–

''**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।**
**पश्यन्त्या मुहुर्भवति नितरां मलिना मुखच्छाया।।** इति।

अत्र दत्तसङ्केता नागतेति व्यङ्ग्यापेक्षया वाच्यस्य मुखमालिन्यस्य रतेरनुभावतया विप्रलम्भाभासपोषकतयाधिकचमत्कारित्वमिति व्यङ्ग्यस्य वाच्यापेक्षया न्यूनत्वे उदाहरणम्। तुल्यत्वेनोदाहरणं यथा—

**ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।**
**जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते।।** इति।

अत्र परशुरामः क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यं "दुर्मनायते" इति गभीरोक्त्या विग्रहवत् सन्धेरपि विवक्षितत्वेन वाच्यस्यापि चमत्कारित्वाद् वाच्यतुल्यचमत्कारि।

**पण्डितराजश्च–**

द्वितीयस्योत्तमकाव्यस्य लक्षणमाह—

**"यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद्द्वितीयम्"।**

(रसङ्गाधरः १/६६पृ०)

अर्थाद् यत्र काव्ये व्यङ्ग्योऽर्थो वाच्यापेक्षया व्यङ्ग्यान्तरापेक्षया च गुणीभूत एव (न कथमपि प्रधानीभूतः) तद् द्वितीयमुत्तमं काव्यमिति। अत्र एवकारस्यावधारणमर्थः। अर्थात् सर्वथाऽप्रधानमेवातो वाच्यापेक्षया प्रधानीभूते, व्यङ्ग्यान्तरमादाय गुणीभूते व्यङ्ग्ये न द्वितीयकाव्यलक्षणातिप्रसक्तिः। वाच्यापेक्षया प्रधानव्यङ्ग्यस्य (व्यङ्ग्यान्तरमादाय गुणीभूतेऽपि) ध्वनित्वमेव। लीनव्यङ्ग्यवाच्यचित्रे (उपमारूपकादौ) अतिव्याप्तिनिरासाय चमत्कारकारणमिति।

**निष्कर्षः**

लक्षणमिदमपि मम्मटानुसार्येव यतो हि वाच्यापेक्षया प्रधानीभूतस्य व्यङ्ग्यस्योत्तमत्वमप्रधानीभूतस्य मध्यमत्वम्। अत्राप्राधान्यं च तुल्यत्वेन न्यूनचमत्कारत्वेन च।

**मतभेदः**

परं मम्मटाचार्यः पञ्चमोल्लासे अपराङ्गगुणीभूतव्यङ्ग्यस्य "अपरस्य रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि अनुरणनरूपं वा"। इति व्युत्पत्तिं विधाय रसस्य रसाङ्गतायामपराङ्गगुणीभूतव्यङ्ग्यमुदाजहार—

**अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।**
**नाभ्युरुजघनस्पर्शी नीवीविस्रंसनः करः।।**

(का०प्र०५/११६)

अत्रार्जुनेन कृत्तं समरभूमौ पतितं भूरिश्रवसो हस्तं वीक्ष्य तद्वध्वा: प्रलापो वर्णित:। अत्रालम्बनस्यात्यन्तिकविच्छेदात् करुणरस: प्रधानम्, शृङ्गारानुगुणरशनोत्कर्षित्वादिविलासस्मरणमधिकं शोकावेगं जनयतीति शृङ्गार: करुणस्याङ्गमिति गुणीभूत:।

परं पण्डितराजो वाच्यापेक्षयाप्रधानीभूतस्य व्यङ्ग्यान्तरमादाय गुणीभूतस्य ध्वनित्वमेव मनुते। तत्र शृङ्गाररसो न वाच्यापेक्षयाऽप्रधानम्, "व्यङ्ग्यप्राधान्ये हि ध्वनि:" (ध्व०पृ० १०८) इति ध्वनिकारोक्त्या रसध्वनि: प्रधानमेव। तन्मतेऽस्य ध्वनिकाव्यत्वमित्यनयोर्वैमत्यम्।

अपि च – मम्मटोक्तं मध्यमकाव्यस्य सामान्यलक्षणमप्यत्र न सङ्घटते। शृङ्गाररसस्य वाच्यापेक्षयाऽतिशयित्वात्।

## अस्यायं सारांश:

पण्डितराजमते वाच्यापेक्षया प्रधानीभूतस्य व्यङ्ग्यस्य व्यङ्ग्यान्तरमादाय गुणीभूतत्वेऽपि ध्वनित्वमेव। अत: "अयं स रशनोत्कर्षी" इत्यादौ पण्डितराजमते ध्वनित्वम्। मम्मटमतेऽपराङ्गव्यङ्ग्यतया गुणीभूतत्वम्। परं तत्र गुणीभूतव्यङ्ग्यसामान्यलक्षणं न सङ्घटते।

## विमर्श:

मम्मटजगन्नाथावुभावपि ध्वनिसम्प्रदायाचार्यावतस्तदनुसारमेव ग्रन्थग्रन्थिविमर्शो युक्त:। ध्वनिकारश्च पूर्वाचार्याभिमतरसवदाद्यलङ्कारेभ्यो रसध्वनेर्विभक्तविषयतां निरूपयन्नाह—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादय:।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मति:।।**

(ध्वन्यालोक: २/५)

अर्थाद् यस्मिन् काव्ये रसादयोऽङ्गभूता:, वाक्यार्थीभूतश्चान्योऽर्थस्तत्काव्यसम्बन्धिनोऽङ्गभूता रसादयो रसवदलङ्कारस्य विषया: (येऽङ्गभूतास्त एवालङ्कारस्य विषया:)।

परमत्राशङ्क्यते – रस: किं कुर्वन् प्रकृतार्थमलङ्करोति? उपमादिरलङ्कार: किं कुर्वन् प्रकृतार्थमलङ्करोति? इति प्रतिवन्द्योवोत्तरम्। यद्युच्यते उपमा प्रकृतार्थमुपमाति, तदा रसोऽपि प्रधानीभूतं रसं सरसं करोति, अतोऽलङ्कारत्वम्। एतदनुसरन् प्रकाशकृदपि–

**"भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थित:"।**

(काव्यप्रकाश: ४/२६)

इत्यूचे। परं वाच्यवाचकरूपाङ्गोपस्कारद्वाराऽङ्गीभूतरसमुपकुर्वाणा एव शास्त्रेऽलङ्कारतया व्यवहृता:। रसादयस्तु साक्षाद्रसमुपकुर्वाणा: कथमलङ्कारा: ?–

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ।।**

(काव्यप्रकाश: ८/८८सू०)

इत्यलङ्कारलक्षणात्। अपि च रसोपकारकत्वमात्रेणालङ्कारत्वव्यवहारे सति गुणानामपि रसोपकारकत्वेनालङ्कारत्वमापद्यते। अत एव "मे मति:" इत्यभिदधत् (२/५) ध्वनिकार: "कश्चिद् ब्रूयात् (का०प्र० ५/२०१ पृ०) इति निगदन् प्रकाशकार: दशमोल्लासेऽनुदाहरंश्च परमतमेव यथाकथञ्चिद् व्यवस्थापयन् रसाद्यलङ्कारे स्वानभिमतिं सूचयत:। रसादीनां पराङ्गतायामपराङ्गगुणीभूतव्यङ्ग्यत्वमेवेति तन्मतम्। अत्र वाच्यस्यापि रसोङ्गीभवति– इति कस्यचिन्मतं निरूपयत्युद्योतकार:—

तथा हि—

**तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।**
**निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः।।**

(का०प्र० १०/५०६)

अर्थात् पुष्पकविमानस्थो लक्ष्मणोऽङ्गदं प्रति दण्डकारण्यं निर्दिशन् कथयति। तद् इदमरण्यं यत्र दशरथवचनानुपालनव्यसनी रामो बाहुसहायो निवसन् रक्षसां खरदूषणादीनां क्षयं चकार।

"अत्र वीररसस्य वाच्यारण्योत्कर्षकत्वाद् रसस्य वाच्याङ्गतासम्भवात्। अत एव "महतां चोपलक्षणम्" इत्यस्य महतां रसादीनामप्युपलक्षणमङ्गभाव इति व्याचख्यु:" (का० प्र० उद्योते १९१ पृ०)

परं "महतां चोपलक्षणम्" (का०प्र० १७७सू०) इत्यपरविधमुदात्तालङ्कारं लक्षयित्वा "तदिदमरण्य"मित्यादिपद्यमुदाहृत्य प्रकाशकृदभिधत्ते– "न चात्र वीरो रस:, तस्येहाङ्गत्वात्" (का०प्र०, द०उ०, पृ०६८५)। अर्थाद् वीरो रसो न वर्णनीय: किन्तु अरण्यम्, अतो वीरो रसोऽत्राङ्गम्, इत्युदात्तालङ्कार:। तस्य वीररसस्येह वर्णनीयेऽरण्येऽङ्गत्वादित्येव प्रतीते:।

भवेन्नाम वाच्याङ्गतायामुदात्तालङ्कारत्वं किन्तु वाच्याङ्गता तु सिद्धैव। वस्तुत: स्वप्रकाशचिन्मयाखण्डस्य रसस्याङ्गाङ्गीभावो नोपपद्यतेऽतस्तत्र तत्र रसस्थायिभावो गृह्यते।

प्रकृतमनुसरामः–एवम् "अयं स रशनोत्कर्षी" इत्यादौ शृङ्गारोऽर्थाद्रतिः करुणस्याङ्गमित्यभिप्रायः। अत्र वाच्यरशनोत्कर्षादिः रतेरनुभावः, स्मर्यमाणतया स एव शोकोत्कर्षक इति प्रधानीभूतः। व्यङ्ग्यापि रतिः वाच्यापेक्षया नातिशायिनी, आलम्बनविच्छेदात्। अतोऽत्र गुणीभूतस्य सामान्यलक्षणं समन्वेति। अत एव नागेशः अपराङ्गोदाहरणे "अयं स रशनोत्कर्षी" इत्यत्रापि वाच्यापेक्षया शृङ्गारस्य न प्राधान्यं, शोकोत्कर्षकतया शृङ्गाररूपव्यङ्ग्यापेक्षया वाच्यस्यैव चमत्कारित्वादिति।

(गु०म०प्र०पृ० २९)

अथवा-"वाच्यानतिशयित्वं नाम अगूढाद्यन्यतमत्वम्"। (का०द०,प्र०३०) इति स्वीकारेणादोषः। शृङ्गाररसस्य करुणाङ्गत्वेनापराङ्गता। ध्वनिकारादि-सकलालङ्कारिकसम्मतत्वात्। किं च – उपधेयसङ्करेऽप्युपाधेरसङ्करात् न दोषः। अन्यथा–

वाच्यापेक्षया प्रधानीभूतस्य व्यङ्ग्यस्य व्यङ्ग्यान्तरमादाय गुणीभावेऽपि यदि ध्वनित्वमेव तदा चित्रमीमांसाकृता—

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

(र०म० १/१)

इति कालिदासीयपद्ये निरूपितस्य पार्वतीपरमेश्वरयोः शब्दार्थवन्नित्य–सम्पृक्तत्वात् (सम्बद्धत्वात्) निरतिशयप्रेमशालिताव्यञ्जनात् शृङ्गाररसध्वनेः प्रधाने कालिदासनिष्ठपार्वतीपरमेश्वरविषयकरतिभावे गुणीभूतत्वात्, (रसगङ्गाधरः १/पृ० १५१) रसध्वनिं खण्डयता किं पूर्वापरविरुद्धं भवता न प्रजल्पितम्? गुणीभूतस्य रत्यादेः रसध्वनिव्यपदेशं निराकुर्वन् भवान् मम्मटाचार्यमेव प्रमाणीकरोति। "भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः" (का०प्र० ४/२६) इत्यादिना।

(र०ग०, पृ १५२)

**यस्योद्दामदिवानिशार्थविलसद्दानप्रवाहप्रथा-**
**माकर्ण्यावनिमण्डलागतवियद्वन्दीन्द्रवृन्दाननात्।**
**ईर्ष्यानिर्भरफुल्लरोमनिकरव्यावल्गदूधस्स्रवत्–**
**पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते।।**

(रसगङ्गाधरः, पृ० १/१६५)

अत्रेन्द्रसभान्तर्गताः सदस्याः आलम्बनविभावाः, भूमण्डलागतवियद्वन्दीन्द्रवदनविनिर्गतराजदानवर्णनमुद्दीपनविभावः। ऊधः प्रस्नुतपीयूषप्रकरोऽनुभावः, असूयादिभिः सञ्चारिभिः परिपोषितोऽपि

कामगवीगतोत्साहो न वीररसः। प्रत्युतकविनिष्ठराजविषयकरतिभावाङ्गतया गुणीभूत इति भवदुक्तं कथं सङ्गच्छते? अतो मत्कृतं पूर्वोक्तं समाधानं भवदभिमतमिति स्वतः प्रतीयते।

अपि च पण्डितराजो निराकरोति कमपि टीकाकारं "यत्तु– अतादृशि गुणीभूतव्यङ्ग्यमि"त्यादिकाव्यप्रकाशगतलक्षणे टीकाकारैश्चित्रान्यत्वं दत्तं तन्न पर्यायोक्तसमासोक्त्यादिप्रधानकाव्येषु अव्याप्त्यापत्तेः। तेषां गुणीभूतव्यङ्ग्यतायाश्चित्रतायाश्च सर्वालङ्कारिकसम्मतत्वात्" (पृ० ६८) यत्त्वत्र झोपाह्वो बदरीनाथः— "इदं पुनश्चिन्तनीयम् पर्यायोक्ताद्यलङ्कृतकाव्येषु व्यङ्ग्यस्य चमत्कारितायाः भवदभिमतायाः सद्भावेनाऽव्यङ्ग्यत्वरूपाया अविवक्षितव्यङ्ग्यत्वलक्षणाया वा चित्रताया असम्भवात्। तथा हि–

**"चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।**
**आलिङ्गनोद्दामविलासबन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्।"**

इत्यादौ पर्यायोक्तोदाहरणे राहुशिरश्छेदनात्मनो व्यङ्ग्यस्य यद्यविवक्षितत्वं तर्हि न गुणीभूतव्यङ्ग्यत्वम्। यदि विवक्षितत्वं तदा कुतश्चित्रता? व्यङ्ग्यस्य विवक्षितत्वाविवक्षितत्वयोर्विरोधेन गुणीभूतव्यङ्ग्यचित्रत्वयोरपि विरुद्धत्वात्। इत्थं च सर्वालङ्कारिकसम्मतत्वमपि चिन्त्यमेव, ध्वनिकारमम्मटप्रदीप-कृदाद्यसम्मतत्वादिति (च०टी०, पृ०६८) अवोचत्। तदविचारिताभिधानम्। यतो हि समासोक्त्यादिषु व्यङ्ग्योऽर्थो गुणीभूतो वाच्यसमासोक्त्यादीनामलङ्कार-रूपत्वादलङ्कारस्य चित्रपदेनाभिधानात्।

इत्थं पण्डितराजकृतौ प्रथमद्वितीयभेदौ ध्वनिगुणीभूतव्यङ्ग्यत्वाभिधे काव्ये एव। यदुक्तं स्वयं तेन "अनयोर्भेदयोरनपह्नवनीयचमत्कारयोरपि प्राधान्याप्राधान्याभ्यामस्ति कश्चित्सहृदय संवेद्यो विशेषः" (र०ग०, पृ० ७२) इति। अर्थात् प्रथमे भेदे व्यङ्ग्यस्य प्राधान्यम्, द्वितीये भेदे व्यङ्ग्यस्याप्राधान्यमर्थाद् गुणीभूतत्वम्। भेदद्वयेऽपि चमत्कारोऽनपह्नवनीय एवेति। बदरीनाथस्त्वत्र– "इदं पुनरत्र विचारणीयमि"त्यादिना अरुचिं प्रकटयति। तथा हि— चमत्कारोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा" इति ध्वनिकारानुशासने जाग्रति सति व्यङ्ग्यस्य यदीह वाच्यापेक्षया चमत्कारोत्कर्षस्तर्हि नाप्राधान्यम्। अथाप्राधान्यं तर्हि न चमत्कारोत्कर्षः। यदि च व्यङ्ग्यस्य चमत्कारोत्कर्षेऽपि वाच्योपपादकतयाङ्गत्वमिष्यते तदा तदङ्गत्वमप्यकिञ्चित्करम्। चमत्कारोत्कर्षनिबन्धनस्य शिष्टपरिपाटीसम्मतप्राधान्यस्य तथाप्यव्याहतत्वात्।

किञ्च यत्र तुल्यचमत्काराधायकत्वेन वाच्यव्यङ्ग्ययोः समं सन्दिग्धं वा प्राधान्यं तयोर्गुणीभूतव्यङ्ग्यप्रकारयोः भवन्मते कुत्रान्तर्भावः?

न चाव्याप्तिरेषितुं शक्यते–

**''ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।**
**जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते''।।**
**हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।**
**उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि।।**

इत्यनयोश्चमत्कारस्यापलापानर्हत्वेन मध्यमकाव्यतायाः सर्वसम्मतत्वात्। इति।
(च०टी०, पृ०७२)

परमिदं सर्वमापातरमणीयम्—

**राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु ।**
**शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय।।**

इत्यत्र जानकीकुशलावेदनेन राघवः शिशिरीकृत इति व्यङ्ग्यमाकस्मिक-कपिकर्तृकहनुमद्विषयककोपोपपादकतया गुणीभूतमपि दुर्दैववशतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहतीति सर्वानुभवसिद्धत्वात्। एवं क्वचिद्राजानुगतविवाहप्रवृत्तभृत्यवदित्यादिमम्मटोक्तेरपि सिद्धश्चमत्कारो व्यङ्ग्ये परमप्राधान्याद् गुणीभूतत्वमेव तस्य।

अपि च तुल्यप्राधान्ये सन्दिग्धप्राधान्ये व्यङ्ग्ये चमत्कारो नास्तीति केनोच्यते? गुणीभूतत्वं तु वाच्यचमत्कारापेक्षयाधिकचमत्कारानाधायकत्वात्। अवरकाव्यस्य लक्षणं प्रकाशे–

**''शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्''** (१/४)

अत्र चित्रमित्यध्याहार्यं तेन– अव्यङ्ग्यं काव्यमवरमधमं स्मृतं तदेव बुधैश्चित्रमिति कथितम्। तच्चित्रं द्विविधम्– शब्दचित्रं वाच्यचित्रञ्चेति।

अव्यङ्ग्यमित्यत्रेषदर्थे नञ्, तस्य चास्फुटत्वे पर्यवसानात् अस्फुटव्यङ्ग्यमित्यर्थः। सर्वथा व्यङ्ग्यरहितस्य काव्यत्वासम्भवात्।

यद्यपि अस्फुटव्यङ्ग्यमवरमित्युक्त्या अस्फुटाख्ये गुणीभूतेऽवरकाव्यताया अतिप्रसक्तिः स्यात्तथापि अत्रास्फुटत्वं कविविवक्षारहित्वं, तत्रास्फुटत्वं कविविक्षित्वे सति सहृदयैरप्यसंवेद्यत्वमिति न दोषः। तथा ह्युक्तं ध्वनिकारेण—

**रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः।।**

अत्र काव्यलक्षणे गुणपदं गुणव्यञ्जकवर्णमात्रपरम्। अन्यथा गुणानां रसधर्मत्वेन रससद्भावे चित्रत्वानापत्तेः। उदाहरणं च– ''स्वच्छन्दोच्छलदच्छ'' इत्यादिशब्दचित्रस्य। विनिर्गतं मानदमात्ममन्दिरात्'' इत्याद्यर्थचित्रस्य।

## पण्डितराजश्च

तृतीयं भेदं लक्षयामास–

**''यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तत्तृतीयम्''** इति।

यस्मिन् काव्ये व्यङ्ग्यचमत्कारस्य असमानाधिकरणो वाच्यचमत्कारस्तत्तृतीयं मध्यमं काव्यम्। परं व्यङ्ग्यस्य वाच्यस्य च चमत्कारस्य समानम् (एकमेव) हृदयमधिकरणमाश्रयः, तर्हि कथमसमानाधिकरणम्, इति न शङ्कनीयम्। अत्रासामानाधिकरण्यम-स्फुटत्वम्। एवञ्च परिष्कृतं तृतीयकाव्यस्य लक्षणम्—

शब्दविशिष्टशब्दत्वं तृतीय(मध्यम)काव्यत्वम्। वैशिष्ट्यं च स्वतादात्म्यस्वव्यङ्ग्यार्थविषयशाब्दबोधजन्यचमत्कारविशिष्टान्यचमत्कार-जनकबोधविषयार्थप्रतिपादकत्वैतदुभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्य च स्वसमवायिसमवेतत्वस्वाव्यवहितपूर्ववर्तित्वैतदुभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्ये स्वपदेन वाच्यचमत्कारो ज्ञेयः। उदाहरणं यथा—

''तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी'' (रसगङ्गाधरः १/ )इति। अत्र हिमगिरभुजायमानाया इत्यत्र वाच्योत्प्रेक्षालङ्कार एव चमत्कृतिं जनयति। जलधिजठरप्रविष्टहिमगिरि-भुजवदित्यादिना प्रतीयमानश्वैत्यपातालतलचुम्बित्वयोश्चमत्कारलेशोऽनुभव-पथमवतरन्नप्युत्प्रेक्षाचमत्कारान्तर्भूततयाऽस्फुटः। स्वभावतो गौरवर्णया ग्राम्यनायिकया कृतकेशरानुलेपनेनाच्छादिततया स्वतःसुषमाधायकमपि स्वीयाङ्गगौरत्वं तिरोहितं स्फुटं न प्रतीयते तद्वत्।

सर्वथा व्यङ्ग्याभावोऽत्र न विवक्षितः, व्यङ्ग्यसंस्पर्शमन्तरा वाच्यार्थस्य रमणीयतामाधातुमक्षमत्वात् काव्यत्वमेव न स्यात्। एवं पर्यायोक्तसमासोक्ति- दीपकापह्नुतिआक्षेपाप्रस्तुतप्रशंसादीनां वाच्यस्य प्राधान्येन गुणीभूतस्यापि व्यङ्ग्यस्य चमत्कारितया द्वितीयप्रभेदेऽन्तर्भावः। अन्येषामुपमारूपकादीनां तृतीयभेदेऽन्तर्भावः। इत्थं सर्वेषामलङ्कारप्रधानकाव्यानामन्तर्भावो ज्ञेयः।

इत्थं पण्डितराजो जागरूकाजागरूकगुणीभूतव्यङ्ग्ययोः द्वितीयतृतीयप्रभेदयोः अर्थालङ्कारप्रधान(अर्थचित्र)काव्यानामन्तर्भावमुपपाद्य शब्दालङ्काराणां कृते चतुर्थप्रकारं लक्षयति—

**''यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम्'' इति।**
(रसगङ्गाधर:)

यत्र अर्थप्रतीतिजन्यचमत्कृतिपोषिता शब्दप्रतीतिजन्यचमत्कृति: प्रधाना तदधमं काव्यम्। यथा—

**मित्रात्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे।**
**गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः।।**
(र०गं०पृ० ७९)

अत्र शब्दालङ्कारवृत्त्यनुप्रासजन्यचमत्कृतिरेव प्रधानभूता, कविसंरम्भगोचरत्वात्। अर्थप्रतीतिजन्य: कविनिष्ठविष्णु-शिवविषयकरति-भावचमत्कार: शब्दचमत्कृतौ लीन:। तदुक्तम्—

**यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।**
**शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते।।**
(ध्वन्या० २/)

अर्थचमत्कृतिशून्यानां शब्दचमत्कृतिविशिष्टानामेकाक्षर-पद्यार्धावृत्तियमकपद्मबन्धादीनां कृते पञ्चमो भेदोऽधमाधमाख्यो न गणित:। तेषामर्थचमत्कृतिशून्यतयाऽकाव्यत्वात्, रमणीयार्थप्रतिपादकशब्दस्यैव काव्यत्वात्।

## मम्मटमतखण्डनम्

इत्थं पण्डितराजश्चतुर: काव्यभेदान् निरूप्य काव्यस्य त्रिविधत्वमुपपादयतां मम्मटादीनां मतं निराकरोति— केचित्, उत्तममध्यमाधमभावेन त्रिविधमेव काव्यामचक्षते। तत्रार्थचित्रशब्दचित्रयोरविशेषेणाधमत्वं वक्तुमयुक्तम्। शब्दचित्रापेक्षया अर्थचित्रे चमत्काराधिक्यस्य स्फुटमनुभूयमानत्वात्। न हि कश्चन सचेता:- ''विनिर्गतं मानदमात्मन्दिरात्'' इति प्रकाशोदाहृतार्थचित्रकाव्येन, ''सच्छिन्नमूल: क्षतजेन रेणु:'' इत्यप्पयदीक्षितोदाहृतार्थचित्रकाव्येन सह च पामरश्लाघ्यस्य- ''स्वच्छन्दोच्छलदच्छकच्छे''त्यस्य शब्दचित्रस्याविशेषं वक्तुमिष्टे। ( चमत्कारयो: न्यूनाधिकभावे सत्यपि यद्येकभेदत्वन्तर्हि स्वल्पान्तरयोर्ध्वनिगुणीभूतयोर्भेदे कथं दुराग्रहः। तयोरप्येकभेदत्वं स्वीकर्तव्यम्)। (र०गं०१, पृ० ७९-८१)

गङ्गाधरशास्त्रिण: - ''एकाक्षरादिचित्रकाव्येषु सर्वर्थार्थराहित्यं चमत्कृतिराहित्यं वा नाङ्गीकुर्वन्ति। एवं सति सहृदयानां तत्राप्रवृत्त्यापत्ते:।

"अर्थचमत्कार एव काव्यत्वप्रयोजको न शब्दचमत्कार:" इति" स्वीकृत्य महाकविभिस्तत्र तत्र निबद्धेषु चित्रकाव्योदाहरणेषु अकाव्यत्वमुपपादयता भवता प्राचीनमर्यादैव लङ्घिता, "भम धम्मिअ" (भ्रम धार्मिक) इत्यादीनामप्यकाव्यत्वापत्ते:। एवमर्थप्रतीतिजन्यचमत्कारापेक्षया शब्दप्रतीतिजन्यचमत्कारस्य न्यूनत्वात् प्राचीनकविपरम्पराऽनुमतं निकृष्टकाव्यत्वमेकाक्षरादिचित्रकाव्येष्वनिर्बाधमित्याहु:।

(रसगंगाधर: चन्द्रिका पृ०८०)

नागेशोऽप्येवमाह– "काव्यस्य शब्दार्थौ शरीरम्, अर्थो हि अन्तरङ्गशरीरम्। तत्रैव कविसंरम्भात्। अत एव यत्र कविकल्पितो न कश्चिदर्थस्तत्राकाव्यत्वं वदन्ति सहृदया:। शब्दस्तु तेन विनार्थस्य प्रतिपादनमशक्यमित्युपचरितं शरीरमिति। इदमेव चित्रसाम्यम्। चित्रलिखिततुरगबुद्धिवदस्यापि काव्यत्वबुद्धिरित्यस्याधमत्वम्"।

(का०प्र०प्रदीद्योत पृ०१९)

ध्वनिकारोऽपि – विशृङ्खलगिरां कवीनां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिमालोच्य चित्रकाव्यस्य विषयं परिकल्पितवान्। यदा कवि: रसभावादितात्पर्यविवक्षारहित: शब्दालङ्कारमर्थालङ्कारं वा निबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते। तथाविधे विषये रसादिप्रतीति: परिदुर्बला भवतीति। (ध्वन्या० ३/४९६–९७)

परमग्रे– "इदानीन्तनानां तु न्याये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्त: काव्यप्रकार:"। इत्युक्त्या प्रतीयते यत्— अर्थचमत्कृतिसामान्यशून्यं काव्यं नाङ्गीकुर्वन्ति ध्वनिकारादर्वाचीना:, अत एव दर्पणकार: काव्यस्य भेदद्वयमेवाङ्गीचक्रे। चित्रकाव्यं तु चित्रं वदति न काव्यम्।

(सा०द०, परि० ४)

**मतभेद:**

मम्मट: काव्यं त्रिविधं मनुते। शब्दचित्रमर्थचित्रं चाविशेषेणाधमकाव्यं ब्रूते। पण्डितराजश्च काव्यं चतुर्विधमुपपादयति। ध्वनिकाव्यस्योत्तमोत्तमत्वम्, गुणीभूतव्यङ्ग्यस्य जागरूकगुणीभूतव्यङ्ग्यादर्थचित्रस्य (पर्यायोक्तादे:) चोत्तमत्वम्, न्यूनचमत्कारिव्यङ्ग्यवदर्थचित्राणां मध्यमत्वम्, अर्थचमत्कृत्युपस्कृतशब्दचित्राणामधमत्वम्। एकाक्षरादीनां च चित्राणामकाव्यत्वमिति। अर्थचित्राणां मध्यमत्वम्, शब्दचित्राणामधमत्वमिति।

**विमर्शः**

मम्मटाचार्यो ध्वनिकारमतमनुसृत्य काव्यभेदं कृतवान्। ध्वनिकारोऽपि ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदानङ्गीकरोति। चित्रभेदे शब्दचित्रार्थचित्रेऽविशेषणैव गृह्णाति। तथा हि—

**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।**
**काव्ये उभे ततोऽन्यद् यत्तच्चित्रमभिधीयते।।**
**चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्।**
**तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्।।**

(ध्वन्या० ३/४१–४२)

अर्थाद्यत्र व्यङ्ग्यप्राधान्यं तत्र ध्वनिसंज्ञकं काव्यम्, यत्र गौणत्वं तत्र गुणीभूतव्यङ्ग्यत्वम्, यत्र रसभावादितात्पर्यरहितं वाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धं तदालेख्यप्रख्यं चित्रम्। परमेतन्मते दुष्करयमकादावपि चित्रत्वम्। यदुक्तं तत्रैव—

**''तत्र किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि''। इति।**

(ध्व०, पृ० ४९५)

परं पण्डितराजः स्वप्रखरया प्रतिभया चमत्कारयोरुत्कर्षापकर्षौ विचार्य विशेषं निर्धार्य पृथग्भेदत्वमुपपाद्य चतुर्विधत्वं कृतवान्।

परमत्र विवेचनीयम्– दुष्करपद्यार्धावृत्तियमकैकाक्षरपद्मबन्ध-मुरजखड्गबन्धादिचित्रकाव्यानां काव्ये गड्डभूतत्वं तु मम्मटेनाऽप्यापादितम्। परम्—

**''वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।**
**सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्''।।**
**''यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।**
**यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य''।।**

इत्यादिपदवाक्यावृत्तिलाटानुप्रासे तथा—

**''नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।**
**मृदुलतान्तलतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः''।।**

**''मधुपराजिपराजितमानिनीजनमनः सुमनः सुरभिश्रियम्।**
**अमृतवारितवारिजविप्लवस्फुटितताम्रतताम्रवणजगत्।।''**

इत्यादि यमके एवं पुनरुक्तवदाभासवक्रोक्त्यादिषु शब्दचित्रेषु न्यूनचमत्कार इति न केनापि वक्तुं शक्यते, भवतैव–

**"उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पन्धयानाम्**
**निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम्।**
**उत्पातस्ताभसानामुपहतमहसां चक्षुषां पक्षपातः**
**सङ्घातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत्।।**

इति पद्ये वृत्यनुप्रासप्राचुर्यादोजोगुणप्रकाशकत्वाच्च शब्दस्य प्रसादगुणयोगादनन्तरमेवाधिगतस्य रूपकस्य हेत्वलङ्कारस्य वा वाच्यस्य चमत्कृत्योस्तुल्यत्वात् समप्राधान्यस्योपपादितत्वात्। समासोक्तिपर्यायोक्त-दीपकतुल्ययोगिताप्रस्तुतप्रशंसाक्षेपानुक्तनिमित्तविशेषोक्तिसङ्करालङ्कारेषु स्फुटव्यङ्ग्येषु तु मध्यमकाव्यतायाश्चित्रतायाः सर्वैरङ्गीकृतत्वस्यापि भवतैवोपपादितत्वात्। अन्येषां तु शब्दार्थचित्रयोर्विशेषाभावादेकभेदत्वगणने न कोऽपि विरोध इति।



# अथ द्वितीयोऽध्यायः
# वृत्तिविमर्शात्मकः

## अथाऽभिधा

लोकशास्त्रविलक्षणशब्दार्थमयस्य काव्यस्य शरीरीभूतयोः शब्दार्थयोर्विभागं निरूपयन् मम्मटाचार्यः प्राह–

''**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा**'' इति।

(का०प्र० २/)

तत्र त्रिधापदघटकीभूतधाप्रत्ययार्थजिज्ञासायां विद्वांसो वर्णयन्ति— ''स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधानुकूलो व्यापारः'' इति। स च शब्दस्त्रिधेत्यत्र न समन्वेति। यतो हि स्वं त्रिधापदार्थः, तत्समभिव्याहृतपदार्थः शब्दपदार्थः, पदार्थताऽवच्छेदकं शब्दत्वं तद्व्याप्यो वाचको लक्षको व्यञ्जकश्च, ते न मिथो विरूद्धाः, प्रत्युत य एव गङ्गाशब्दः प्रवाहरूपस्यार्थस्य वाचकः, स एव तटरूपस्यार्थस्य लक्षकः, शैत्यपावनत्वाद्यतिशयरूपार्थस्य व्यञ्जकोऽपीति (वाचकलक्षकान्यतर एव शब्दो व्यञ्जको भवति) साङ्कर्याद् भेदाभावात् शब्दे कथं त्रिविधत्वमिति न शङ्क्यम्, वाचकत्वाद्युपाधिष्वेव त्रिविधत्वस्य स्वीकारात्, उपाधीनामसाङ्कर्यात् न तूपाधेयेष्विति निर्णयात्। तत्रोपाधयः—

(१) अभिधा

(२) लक्षणा

(३) व्यञ्जनेति त्रिविधाः।

मीमांसादिषु गौणीत्याख्योपाध्युपहितगौणशब्दस्य सत्त्वाद् व्यञ्जकस्य चाभावान्-न्यायनये च गौण्या लक्षणायामन्तर्भावाद् द्विविधस्यैव शब्दस्योपलब्धेः कथं त्रिविधः शब्द इति शङ्कानिराकृतये अत्रेति पदमुपात्तम्, अर्थात् काव्ये एवैवंविधस्त्रिधाशब्दः, नान्यत्रेति।

काव्ये केचन एव शब्दा प्रयोक्तव्याः। ये न रुक्षाः, नारून्तुदाः, न वोद्देश्यप्रतीतिप्रतिबन्धकाः, न वा पर्युषिताः, घण्टानिनादानुरणनवन्नवनवार्थनिःस्यन्दिनो मधुरा अलौकिकचमत्कारकारिणो वा समुचिता गुणालङ्कारादिवैशिष्ट्याल्लोकविलक्षणा एव शब्दा प्रयोगार्हा भवन्ति। तथा चोक्तमानन्दवर्धनेन—

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।। इति।**

(ध्व०लो० १/८)

एवं व्यञ्जकशब्दस्यैव काव्ये प्राधान्याद् व्यञ्जनोपाधिविशिष्टस्यैव व्यञ्जकत्वाद् व्यञ्जनायाश्चाभिधालक्षणामूलकत्वात् लक्षणाया अप्यभिधापुच्छभूतत्वात् प्रथमं वाचकोपाधिभूताऽभिधा निरूप्यते। तत्र मम्मटः—

**"स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते"।**

(का०प्र० २/८)

अत्र अस्य शब्दस्य व्यापारोऽभिधा इत्येतावन्मात्रोक्तौ लक्षणादिष्वतिव्याप्तेः, "तत्र" "मुख्य" इति पदद्वयमुपात्तम्। सः साक्षात् सङ्केतितोऽर्थ एव मुख्योऽर्थः तत्र मुख्येऽर्थे (सङ्केतितेऽर्थे)। तत्रेत्यत्र विषयसप्तमी। अतः सङ्केतितार्थविषयकः शब्दस्य मुख्यो व्यापारोऽभिधा। यथा सर्वेषु शरीरेषु मुखमेव परिचायकतया झटित्यवलोक्यते, तथा सर्वेभ्योऽर्थेभ्यः सङ्केतितार्थ एव झटिति बुध्यतेऽतो मुखमिव प्रधानत्वात् स मुख्योऽर्थः, तद्वाचकः शब्दोऽपि मुख्यः। अत एवाग्रे वक्ष्यति ग्रन्थकारः "मुख्यशब्दाभिधानात् लक्षणायाः को भेदः" इति। (का०प्र० २/१३) तदर्थविषयकः शब्दव्यापारोऽपि मुख्य इति। सङ्केतितार्थः सङ्केतविषयः, सङ्केतश्च शक्तिग्राहकः समयः, स च "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्याद्याकारेश्वरेच्छा, इच्छा वा। व्याकरणादयो वा।

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धाः।।**

(न्या०सि०मु०श०ख०)

इत्युक्तेः । स सङ्केतः कुत्रेत्याकाङ्क्षायामाह—

**"सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा"**(का०प्र० २/१०)

अत्रादिपदेन गुण–क्रिया–यदृच्छानां ग्रहणम्। एवं जाति–गुण–क्रिया-यदृच्छासु सङ्केतः इत्येकः पक्षः वैयाकरणसम्मतः। जातौ सङ्केत इत्यपरः पक्षः मीमांसकसम्मतः। यद्यपि "घटमानय" "अश्वमानय" इत्याद्युक्तौ घटव्यक्तेरश्वव्यक्तेरेवानयनं भवति, लोकव्यवहारश्च व्यक्तेरेव सिद्ध्यति। गां दोग्धीत्यादौ दोहनादिक्रियासम्पादिका व्यक्तिरेव। अपि च मुख्यः शक्तिग्राहकः" "व्यवहारः", यतो हि बालः प्रथमं व्यवहारादेव शक्तिं गृह्णाति। उत्तमवृद्धेन गामानयेत्युक्तौ मध्यमवृद्धेनानीतां गोव्यक्तिमालोक्य बालः

व्यक्तावेव सङ्केतं गृह्णाति। अतः व्यक्तावेव सङ्केतः कुतो न? गोव्यक्तीनामानन्त्यात् सर्वासामेकत्रोपस्थित्यसम्भवात् सर्वासु व्यक्तिषु सङ्केतग्रहस्य दुर्लभत्वात्। व्यक्तौ सङ्केतस्वीकारे सङ्केतितस्याभिधाबोध्यत्वाद् व्यक्तिरूपोऽर्थः शक्यः स्यात्, शक्यता व्यक्तौ स्यात्, शक्यतावच्छेदिका तत्तद् व्यक्तिः स्यात्, व्यक्तीनामानन्त्यात् शक्यतावच्छेदकेऽप्यानन्त्यमित्यानन्त्यदोषः स्यात्। सङ्केतग्रहकाले उपस्थितासु कतिपयव्यक्तिष्वेव सङ्केतग्रहस्वीकारेऽन्यासु सङ्केतग्रहस्याभावात्, अन्यासां (सङ्केतग्रहकालेऽनुपस्थितानां व्यक्तीनाम्) बोधो न स्यादिति व्यभिचारः। सङ्केतग्रहमन्तरैव बोधे, शक्तिग्रहस्य कारणतानुपपत्तेर्वाव्यभिचारः। गौरित्युक्ते यथाऽसङ्केतिताया गोव्यक्तेर्ज्ञानं तथैवासङ्केतिताया अश्वव्यक्तेरपि ज्ञानं स्यादिति वा व्यभिचारः स्यात्। यदि यासु व्यक्तिषु सङ्केतग्रहस्तद् धर्माश्रयासु तदानीमनुपस्थितास्वपि व्यक्तिषु योग्यतावशात् शाब्दबोधः स्यादेव, यत्प्रकारकशक्तिग्रहस्तत्प्रकारिकोपस्थितिस्तत्प्रकारकः शाब्दबोध इति समानप्रकारत्वेनैव कार्यकारणभावः कल्पते तदाऽत्र दोषाभावेऽपि "गौः शुक्लश्चलो डित्थ" इत्यादीनां सर्वेषां शब्दानां व्यक्तिरेव वाच्या स्यादिति प्रवृत्तिनिमित्ते भेदाभावात्, जातिगुणक्रियाशब्दानां विभागो न स्यात्। जात्यादिषु सङ्केतस्वीकारे गोत्वरूपजातिमान्, शुक्लत्वरूपगुणवान्, चलनरूपक्रियावान्, डित्थनामायमिति जाति–गुण–क्रिया–संज्ञारूप–प्रवृत्ति–निमित्तभेदाद् भवत्येव विषयविभागः। अतः व्यक्तौ सङ्केतग्रहो न युक्तोऽपि तु व्यक्तेरुपाधौ सङ्केतग्रहो युक्तः।

उपाधिश्च द्विविधः, वस्तुधर्मः, वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मोऽपि सिद्धसाध्यभेदेन द्विविधः, तत्र सिद्धोऽपि वस्तुनः प्राणप्रदः, विशेषाधानहेतुश्चेति द्विविधः। तत्र प्रथमः जातिः, सा हि वस्तुनो व्यवहारयोग्यतां सम्पादयतीति। तदुक्तं भर्तृहरिणा—

"न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः" इति (वा०प०) (गौः स्वरूपमात्रेण गोव्यवहारस्य विषयो न) तथा सत्यश्वादेरपि गोपदेन व्यवहारः स्यात्, नापि गोभिन्न इति व्यवहारस्य विषयः, गौरपि अगौः स्यात्, अतः गोत्वाभिसम्बन्धात् गौर्गोपदव्यवहारस्य विषयः। एतदेव पदार्थस्य प्राणप्रदत्वं जातेः। द्वितीयः गुणः। जात्या प्राप्तव्यवहारयोग्यताकं वस्तु शुक्लादिगुणेन सजातीयेभ्यः पृथक् क्रियते। "शुक्लां गामानय"- इत्युक्तौ कृष्णा पीता वा गौर्नानीयते। जातिर्नित्या, गुणः कदाचिदपैत्यपीति न नित्यः। केषाञ्चिन्मते गुणोऽपि नित्यः (यावद् वस्तुस्थितत्वात्) (द्रष्टव्यम्- ल०श०शे० जात्याख्यामिति सूत्रे) साध्यश्च क्रियारूपः, साध्यत्वं

चोत्पद्यमानत्वम्, आख्यातेन तथैव प्रतीतेः। चुह्लिकाधिश्रयणादधःश्रयणान्ताः क्रमिकाः पूर्वापरीभूता व्यापारास्तदवयवाः, बौद्धस्तत्समूहश्च क्रिया। यदुक्तम्–

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते''।।**

(वा०प०)

तथा—

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते।।**

(वा०प०)

क्रियाऽपि द्विविधा, साध्या सिद्धा च। तत्र क्रियान्तराकाङ्क्षानुत्थापकताऽवच्छेदकत्वं साध्यत्वम्, क्रियान्तराकाङ्क्षोत्थापकताऽवच्छेदकत्वं सिद्धत्वम्। अर्थाद् यस्याः क्रियाया उच्चारणे क्रियान्तरस्याकाङ्क्षा न जायते सा साध्यभूता, यथा पचति, पठति। यस्या उच्चारणे क्रियान्तरस्याकाङ्क्षा जायते सा सिद्धभूता यथा— पाकः, पाठः, पठन् पठनमित्यादि। वक्तृयदृच्छासन्निवेशितश्च पूर्वपूर्ववर्णैरस्फुटतयाभिव्यक्तश्चरमवर्णबुद्ध्या स्फुटतरमभिव्यक्तः स्फोट एव। स च व्यञ्जकवर्णानां क्रमिकत्वेऽपि स्फोटोऽखण्डः, क्रमरहितः, वक्त्रा डित्थाद्यर्थेषु शक्तिग्रहोपायत्वेन सन्निवेश्यत इति संज्ञारूपो यदृच्छात्मकः। अत्र ''संज्ञा जातिक्रियाशब्दान् हित्वान्ये गुणवाचिनः'' इत्युक्तेः जातिद्रव्यक्रियातिरिक्ता गुणाः ज्ञेयाः। अत एव ''चतुष्टयी शब्दानां प्रवृत्तिः'' इति महाभाष्यकारः (ॠऌक् सूत्रे भाष्ये)।

परमाणुत्वमपि जातिरेव, तत्र गुणत्वं गुणमध्यपाठात् पारिभाषिकं न वास्तविकम्। अत्र गुणे क्रियासु च शक्तिस्वीकारे तेषामानन्त्यादानन्त्यव्यभिचार-दोषौ नोद्भावनीयौ, गुणाः क्रियाश्च वस्तुत एकरूपा एव तेषामाश्रयभेदाद् भेद इव लक्ष्यते, यथा एकमेव मुखं खड्गे दीर्घं, मुकुरे अणुमहद्रूपं तैले स्निग्धमिति आश्रयभेदाद् भिन्नं लक्ष्यते तथा गुणाः क्रियाश्चाश्रयभेदाद्भिन्नाः लक्ष्यन्ते। मीमांसकरीत्या सङ्केतविषयमाह ''जातिरेव वा'' जातिवाचकशब्दानां जातिरेव प्रवृत्तिनिमित्तिमित्यत्र नास्ति वैयाकरणमीमांसकयोर्मतभेदः। परं गुणक्रियासंज्ञाशब्दानामपि जातिरेव प्रवृत्तिनिमित्तम्, इति मीमांसकमतम् ''अन्ये'' इत्युक्त्योपपादयन्ति। तेषामयमाशयः – हिमः, शुक्लः, पयः शुक्लतरम्, शङ्खः, शुक्लतमः, इति प्रतीत्या तत्र तत्र भिन्नं भिन्नं शुक्लत्वं भासतेऽतः परमार्थतः शुक्लादयो गुणाः प्रतिव्यक्ति भिन्ना एव, पाकात् शुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेश्च गुणाः भिन्नाः। एवं भिन्नेषु शुक्लादिगुणेषु

सर्वत्र यत् "शुक्ल: शुक्ल:" इत्यभिन्नेन शब्देनाभिधानमभिन्नप्रतीतिश्च यतो जायते तत् शुक्लत्वादिकं जाति:। गुडतण्डुलादिद्रव्याश्रिता या: पाकक्रियास्ता अपि प्रतिद्रव्यं भिन्ना एव, परं यस्मात् पाक: पाक इत्यभिन्नाभिधान-मभिन्नप्रतीतिश्च जायते तत् पाकत्वादिकं जाति:, एवं डित्थादिसंज्ञाशब्दा अपि (येषां मते संज्ञाशब्दानां शब्द एवार्थ:) बालोच्चारिता वृद्धोच्चारिता: शुकाद्युच्चारिता भिन्ना एव तेष्वेकाकारप्रतीत्या डित्थत्वादिकं जाति:। येषां मते संज्ञाशब्दानां शब्दो नार्थ: प्रत्युत व्यक्तिरेवार्थ: तेषां मते— डित्थादिपदार्थोऽपि प्रतिक्षणं भिद्यमानो भिन्न एव, परमनुगताकारप्रतीत्या तत्र डित्थत्वादिकं जातिरिति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमिति। तत्र जातौ शक्तिस्वीकारे व्यक्तिबोध: मीमांसकमते आक्षेपात् लक्षणया वा जायते। आलङ्कारिकाणां मते व्यञ्जनयेति, व्यञ्जनानुकूल्यात् मतद्वयस्यैवोपपादनं ग्रन्थकृता कृतम्। जातिविशिष्टव्यक्तौ शक्तिस्वीकर्तृणां नैयायिकानामथ च तद्भिन्नभिन्नत्वरूपापोहपदार्थवादिनां बौद्धानां च मतं व्यञ्जनाया अनुपायभूततयाऽप्रकृतत्वादुपेक्षितम्"। इति।

क्षणिकविज्ञानवादिनां बौद्धानां मते जाति: कश्चन नित्य: पदार्थो नास्ति, व्यक्तौ सङ्केतग्रहस्वीकारे यस्यां व्यक्तौ सङ्केत: सा व्यक्तिरेव क्षणिकत्वाद्रूपान्तरे परिणताऽतोऽतद्व्यावृत्तौ सङ्केत इति।

परं यदि गोशब्द: स्वेतरव्यावृत्तौ चरितार्थस्तदा गोपदार्थस्य बोधायापरो ध्वनिरपेक्षित: स्यात्।

अपि च गोपदार्थस्य बोधाय गवेतराणां सर्वेषां पदार्थानां बोधोऽपेक्षित: स्यादिति महद्गौरवम्।

वाचकशब्दं निरूपयन्नाह "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचक:"। (का०प्र० २/९) इति।

शब्द: सङ्केतग्रहसहायेनैवार्थं प्रतिपादयति। अतो यस्य शब्दस्य यस्मिन्नर्थे साक्षात् (अव्यवधानेन) सङ्केतो गृह्यते, स शब्द: तस्यार्थस्य वाचक:। अत्र साक्षादर्थप्रतिपादिकायां चेष्टायामतिव्याप्तिनिरासाय य: (शब्द:) इति। माधुर्यादिगुणव्यञ्जकेषु वर्णेष्वतिप्रसक्तिनिरासायाभिधत्त इति। अत्र साक्षादिति सङ्केतितविशेषणं "यस्य यत्राऽव्यवधानेन सङ्केतो गृह्यते" इति वृत्या प्रतीयते। तेन शक्यसङ्केतव्यवहितसङ्केतत्वात् "वटो ग्राम:" इत्यादौ न वाचकत्वप्रसक्ति:। नानार्थस्थले (शब्दशक्तिमूलवस्तुध्वनौ) नानार्थस्य शब्दस्य द्वयोरर्थयोर्वाच्यत्वात् प्रकरणादिना प्रस्तुतेऽर्थेऽभिधायां नियमितायामप्रस्तुतार्थस्य

व्यञ्जनया प्रतीतौ तत्र वाचकत्वप्रसक्तिनिरासायाभिधत्ते इत्यावश्यकम्। अन्यथा ''साक्षात्, सङ्केतवान् वाचकः'' इत्येतावतैव सिद्धेः।

अत्र प्रदीपकारः–वस्तुतः साक्षाद् इत्यभिधानक्रियाविशेषणमतो नानार्थस्य प्रस्तुतेऽर्थे संयोगादिभिरभिधायां नियन्त्रितायां यत् शक्यान्तरस्य ध्वननं तत्र न वाचकत्वप्रसक्तिः। (का०प्र०, प्र०टी० २/२९) इति।

**पण्डितराजश्च–**

''शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतः सम्बन्धविशेषोऽभिधा'' इत्यभिधामभिदधे (र०ग० २/१२३)। शब्दप्रतियोगिकोऽर्थानुयोगिकः, अर्थप्रतियोगिकः शब्दानुयोगिको वा शक्त्याख्यः सम्बन्धविशषोऽभिधा। अभिधा च पदार्थान्तरमिति वैयाकरणा मीमांसकाश्च। ''अस्माच्छब्दादयमर्थो बोद्धव्यः'' इत्याकारिकेश्वरेच्छा एवाभिधा, तत्रेश्वरेच्छाया विषयभूताः सर्वे पदार्थाः, अतो विषयतासम्बन्धेनेच्छायाः सर्वत्र सद्भावात् पटादयोऽपि घटपदवाच्या भवेयुरिति तन्निराकृतये ''घटपदजन्यबोधविषयतावान् घटो भवतु'' इत्यादिरीत्या व्यक्तिविशेषमुपाधीकृत्येश्वरेच्छायास्तत्पदाभिधात्वं स्वीकरणीयमिति नैयायिकाः। परं जानाति, इच्छति ततः यतते इति रीत्या ज्ञानस्य प्रथमोपस्थितस्य परित्यागे मानाभावाद् ईश्वरज्ञानमभिधा कुतो न ईश्वरयत्नो वा कुतो नेति विनिगमनाभावात् प्रथममतमेव समीचीनमिति।

अभिधाभेदः— अभिधा त्रिधा–

(१) केवलसमुदायशक्तिः

(२) केवलावयवशक्तिः

(३) समुदायावयवशक्तिसङ्करश्चेति भेदात्।

एते एव भेदा रूढियोगयोगरूढिशब्दैर्व्यवह्रियन्ते। तत्र रूढेरुदाहरणम्— डित्थडवित्थादयः, तत्रावयव(योग)शक्तेरभावात्। योगशक्तेरुदाहरणम्— पाचकपाठकादयः, तत्र प्रकृतिप्रत्ययवेद्यार्थयोरन्वयेन पाककर्तृरूपोऽर्थ उल्लसति, तदतिरिक्तार्थान्तरस्याप्रतीतेः रूढिशक्तेरभावः।

योगरुढेरुदाहरणम्— पङ्कजादि। अत्र धातूपपदप्रत्ययवेद्यानां पङ्कजननकर्तृणामर्थानामाकाङ्क्षादिवशादन्वये सति समुल्लसितात् पङ्कजनिकर्तृरूपार्थादतिरिक्तस्य पद्मत्वविशिष्टस्याप्यर्थस्य प्रतीतेस्तदर्थं रूढिशक्तेरपि कल्पनादुभयोः सङ्करः।

अश्वगन्धाश्वकर्णमण्डपनिशान्तकुवलयादिपदेषु च विषयविशेषे केवलरूढिशक्तिः, विषयविशेषे केवलयोगशक्तिः। यथा "अश्वगन्धा रसं पिबेत्" इति वाक्ये औषधिरूपेऽर्थे केवलरुढिशक्तिः– "अश्वगन्धा वाजिशाला" इत्यत्र केवलयोगशक्तिः। एकस्मिन्नेव शब्दे विषयभेदाद् द्वयोः शक्त्योः सत्त्वेऽपि तद्द्वयोरर्थयोर्मिथोऽन्वयाभावात् केवलत्वसत्त्वात्। मिथोऽन्वयायोग्यार्थबोधकत्वमेव कैवल्यमत्र विवक्षितम्।

केचनात्र सङ्करस्य भेदद्वयं वाञ्छन्ति, योगरूढिर्यौगिकरूढिश्च। तत्र प्रथमस्योदाहरणं पङ्कजादि, द्वितीयस्य अश्वगन्धादीति। अन्ये तु अभिधैव चतुर्विधा, तस्याश्चतुर्थो भेदो यौगिकरूढिस्तस्या उदाहरणमश्वगन्धादिपदमिति निगदन्ति।

वस्तुतः सर्वे शब्दा अखण्डा एव, समासेषु पदानां कृत्तद्धिततिङन्तेषु प्रकृतिप्रत्ययविभागः काल्पनिक एवेति नास्त्येव योगशक्तिरिति निगदन्ति।

वाचकं लक्षयति— अभिधया यः शब्दो यमर्थं बोधयति स शब्दस्तस्यार्थस्य वाचकः, यस्य शब्दस्याभिधा यस्मिन्नर्थेऽस्ति सोऽर्थस्तदभिधेय इति।

**अथ भेदानाह– अभिधेयोऽर्थश्चतुर्विधः**

जातिगुणक्रियायदृच्छाभेदात् व्यक्तीनामानन्त्याद् व्यभिचाराच्च व्यक्तयो नाभिधेयाः।

एकस्यां गोव्यक्तौ सङ्केतग्रहेऽन्यासु सर्वासु गोव्यक्तिषु सामान्यलक्षणप्रत्यासत्याऽभिधायाः कल्पनात् न व्यभिचार इत्यपि न, सामान्यलक्षणाया प्रत्यासत्तेर्निराकृतत्वात्।

अत्रायमभिसन्धिः— प्रत्यक्षं द्विविधम्— लौकिकमलौकिकं च। लौकिकप्रत्यक्षप्रमाहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः, संयोगः संयुक्तसमवायः, संयुक्तसमवेतसमवायः समवायः समवेतसमवायः, विशेष्यविशेषणभावश्चेति। तदाह–

**अक्षजा प्रमितिर्द्वेधा सविकल्पाऽविकल्पिका।**
**करणं त्रिविधं तस्याः सन्निकर्षस्तु षड्विधः।।**
**घटतन्नीलनीलत्वशब्दशब्दत्वजातयः ।**
**अभावसमवायौ च ग्राह्याः सम्बन्धषट्कतः।।** इति।

(तर्कभाषा चिदानन्दी टीका पृ० १५)

अलौकिकः सन्निकर्षस्त्रिविधः (१) सामान्यलक्षणः (२) ज्ञानलक्षणः (३) योगजश्चेति। तदुक्तं मुक्तावल्याम्–

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा।।**

(न्या०सि०मु०, प्र०ख० ६३)

तत्र सामान्यलक्षणे लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यं लक्षणं स्वरूपं यस्येति सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थः। सामान्यं च इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्। अर्थाद् इन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यको धूम इति ज्ञाने धूमत्वं प्रकारस्तत्र धूमत्वेन सन्निकर्षेण "धूमाः" इति सकलधूमविषयकं ज्ञानं जायते (बाह्येन्द्रियस्थले इन्द्रियसम्बन्धो लौकिको ग्राह्यः) मानसस्थले तु ज्ञाने प्रकारीभूतं सामान्यं प्रत्यासत्तिः। परन्तु समानानां भावः सामान्यं, तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिदनित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलानां कपालादीनां वा ज्ञानं भवति। अत्र सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः। किन्तु तद्घटनाशानन्तरं तद्घटवतो भूतलस्य स्मरणं जातं तद्घटवतां सर्वेषां भूतलानां स्मरणं न स्यात्, सामान्यस्य तद्घटादेस्तदानीमभावात्। तस्मात् सामान्यविषयकं ज्ञानं प्रत्यासत्तिः। अत्र लक्षणपदस्य विषयोऽर्थः। सामान्यं लक्षणं विषयो यस्य तादृशं ज्ञानं प्रत्यासत्तिरिति नैयायिका निगदन्ति। (न्या०सि०मु०, प्र०ख०, पृ० २७७) अत्र च सामान्यस्वरूपा प्रत्यासत्तिर्वा स्यात् सामान्यविषयकं ज्ञानं वा प्रत्यासत्तिः स्यादुभयथाऽपि कस्याञ्चिद् व्यक्तौ सङ्केतग्रहेऽपि सामान्यलक्षणप्रत्यासत्या सकलगोव्यक्तीनामुपस्थितत्वात्। (ज्ञानात्) सर्वासु गोव्यक्तिषु गोपदाभिधायाः परिकल्पनात् नानन्त्यव्यभिचारदोषयोरवकाश इति शङ्का। सामान्यलक्षणप्रत्यासत्तेर्निराकरणादित्युत्तरम्।

सामान्यलक्षणाप्रत्यासत्तिं विनाऽपि क्वचिद् गोत्वाद्याश्रये चक्षुःसंयोगात् स्वसंयुक्तसमवेतसमवायसम्बन्धेन सकलगोव्यक्तेरपि बोधसम्भवात् सामान्यलक्षणप्रत्यासत्तिस्वीकारोऽफलः, एवं अतीतानागतगोव्यक्तेरपि बुद्धिविषयत्वेनोक्तसम्बन्धेन बोधः। तथा धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां भाने तदर्थं सामान्यलक्षणप्रत्यासत्तेरनावश्यकत्वात्। एवं प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीते अन्यानुपस्थितधूमेऽपि धूमत्वेन तत्सम्बन्धस्य गृहीतत्वात् धूमो वह्निव्याप्यो न वेति संशयोपपत्तेः, सामान्यलक्षण-प्रत्यासत्तेरफलत्वात्। अपि च प्रत्यक्षमशेषविशेषज्ञानाय भवति, सामान्यलक्षणया तत्तद्व्यक्तीनामशेषविशेषज्ञानं न स्यादत एषा प्रत्यासत्तिरफलैव।

स्वीकारेऽपि व्यक्तीनामानन्त्याद् अनन्तशक्तिकल्पने गौरवाच्च। तत् प्रकारकोपस्थितिं प्रति तत्प्रकारकः शक्तिग्रहः कारणम्, एवं तत्प्रकारकशाब्दबोधं प्रति तत्प्रकारिकोपस्थितिः कारणमिति रीत्या शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारतयैव कार्यकारणभावस्वीकाराद् गृहीतसङ्केतानामपि व्यक्तिविशेषाणां शाब्दबोधविषयताया उपपादनेऽपि व्यक्तिशक्तिवादे अनन्तशक्तिकल्पनायां गौरवदोषस्यानुद्धारात्। व्यक्तीनां बोधस्तु आक्षेपात् लक्षणया वा भवति।

तत्र गोपदाभिधेया गोत्वादिजातिरवयवसंस्थानव्यङ्ग्या प्रत्यक्षसिद्धा। घ्राणरसनादिपदाभिधेया घ्राणत्वरशनात्वादयो जातयोऽनुमानसिद्धा, घ्राणरसनादीनामतीन्द्रियत्वेन तन्निष्ठजातेरप्यतीन्द्रियत्वेनाप्रत्यक्षत्वात्। अन्यत् सर्वं तु मम्मटरीत्यैव समाहितम्। प्रमाणयति च मम्मटोक्तिम्—

गुणक्रियायदृच्छानां वस्तुत एकरूपाणामाश्रयभेदाद् भेद इव लक्ष्यते'' (र०ग० २/१४५ (का०प्र० २/)

## मतभेदः

(१) पण्डितराजः सम्बन्धविशेषमभिधां मन्यते, तां च पदार्थान्तरमिति केचन रीत्या ब्रूते। मम्मटश्च शब्दस्य मुख्यं व्यापारमभिधां निरूपयति।

(२) पण्डितराजोऽभिधां त्रिधां निरूपयति, मम्मटश्च भेदं नाभिदधे।

## विमर्शः

मम्मटः ''स मुख्योऽर्थस्तत्र व्यापारोऽस्याभिधोच्यते'' इति कारिकायां मीमांसकमतं, पातञ्जलमतं चोपनिबबन्ध। तथा हि– ''सङ्केतग्राह्यं शक्त्याख्यं पदार्थान्तरमभिधा'' इति हि मीमांसकमतम्, ''तादृशं शब्दार्थयोस्तादात्म्यमभिधा'' इति पातञ्जलमतम् (का०प्र०उ०टी० २/३७)।

तयोरेव मतयोरुपपादनं पण्डितराजेनापि कृतम्— परं नैयायिकरीत्या परिष्कृत्य। नैयायिकाः वृत्तिं सम्बन्धरूपामङ्गीकुर्वन्ति। तेषां मते ईश्वरेच्छाशक्तिः, सैव सङ्केतः, सैव सम्बन्धः। वृत्त्या पदजन्यपदार्थोपस्थितिस्ततः शाब्दबोधो जायते। इत्थं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयसम्बन्धत्वं वृत्तित्वमिति फलितम्। इत्थं वृत्तिर्व्यापारः सम्बन्ध इत्यनर्थान्तरम्। अतः पण्डितराजादयः अभिधाद्यावृत्तीः सम्बन्धरूपा आहुः। मम्मटादयश्च व्यापाररूपास्ता इत्याहुः। वस्तुतो व्यापारः प्रेरणागर्भः साध्यरूपः, शब्दे व्यापारश्च एकसम्बन्धिज्ञानविधयापरसम्बन्धिस्मारकत्वरूपः, ''अस्माच्छब्दादयमर्थो बोद्धव्यः'' इत्याकारिकेश्वरेच्छाऽपि साध्यरूपैव। वस्तुतः सम्बन्ध एव न

शक्तिः, शक्तिः सम्बन्धे सत्येवाऽर्थं बोधयति। प्रकाशको दीपकः सम्बन्धे सत्येव वस्तु प्रकाशयति। अतः वृत्तिसम्बन्धयोः सूक्ष्मो भेदोऽस्त्येव।

अभिधाभेदनिरूपणं मम्मटेन नाकारि पण्डितराजेन कृतं परं वस्तुतः सर्वे शब्दा अखण्डा एव, कुत्रापि योगशक्तिर्नास्ति इत्यभिदधता सर्वत्र रूढिमेव स्वीकुर्वता भेदः काल्पनिक इत्यादिवदता भेदकरणं नावश्यकमिति मम्मट एव प्रमाणीकृतः। परं पदवाक्यप्रमाणशास्त्रदिशा सिद्धान्तमुपपादयताऽतीव ज्ञानगाम्भीर्यं निबबन्धेति न तिरोहितं मतिमताम्। शक्तिः पदार्थान्तरमिति मम्मटोऽपि सङ्केतः समयः तद्विषयभूतोऽर्थो यया वृत्त्या बोध्यते सा अभिधेति निरूपयन् स्वीकरोतीति नास्ति मतभेदः। अथ शक्तिं पदार्थान्तरमिति मतमुपपादयतां शास्त्रकाराणामाशयो निरूप्यते। तथा हि—

तत्र तावद् मीमांसकैः शक्तिः पदार्थान्तरमिति स्वीक्रियते। तेषामयमभिप्रायो यत् कारणेषु कार्यानुकूला शक्तिः कारणात् पृथग् वर्तते। एवं हि दृश्यते लोके यद् वह्निना दाहो जन्यते, परं मणिमन्त्रौषधिसमवहितेन वह्निना दाहो न जन्यते, पुनरुत्तेजकसमवहितेन मण्याद्यपसारणेन च जन्यते, अतो निश्चीयते यद् मणिमन्त्रादिभिर्वह्निवृत्तिर्दाहानुकूला शक्तिर्नाश्यते। अत्र दाहं प्रति मण्याद्यभावविशिष्टो वह्निः कारणमिति, कार्यकारणभावस्वीकारे मण्यादिसमवधाने "दाहो" न जन्यत इति न शङ्क्यम्, मण्यभावत्वेन स्वतन्त्रहेतुताकल्पने गौरवात अतः कार्यमात्रं प्रति तत्तत्कारणेषु तत्तत्कार्यानुकूला शक्तिः कल्प्यते।

सा च पदार्थान्तरम्, द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावादि-सप्तपदार्थेष्वनन्तर्भूतत्वात्। तथा हि-- शक्तिः स्पर्शरहिता, अतः स्पर्शविशिष्टेषु पृथिव्यप्तेजोवायुषु नान्तर्भूता। उत्पादविनाशशालित्वेन चाकाशादिपञ्चनित्यद्रव्येषु तस्या नान्तर्भावः। कपालादिरूपादिषु घटरूपाद्युत्पादकशक्तिसत्त्वान्न गुणकर्मणोरन्तर्भावः। सामान्यादिषूत्पादविनाशशालित्वादेव नान्तर्भावः। नित्यात्यन्तान्योन्याभावयोरनित्यत्वाद् विनाशित्वेन ध्वंसे प्रागभावे चोत्पत्तिमत्त्वेन नान्तर्भावः। अतः शक्तिरतिरिक्तपदार्थ इति।

वेदान्तिनोऽप्यत्रानुकूलाः सन्ति यत्पठन्ति—

**शक्तिः शक्तात् पृथङ् नास्ति तद्वद्दृष्टेर्न चाभिधा।**
**प्रतिबन्धस्य दृष्टत्वात् शक्त्यभावे तु कस्य सः।।** इति।

(पञ्चदश्यां ब्रह्मानन्दे, अद्वैतानन्दप्रकरणे)

अर्थात् शक्तिः शक्तिमतः पृथङ् नास्ति, शक्तिविशिष्टस्यैव शक्तिमत उपलब्धेः, शक्तिमतः पृथक्शक्तेरनुपलब्धेश्च। न च पृथगनुपलब्धेरिति हेतोः

शक्तिः शक्तिमत्स्वरूपमेवेति वाच्यम्, अभेदाभावात्। भेदे हेतुमाह— प्रतिबन्धस्य दृष्टत्वादिति। अग्निना दाहो जन्यते, मणिमन्त्रादिभिः सा प्रतिबध्यते, अत्र अग्निस्त्वस्त्येव, प्रतिबन्धः कस्य? अतः शक्तिकार्यं दाहः। शक्तेः प्रतिबन्धो मण्यादिभिः क्रियते। अतः स्वरूपातिरिक्ता शक्तिरस्तीति।

अपि च यथा जीवः शरीरे एवोपलभ्यते, शरीरात् पृथङ् नोपलभ्यते तथापि शरीराद् भिन्नः। अग्निश्च दाहपदार्थात् पृथङ् नोपलभ्यते, तथापि न तद्रूपस्तद्वच्छक्तिः शक्तिमतः पृथङ् न लभ्यते तथापि तदतिरिक्तेति।

अत एव प्राभाकरा निगदन्ति— (प्रकरणपञ्जिकायाम्, अनु०परि०शक्तिनि०) शक्तिर्यद्यपि न प्रत्यक्षगोचरीभूता, तथापि कार्येणानुमीयते। यद्रूपादग्नेर्दाहो जायते, तद्रूपादेव मणिमन्त्रादिसमवधाने सति दाहो न जायते। मन्त्राद्यभावोऽपि दाहरूपकार्योत्पत्तौ निमित्तमिति न शङ्क्यम्। भावकार्यं प्रति भावकारणस्यैव नियतत्वात्। अभावस्य क्वचिदपि कार्ये जनकतानुपपत्तेः। अतोऽग्नेः स्वरूपद्वयम्, प्रत्यक्षमतीद्रियं च। यच्चातीन्द्रियमग्नेः स्वरूपं तदेव शक्तिसामर्थ्यादिशब्दवाच्यं लोके प्रतीयते। शक्तेः कदाचिदभिभवः, कदाचिद् विनाशो भवति। यत्र कदापि कार्यं नोत्पद्यते, तत्र विनाशः। यत्र प्रतीकारवशेन कार्योदयस्तत्राभिभव इति।

सा चेयं शक्तिस्त्रिधा – सहजा, आधेयजा, शब्दनिष्ठा च। अग्न्यादौ दाहिकाशक्तिः सहजा। मन्त्रादिना मूर्तौ देवत्वादिसम्पादिका शक्तिराधेयजा। अर्थबोधजनकताऽवच्छेदकधर्मरूपा शक्तिः शब्दनिष्ठा । सहजा शक्तिरज्ञाता सत्युपयुज्यते। शब्दनिष्ठा ज्ञाता सत्युपयुज्यते। ऋते व्यञ्जनाशक्तेः।

अत्र शब्दशक्तेर्मीमांसा प्रस्तुता। तत्र भाट्टमीमांसकमते "शब्दनिष्ठो बोध्यबोधकतारूपोऽभिधेयाऽभिधायकत्वरूपो वा सम्बन्धः शक्तिरिति।" प्रभाकरमतेऽपि शब्दस्यार्थेन सहापौरुषेयः प्रत्याय्यप्रत्यायकभावरूपः (प्र०प०शा०प०) सम्बन्धः शक्तिः। सा च पदार्थान्तरम्। अत्र शक्तिरभिधेत्यनर्थान्तरम्।

नैयाकिकाश्च– "(न्या०सि०मु०प्रत्य०खण्डः) प्रतिबन्धकाभावस्य सामान्यकारणत्वं स्वीकृत्य कारणेष्वतिरिक्तां कार्यानुकूलां शक्तिं नाङ्गीकुर्वन्ति। त एवं निगदन्ति यद् दाहं प्रति न केवलोऽग्निः कारणम्, अपि तु प्रतिबन्धकाभावविशिष्टोऽग्निः कारणम्, अग्नेर्दाहं प्रति मण्यादयः प्रतिबन्धकाः सन्ति, अतस्तेषामभाव आवश्यकः। एवं मण्याद्यभावविशिष्टो बह्निर्दाहं जनयति।

अत्र प्रतिबन्धकमण्यादिसमवधानेऽप्युत्तेजके सति वह्नेर्दाहरूपकार्योत्पत्तिदर्शनाद् दाहं प्रति मण्याद्यभावविशिष्टो वह्निः कारणमिति

कार्यकारणभावोऽनुपपन्न इति न शङ्क्यम्, उत्तेजकाभावविशिष्ट-मण्याद्यभावविशिष्टस्य वह्नेः कारणतास्वीकृतेः। अनन्तशक्तीनां तत्प्रागभावध्वंसानां कल्पनापेक्षया प्रतिबन्धकाभावविशिष्टस्यैव कारणताऽभ्युपगमे लाघवात्। अत्राभावो न कारणमिति न शङ्क्यम्, यतो हि यथा भावपदार्थादभाव उत्पद्यते, तथैवाभावपदार्थाद् भावोऽप्युत्पद्यते। तथा हि - यथा दण्डघटसंयोगाद् ध्वंसरूपकार्यं भवति, तथैवाभावपदार्थाद् भावरूपकार्यं जायते। तदुक्तम्—

**"भावो यथा तथा भावः कारणं कार्यवन् मतम्" इति।**

(न्यायकुसुमाञ्जलिः १०)

इत्थं नैयायिकमते शक्तिरतिरिक्तपदार्थो नास्ति। एवं शब्दशक्तिरप्यतिरिक्तपदार्थो न, प्रत्युत ईश्वरेच्छारूपा शक्तिः। इच्छा च गुणरूपेति। सा च "अस्मात् पदादयमर्थो बोद्धव्यः" इति पदप्रकारिकाऽर्थविशेष्यिका। अथवा विनिगमनाभावाद् "इदं पदममुमर्थं बोधयतु" इत्यर्थप्रकारिका पदविशेष्यिका वा ईश्वरेच्छा शक्तिः।

शक्तिर्विषयतासम्बन्धेन पदे, अर्थे, ज्ञाने च वर्तते, तथाऽपि बोधनिष्ठजन्यतानिरूपितजनकतावत् सम्बन्धेन शक्तिविषयो वाचकः। पदजन्यबोधविषयत्वसम्बन्धेन शक्तिविषयो वाच्य इति नातिप्रसक्तिरिति नागेशः (ल०म०श०नि०)। प्रथमं शक्तिग्रहो वाक्याज्जायते, पुनरावापोद्वापाभ्यां तत्तत्पदस्य शक्तिग्रह इति। घटपदजन्यबोधविषयत्वप्रकारकघटविशेष्यकेच्छेति शक्तेः स्वरूपम्। घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीय-विशेष्यतावान् घट इत्याकारकः शक्तिग्रह इति।

शक्तिः सङ्केतोऽभिधेत्यनर्थान्तरम्। सङ्केतो लक्षणा चार्थे पदवृत्तिरित्युक्तं शक्तिवादे। इयं शक्तिराधुनिके देवदत्तयज्ञदत्तादिनाम्न्यपि वर्तते। "एकादशेऽह्नि पिता जातस्य पुत्रस्य नाम विदध्यात्" इति श्रुतिरूपाया ईश्वरेच्छायास्तत्राऽपि सत्त्वात्। आधुनिकमात्रसङ्केतिते "डित्थ'-डवित्थेत्यादौ", "नदी-वृद्ध्यादौ तु नास्ति शक्तिः" किन्तु परिभाषाशब्दा इमे इति साम्प्रदायिका वदन्ति।

नव्यास्तु— ईश्वरेच्छारूपशक्तिस्वीकारे ईश्वरमनङ्गीकुर्वतां शक्तिबोधो न स्यात्, अतः इच्छामात्रं शक्तिः, अत आधुनिकसङ्केतिते नदीवृद्ध्यादिपदेऽपि शक्तिरस्त्येव। अत एव "सङ्केतो लक्षणा चार्थे पदवृत्तिः" इत्याहुर्गदाधरभट्टाचार्या (शक्तिवादे) न तु शक्तिर्लक्षणेति।

वैयाकरणेषु प्राचीना भट्टोजिदीक्षितकौण्डभट्टप्रभृतयो योग्यतारूपां शक्तिं स्वीकुर्वन्ति। तथा हि— चक्षुरादिज्ञानेन्द्रियाणां यथा स्वस्वविषयेषु रसगन्धस्पर्शशब्देषु पुरुषप्रयत्ननिरपेक्षाऽनादिर्योग्यता रूपादिविषयकप्रत्यक्ष-कारणताऽवच्छेदकधर्मवत्ता अस्ति, तथैव गवादिशब्दानां गवादिभिरर्थै: सहानादिर्योग्यता (तत्तदर्थविषयकबोधजनकतारूपा) अस्ति। एवं तद्बोधकारणता एव योग्यता, सैव शक्तिरिति। तदुक्तम्—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थै: शब्दानां सम्बन्धो योग्यता तथा।।** इति।

(वै०भू०सार०, का० ३६)

नव्याश्च नागेशभट्टा:— शक्तेरपि कार्यजनकत्वे सम्बन्ध एव नियामकम्। दीपनिष्ठप्रकाशकत्वशक्तेरालोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथा, अत: शब्देऽर्थविषयकबोधजनकतासिद्धये पदपदार्थयो: सम्बन्धो निश्चेय:। स च सम्बन्धो वाच्यवाचकभावापरपर्याय:, स एव शक्ति:। तद्ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यम्। शब्दार्थयोस्तादात्म्यं च गौरिति शब्द:, गौरित्यर्थ: गौरिति ज्ञानम्, इत्यनुभवात् सिद्धम्। तच्च सङ्केत:। सङ्केतश्च स्मृत्यात्मक:, योऽयं शब्द:, सोऽर्थ:, योऽर्थ:, स शब्द इति महाभाष्योक्तेरित्याहु:।

तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्, भिन्नयोरभेदप्रतीतिरध्यवसायाद् भवति। यत्र भेद उद्भूतस्तत्र ''मम कर्णौ बधिर:'' इतिवदस्य शब्दस्यायमर्थ इति षष्ठी भवति। यत्र भेदस्तिरोहितस्तत्राहम् ''बधिर:'' इतिवद् गौरिति शब्दो गौरित्यर्थ इति व्यवहार:। तादात्म्यस्य भेदाभेदघटितत्वेन अग्निशब्दोच्चारणेन न मुखदाहापत्ति:। वस्तुतो बौद्ध: शब्दोऽर्थश्च। तयोरभेद:। बौद्धपदार्थाच्च न दाहापत्ति:। शब्दार्थयोस्तादात्म्यादेवार्थभेदात् शब्दभेद इति न्याय: सङ्गच्छत इति।

मतेऽस्मिन् सङ्केत एव न शक्ति:, अपि तु शक्तिग्राहक: सङ्केत इति। शक्तिश्च वाच्यवाचकभावरूपाऽखण्डातिरिक्तपदार्थ:। तथा हि– वाच्यत्वमर्थे, वाचकत्वं शब्दे, वाच्यवाचकत्वं न केवलेऽर्थे शब्दे वा, अपि तूभयोरखण्ड इति।

आलङ्कारिकमतम्— आलङ्कारिका अपि मीमांसकवैयाकरण-वदभिधामतिरिक्तपदार्थं मन्वते न तु सङ्केतरूपाम्, प्रत्युताभिधयाऽर्थबोधने सङ्केत: सहकारीति वदन्ति। सङ्केतग्रहसहायेनार्थबोधिका शक्तिरभिधेति ''समयाऽपेक्षयाऽर्थावगमनशक्तिर्ह्यभिधा'' इति लोचनोक्ते:।

(ध्व०लो०, पृ० ५६)

## अथ लक्षणा

एवमभिधां निरूप्य लाक्षणिकशब्दज्ञानं लक्षणाधीनं, लक्षणामूल-व्यञ्जनायामपि लक्षणाया मूलत्वात्, लक्षणां लक्षयति मम्मटाचार्यः—

**"मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया"।।** इति।

(का०प्र० २/८)

अत्र मुख्यार्थबाधो लक्षणायां बीजं मुख्यार्थसम्बन्धः कारणम्, प्रयोजनं च फलमिति। मुख्यार्थस्य अभिधेयार्थस्य प्रमाणान्तरेण बाधे सति, मुख्यार्थस्य बाधोऽन्वयानुपपत्त्या तात्पर्यानुपपत्त्येति द्विधा सम्भवति। यथा— गङ्गायां घोष इत्यत्र गङ्गापदार्थो विशेषजलप्रवाहः (भगीरथरथखाताऽवच्छिन्नजलप्रवाहः) तत्र चाधिकरणे सप्तमी, गङ्गाघोषयोश्चाधाराधेयभावः प्रत्यक्षादिप्रमाणेन बाधितः, जले घोषस्थितेरसम्भवात्, अत आधाराधेयभावसम्बन्धोऽनुपपन्न इति अन्वया(सम्बन्धा)नुपपत्तिः। परं सम्बन्धमात्रानुपपत्तौ लक्षणायाः स्वीकारे घोषपदस्य मकरादौ लक्षणायामपि अन्वयानुपपत्तिर्वारिता स्यात्, यद्यपि "न विधौ परः शब्दार्थः" इति नियमाद् विधेये घोषपदे लक्षणाया असम्भवादत्र न दोषस्तथापि "नक्षत्रं दृष्ट्वा वाचं विसृजेत्", "काकेभ्यो दधि रक्ष्यताम्" "छत्रिणो यान्ति" इत्यादौ दर्शनक्रियायां कर्मतया नक्षत्रस्यान्वयेऽन्वयानुपपत्त्यभावाद्-नक्षत्रपदस्य कालविशेषे (रात्रौ) लक्षणा न स्यात्। "काकेभ्यो दधीत्यादिवाक्यस्य" काकजन्यनाशोत्पत्तिप्रतियोगिकत्व-कर्तृकव्यापारप्रयोज्याभाववद् दधि" इत्याद्यर्थेऽप्यन्वयानुपपत्त्यभावेन दध्युपघातके लक्षणा न स्यात्। एवं छत्रिणो यान्तीत्यत्रापि गमनक्रियायां छत्रिणां कर्तृतयान्वये बाधाभावे लक्षणा न स्यादतस्तात्पर्यानुपपत्तिरेव मुख्यार्थबाधः। मुख्यार्थबाधमन्तरा लक्षणास्वीकारे "भद्रात्मनो दुरधिरोह" इत्यादौ शाब्दव्यञ्जनास्थले प्रकरणेन प्रस्तुतेऽर्थेऽभिधाया नियन्त्रणादप्रस्तुतेऽर्थे लक्षणा स्यात्। तदुक्तौ तु मुख्यार्थस्य बाधाभावेन न लक्षणाया अवकाशः। एवं मुख्यार्थसम्बन्धं विना लक्षणायां गङ्गापदाद् यमुनातटस्याप्युपस्थित्याऽतिप्रसक्तिः। मुख्यार्थसामर्थ्याक्षिप्तव्यञ्जनायामपि नातिव्याप्तिः। रूढिप्रयोजनयोरभावेऽपि लक्षणास्वीकारे रूपवान् घट इत्यर्थे रूपो घट इति प्रयोगः स्यात्।

"अन्योऽर्थो यल्लक्ष्यते सा लक्षणा" इति हि लक्षणम्, मुख्यार्थबाधादित्रयं हेतुः, "आरोपिता क्रिया" इति पदद्वयं न लक्षणघटकमपि तु स्वरूपकथनम्। अत्र लक्ष्यते इत्यस्य प्रतिपाद्यते इत्यर्थः। लक्षणया प्रतिपाद्यते इत्यर्थस्वीकारे लक्षणालक्षणे लक्षणायाः प्रवेशादात्माश्रयदोषः

स्यात्। अत्र यदिति क्रियाविशेषणम्, अन्यः शक्यादन्योऽमुख्योऽर्थो यल्लक्ष्यते प्रतिपाद्यते सा प्रतिपत्तिः (ज्ञानम्) एव लक्षणेति। एवं लक्षणमिदं मीमांसकानुमतं विभाति। मीमांसका अपि "प्रतीतिर्लक्षणोच्यते" इति निगदन्ति। "शक्यादशक्यप्रतिपत्तिर्लक्षणेति" प्राचीनाचार्या अपि ब्रुवते। परमन्ये आक्षिपन्ति यत्– लक्षणाऽपि अभिधेव वृत्तिः, वृत्तिश्च व्यापाररूपा, ज्ञानं च वृत्तिजन्यम्, न तु वृत्तिरेव ज्ञानम्। अतोऽन्यथा कारिका व्याख्येया। परं यदि शाब्दबोधप्रतिपत्तिहेतुर्वृत्तिः इयं तु स्मृतिस्तदा प्राचीनलक्षणे न दोषः। उक्तं च लाक्षणिकं ज्ञानं नानुभावकमिति। सा चेत्थम्— लक्ष्यते इत्यत्र णिजन्तात् कर्मणि तङ् प्रत्ययः, णिजर्थश्च हेतुव्यापारः, हेतुश्चात्र शब्दः, लक्षधातोश्च प्रतिपत्तिरर्थः, अतः अन्यार्थप्रतिपत्तिहेतुभूतशब्दव्यापारो लक्षणा इति लक्षणम्। अथवा यदिति ययेत्यर्थकं लुप्ततृतीयान्तमव्ययम्। यया वृत्त्याऽन्योऽर्थः प्रतिपाद्यते सा शब्दवृत्तिर्लक्षणा।

नैयायिकाश्च यदिति पञ्चम्यन्तार्थकमव्ययं मत्वा यतः सम्बन्धाद् अन्योऽर्थो लक्ष्यते स सम्बन्धो लक्षणेति निगदन्ति अतस्तेषां मते शक्यसम्बन्धो लक्षणेति फलितम्। सा लक्षणा मुख्यार्थसम्बन्धेनार्थं प्रतिपादयति। अतः साक्षात् सम्बन्धेनार्थवृत्तिः शब्दे तु "स्वहेतुभूतसम्बन्धप्रतियोगिशक्तत्वरूप-परम्परासम्बन्धेनारोपिता।" ("स्वं लक्षणा, तस्या हेतुभूतो यः सम्बन्धस्तस्य प्रतियोगी यः शक्यार्थस्तत्र शक्तः शब्द" इति) क्रिया व्यापाररूपा चेत्यर्थः।

सा चेयं लक्षणा वैयाकरणानां मते शक्यतावच्छेदकारोपरूपा। नैयायिकानां मते शक्यसम्बन्धरूपा, वक्तृतात्पर्यरूपा वा। आलङ्कारिकाणां मतविवेचनेनापि शक्यतावच्छेदकारोपरूपैव निश्चीयते। तदुक्तं मम्मटेन—

"तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्व(गङ्गात्व)प्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः"।

(काव्यप्रकाशः, द्वि.उ.)

पण्डितराजोऽपि "शक्यताऽवच्छेदकरूपेण लक्ष्यमाणस्य स्वीकारात्" (र०ग० २/१५०) इति प्रतिपादयन्नत्रानुकूलः।

अत्र मुख्यार्थस्यापि अभिधारूपमुख्यार्थसम्बन्धेन प्रतिपादनात् तत्र लक्ष्यत्वप्रसक्तिनिराकृतयेऽन्योऽर्थ इत्युक्तम्। अन्योऽर्थः शक्यार्थतावच्छेदकाति-रिक्तधर्मावच्छिन्नोऽर्थ इति। अतः "छत्रिणो यान्ति", "रामोऽस्मि सर्वं सहे" "यस्य मित्राणि मित्राणि", "कदली कदली", "भवन्ति कमलानि कमलानि" इत्यादौ न दोषः। "छत्रिणः" इत्यनेन छत्र्यच्छत्रिसमुदायस्य विवक्षितत्वात्,

छत्रित्वरूपशक्यार्थतावच्छेदकातिरिक्तस्य अच्छत्रित्वरूपधर्मस्यापि तत्र प्रतीतेरतिरिक्तधर्मावच्छिन्नत्वात्। "रामोऽस्मि" इत्यत्र दुःखसहिष्णुत्वेन शक्यार्थस्य प्रतीतिः न तु रामत्वेन। एवं "मित्राणि" इत्यत्र आश्वस्तत्वेन मित्रबोधः, "कदली"त्यत्र शैत्यादिविशिष्टत्वेन "कमलानि" इत्यत्र सौरभ्यसौकुमार्यादिविशिष्टत्वेन बोध इति न दोषः। दुःखसहिष्णुत्वादीना-मतिरिक्तधर्मत्वात्।

नागेशश्चैतल्लक्षणं परिश्चकार — "शक्तित्वेन शक्तिज्ञानशक्यसम्बन्धज्ञानजन्या तात्पर्यविषयेतरपदार्थतावच्छेदकावच्छिन्ने मुख्यार्थतावच्छेदकरूपेण तदवच्छिन्नान्वयबाधज्ञानकालिका रूढिप्रयोजनान्वयहेतुकाऽशक्यार्थप्रतिपत्तिस्तज्जनकज्ञानविषयशक्यसम्बन्धरूपव्यापारो वा लक्षणा इति।

अयं भावः — मुख्यार्थसम्बन्धेन लक्षणा भवति, परं मुख्यार्थबाधज्ञानं विना मुख्यार्थसम्बन्धेन तीरस्मृतौ लक्षणा न भवति। अतो मुख्यार्थबाधज्ञानकालिकत्वमपि मुख्यार्थसम्बन्धज्ञाने विशेषणम्। एवं "छत्रिणो यान्ति" इत्यत्र छत्रिणामपि शक्यार्थानां बोधात् मुख्यार्थबाध इत्यस्य मुख्यार्थताऽवच्छेदकावच्छिन्नबाधज्ञानकालिका इत्यर्थस्तत्राच्छत्रिणामपि गमने तात्पर्यात्, तत्र च मुख्यार्थताऽवच्छेदकाभावात्। रूढिप्रयोजनयोरन्यतराभावेऽपि निषिद्धलाक्षणिके नेयार्थादौ लक्षणाभासेऽतिव्याप्तिनिरासाय रूढितः प्रयोजनाद्वा इत्युक्तम्। अतः पूर्वोक्तं परिष्कृतं लक्षणं फलितम्।

**अथ भेदाः**

**"स्वसिद्धये पराक्षेपः परार्थं स्वसमपर्णम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा।।**

(का०प्र०२/१३)

अर्थात् स्वस्य मुख्यार्थस्य समभिव्याहृतपदार्थेऽन्वयबोधसिद्धये परस्यामुख्यार्थस्य आक्षेपः उपादानम्। एवं परस्यामुख्यार्थस्य वाक्यार्थेऽन्वयबोधसिद्धये स्वस्य मुख्यार्थस्य समर्पणं त्यागः अन्यार्थोपलक्षणतया लक्षणम्। अर्थात् स्वार्थापरित्यागेन परार्थोपस्थापनमुपादानम्। स्वार्थपरित्यागेन परार्थोस्थापनं लक्षणम्, इदं भेदद्वयं शुद्धाया लक्षणाया एव न तु गौण्याः।

यत्र आरोप्यमाणः आरोपविषयश्च स्वस्वधर्मप्रकारेण सामानाधिकरण्येन शब्दतो निर्दिश्येते सा सारोपा। अत्र विषयविषयिणोः पृथक् पृथक् निर्देश आरोपः। आरोपेण सहिता सारोपा। विषयिणा निगीर्णे विषये साध्यवसाना स्यात्। विषयिणा विषयस्य निगीर्णमध्यवसानं तेन सह वर्तते

साध्यवसाना। इमौ सारोपसाध्यवसानरूपभेदौ सादृश्यसम्बन्धेन यदा भवतस्तदा गौणौ तदितरसम्बन्धेन यदा भवतस्तदा शुद्धौ ज्ञेयौ। एवं सादृश्यसम्बन्धेन लक्षणा, गौणी सादृश्येतरसम्बन्धेन लक्षणा शुद्धा।

इत्थं लक्षणा षड्विधा सम्पन्ना। तथा हि— लक्षणा तावत् स्वहेतुभूतसम्बन्धस्य सादृश्यस्य तदितरस्य कार्यकारणादेश्च भेदाद् द्विविधा शुद्धा गौणी च। पुनः शुद्धा उपादानलक्षणालक्षणलक्षणासारोपासाध्यवसाना-भेदाच्चतुर्धा। गौणी च सारोपा साध्यवसानाभ्यां द्विविधेति सङ्कलनया षड्विधा। टीकाकाराश्चान्यथाऽपि भेदं व्याचक्षते यथा उद्योते– "शुद्धा–गौणी–सारोपा–साध्यवसानोपादानलक्षणैः षड्भेदेत्यर्थः (का०प्र० १/५२) वामन्यां वामनश्च वस्तुतस्तु लक्षणा तावद् द्विविधाः शुद्धा गौणी च। तत्राद्या द्विविधा उपादानलक्षणा लक्षणलक्षणा च। उपादानलक्षणालक्षणलक्षणे अपि प्रत्येकं सारोपा साध्यवसाना चेति द्विविधे इति शुद्धायाश्चत्वारो भेदाः। गौणी द्वेधा–सारोपा साध्यवसाना चेति षड्विधा (का०प्र०वामनी ५४)। अस्तु "ग्रन्थकार आह "लक्षणा तेन षड्विधा" (का०प्र० २/१७) इति।

उदाहरणम्–

(१) शुद्धाया उपादानलक्षणायाः – कुन्ताः प्रविशन्ति।
(२) शुद्धायाः लक्षणलक्षणायाः– गङ्गायां घोषः।
(३) शुद्धायाः सारोपायाः– आयुर्घृतम्।
(४) शुद्धायाः साध्यवसनायाः– आयुरेवेदम्।
(५) गौण्याः सारोपायाः– गौर्वाहीकः।
(६) गौण्याः साध्यवसानायाः– गौरयम्।

"आयुरेवेदं गौरयमित्यत्र च यदा इदं शब्देन विषयी एव निर्दिष्टस्तदैवेदमुदाहरणम्, अन्यथा "आयुः पीयते" "गाः पाठय" इत्युदाहरणं ज्ञेयम्) इति।

अत्र हेतुभूतरूढिप्रयोजनभेदादपीयं भिद्यते। तत्रानादिप्रयोगप्रवाहात् प्रचलिता रूढिलक्षणाऽव्यङ्ग्या भवति। प्रयोजनप्रत्यायनाय कृता लक्षणा प्रयोजनवती। प्रयोजनस्य व्यञ्जनाव्यापारसाध्यत्वाद् व्यङ्ग्यतया सव्यङ्ग्या, सा च व्यङ्ग्यस्य गूढागूढत्वाद् द्विविधा गूढव्यङ्ग्या, अगूढव्यङ्ग्या च। इत्थं त्रिविधा। अव्यङ्ग्या, गूढव्यङ्ग्या, अगूव्यङ्ग्या चेति। इत्थं षड्विधप्रयोजनवत्यां प्रयोजनस्य गूढागूढतया द्वादशभेदाः। रूढि (अव्यङ्ग्या) लक्षणा चेति त्रयोदशविधा लक्षणा फलिता)।

## रसगङ्गाधरकारश्च

लक्षणामूलध्वनेर्मूलभूतां लक्षणां लक्षयन्नाह— "शक्यसम्बन्धो लक्षणा" (र०गं० २/१४९) अर्थाद् शक्यार्थस्य सम्बन्धो लक्षणा, सम्बन्धश्च द्विष्ठो भवति। तस्य कश्चन प्रतियोगी, कश्चनानुयोगी च भवतः, तत्र विशेषणं प्रतियोगि विशेष्यमनुयोगि भवति। एवं प्रतियोगी शक्यार्थो भवति अनुयोगी लक्ष्यार्थो भवति। परं शक्यार्थप्रतियोगिकः, लक्ष्यार्थानुयोगिकः सम्बन्धो लक्षणा इत्युक्तौ तु लक्षणाज्ञाने लक्ष्यार्थज्ञानमपेक्षितं लक्ष्यार्थज्ञाने च लक्षणाज्ञानमित्यन्योन्याश्रयः स्यादतः यत् किञ्चित् शक्यार्थप्रतियोगिकः यत् किञ्चिदर्थानुयोगिकः सम्बन्धो लक्षणा इति फलितम्।

लक्षणायां बीजम्– लक्षणयाऽर्थबोधनेऽन्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा बीजमिति युक्त्या निरूपयन्नाह— "गङ्गायां घोषः" इत्यादिवाक्यघटक– गङ्गापदस्य लक्षणायां गङ्गापदस्य मुख्यार्थो गङ्गा (विशेषजलप्रवाहः) मुख्यार्थता गङ्गायां तदवच्छेदकं गङ्गात्वं तत्र तात्पर्यविषयोऽन्वयः (सम्बन्धः) आधाराधेयभावः (नैयायिकानां मते आधेयता) अन्वयी तटः, अन्वयिता तटे अन्वयिताऽवच्छेदकं तटत्वं स्यात् न गङ्गात्वमतो गङ्गात्वे तात्पर्यविषयान्वयिताऽवच्छेदकताया अभावो वर्तते, अतो लक्षणा क्रियते इति वक्तुं न शक्यते, गङ्गात्वेन रूपेण लक्ष्यार्थस्य तटस्य प्रतीतेः स्वीकारात्। तथा च अन्वयिताऽवच्छेदकस्य गङ्गात्वस्य तटेऽभावो नास्ति। अपि तु तात्पर्यविषयभूतेऽन्वये (सम्बन्धे) आधाराधेयभावे गङ्गात्वेन रूपेण गङ्गापदस्य मुख्यार्थः प्रवाहः प्रतियोगी न भवत्यपि तु गङ्गात्वेन रूपेण तटः प्रतियोगी भवति। अतो मुख्यार्थे प्रतियोगिता नास्ति, इत्थं मुख्यार्थतावच्छेदके मुख्यार्थप्रतियोगिताया अभावः, रूढिप्रयोजनयोरन्यतरच्च कारणम्।

मुख्यार्थप्रतियोगिकताया अभाव इत्येतावन्मात्रोक्तौ। "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकस्याप्यन्वयात् लक्षणा न स्यात्। परं तत्र काकत्वेन रूपेणान्वयो न जायते प्रत्युत दध्युपघातकत्वेन रूपेण जायते, अतो लक्षणा भवति। मुख्यार्थाऽन्वयानुपपत्तिर्लक्षणायां बीजं चेत् "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र लक्षणा न स्यात्, काका दध्युपघातकाः सन्ति, अतः काकेभ्योऽपि दधिरक्षायां वक्तुस्तात्पर्यात्। अत्र अन्वयानुपपत्तेरभावात्। तात्पर्यानुपपत्तेर्बीजाङ्गीकारे न केवलेभ्यः काकेभ्यो दधिरक्षायां वक्तुस्तात्पर्यम्, अपि तु दध्युपघातकमात्रेभ्यः श्वविडालादिभ्योऽपि दधिरक्षायां तात्पर्यम्, तेषां बोधाभावात् लक्षणा क्रियते। दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकत्वतत्कर्तृकव्यापारप्रयोज्याभाववद्

दधि'', इति बोधो जायते। लक्षणाशरीरभूतः सम्बन्धश्च सामीप्य–सादृश्य–विरोधकारणत्वादयो यथायोगमनेकविधः।

अथ भेदाः— इयं लक्षणा द्विविधा निरूढा प्रयोजनवती च। पुनः प्रयोजनवती द्विविधा गौणी शुद्धा च। गौणी पुनः सारोपा साध्यवसानेति द्विविधा। शुद्धा चतुर्धा— जहत्स्वार्थाऽजहत्स्वार्था सारोपा साध्यवसाना चेति सङ्कलनया प्रयोजनवती षड्विधा।

## उदाहरणानि

निरूढायाः- अनुकूलादयः, लावण्यादयश्च उदाहरणम्। अनुकूलशब्दस्य कूलानुगतत्वरूपोऽर्थो मुख्यः, परं धर्मस्यायमनुकूल इत्यादौ मुख्योऽर्थः बाधितः, तत्र मुख्यार्थस्य एकवस्तुप्रवणत्वादिरूपसादृश्यसम्बन्धेनानादिप्रयोगप्रवाहात् (रूढिवशात्) अनुकूलशब्दस्य अनुरूपेऽर्थे लक्षणा।

एवं नीलादिपदानां यद्यपि ''नीलो घटः'' ''नीलं रूपम्'' इत्युभयविधव्यवहारदर्शनात् ''गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति'' इति कोशाच्च गुणे गुणिनि च शक्तिस्तथापि गुणिनि शक्तिस्वीकारे आश्रयभेदाद् भिन्नानां नीलादिगुणानां शक्यताऽवच्छेदकत्वाङ्गीकारे गौरवम्। गुणे शक्त्यङ्गीकारे गुणगतनीलत्वादिजातेः शक्यतावच्छेदकतया लाघवमिति गुणे शक्तिरङ्गीक्रियते। एवं ''नीलो घटः'' इत्यत्र नीलपदस्य गुणे, घटपदस्य घटत्वविशिष्टे द्रव्ये शक्तिः, इति गुणद्रव्ययोः सामान्याधिकरण्येना-भेदसम्बन्धेनान्वयस्यानुपपन्नतया मुख्यार्थबाधः, नीलगुणरूपशक्यस्य समवायसम्बन्धेन नीलादिपदैः नीलत्वादिगुणविशिष्टा लक्ष्यन्ते।

एवं चानुकूलादिपदेषु सादृश्यसम्बन्धेन लक्षणाकरणाद् गौणी निरूढा लक्षणा। नीलादिपदेषु सादृश्येतरसमवायादिसम्बन्धेन लक्षणया शुद्धा रूढि-रिति रूढिलक्षणायामपि द्वैविध्यमामनन्ति आचार्या अप्ययदीक्षितप्रभृतयः।

तत्र पृथङ्निर्दिष्टयोः विषयविषयिणोरभेद आरोपः। अपृथग्निर्दिष्टे विषये विषय्यभेदोऽध्यवसानम्।

गौण्याः सारोपाया उदाहरणं मुखं चन्द्रः, गौण्याः साध्यवसानायाः—

''पुरेऽस्मिन् सौधशिखरे चन्द्रराजी विराजते'' इति। अन्येषां भेदस्तु पृथङ् नोपात्तः लक्षणायाः षड्भेदेषु चत्वारो भेदा अलङ्काररूपतया परिणमन्ते। अजहत्स्वार्था जहत्स्वार्थेति द्वौ भेदौ ध्वनेः प्रभेदौ।

(र०गं०२/११९)

**मतभेदः**

मम्मटमते– अन्यार्थप्रतिपत्तिः, प्रतिपत्तिहेतुभूतव्यापारो वा लक्षणा। सा च साक्षादर्थव्यापारः परम्परया (आरोपितः) शब्दव्यापारः, तत्र मुख्यार्थबाध–मुख्यार्थयोगरूढिप्रयोजनान्यतरच्च कारणम्।

मुख्यार्थबाधपदेन तात्पर्यानुपपत्तिः गृह्यते, तात्पर्यं च

**''उपक्रमादिभिर्लिङ्गैस्तात्पर्यं वक्तुराशयः''।**

(सा०सा० २/२९)

लक्षणा प्रयोजनवती षड्विधा, रूढिरेकविधा अव्यङ्ग्या। प्रयोजनवती षड्विधा सव्यङ्ग्या, व्यङ्ग्यस्य गूढत्वागूढत्वाभ्यां प्रयोजनवती पुनर्द्विविधेति द्वादशविधा, द्वयोः सङ्कलनया त्रयोदशविधेति।

पण्डितराजमते– शक्यसम्बन्ध एव लक्षणा, स च सम्बन्धः साक्षादर्थनिष्ठः, परम्परया (स्वप्रतियोगिवाचकत्वसम्बन्धेन) शब्दनिष्ठः।

तत्र तात्पर्यान्वयानुपपत्ती रूढिप्रयोजनयोरन्यतरच्च कारणम्, लक्षणा द्विविधा निरूढा प्रयोजनवती च। तत्र निरूढा अपि गौणी शुद्धा भेदाद् द्विविधा, प्रयोजनवती षड्विधेति सङ्कलनयाष्टविधेति।

एवं च लक्षणास्वरूपे, निरूढाया द्वैविध्योपपादने एव मतभेदः। व्यङ्ग्यस्य गूढागूढत्वादिभेदः साक्षाद् व्यङ्ग्यभेदमूलक एवेति पण्डितराजोऽत्र मौनमेवाललम्बे।

**विमर्शः**

मम्मटाचार्यस्तु ज्ञानरूपामेव लक्षणां मनुते इति तद्ग्रन्थाक्षरस्वारस्येन प्रतीयते, ''यद् लक्ष्यते प्रतिपाद्यते सा प्रतिपत्तिर्लक्षणेत्युक्तेः, प्रमाणयति च कुमारिलभट्टमत्र ''अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते''।

(का०प्र० २/५०वामन्यां)

अत्रापि ''प्रतीतिर्लक्षणा'' इत्युक्तम्।

अत एव प्रयोजनप्रतिपादनाय व्यञ्जनाव्यापारमनभ्युपगतवतां प्रयोजनविशिष्टे लक्षणावादिनां मतं निराकुर्वन्नाह—

**''ज्ञानस्य विषयो ह्यन्यः फलमन्यमुदाहृतम्''**। इति।

(का०प्र० २/२८ सू०)

यदि ज्ञानं लक्षणा न स्यात्तदा विशिष्टे लक्षणावादिनां मतं निराकरिष्णुः ज्ञानस्य विषयो ह्यन्यः इत्यादि कथं ब्रूयात्, अत्र ज्ञानस्य कः

प्रसङ्गः, अतः मम्मटमते सिद्धा ज्ञानरूपा लक्षणा। (ज्ञानं च विषयतासम्बन्धेनार्थे, शब्दे च परम्परया) परमग्रे टीकाकाराः प्रतिपत्तिहेतुर्वृत्तिः, न तु प्रतिपत्तिरेवेत्याद्याशङ्क्य ''यद्लक्ष्यते'' इत्यस्य यदिति ययेत्यर्थकं लुप्ततृतीयान्तमव्ययं स्वीकृत्य यया वृत्या लक्ष्यते सा वृत्तिर्लक्षणेति व्याचख्युः। एवं ''प्रतीतिर्लक्षणोच्यते'' इत्यत्रापि ''प्रतीयते यया'' इति प्रतीतिः, करणे क्तिन् इति प्रणिजगदुः। इति टीकाकृतां गोविन्दठक्कुर-झलकीकरादीनां मतम् । तदुक्तं प्रदीपे ''प्रतिपत्तिहेतुर्हि वृत्तिः, न तु प्रतिपत्तिरेव। (का०प्रदीप)

परं नागेशः प्रतिपत्तिरूपां लक्षणां समर्थयन्निव लक्ष्यते — ''यदि तु अन्वयबोधप्रतिपत्तिहेतुर्वृत्तिरियं तु स्मृतिरित्युच्यते तदा मूलोक्तमपि सम्यक्''। (का०प्र०, पृ० ३८)

इयं लक्षणा तु स्मृतिः, स्मृतिश्च स्मरणात्मकं ज्ञानम्, अतः मम्मटमतं सम्यक्, इति रीत्या ज्ञानरूपां लक्षणां तन्मते समर्थयति। प्राचीनाचार्या अपि ''शक्यसम्बन्धेनाशक्यप्रतिपत्तिर्लक्षणा, इत्याहुः। (प्रदीप ३८) तदनुसार्येव लक्षणम्। तच्च (ज्ञानं च) शक्यतावच्छेदकप्रकारकलक्ष्यविशेष्यक इति। तदुक्तम्— ''तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः'' इति। एवं च शक्यतावच्छेदकारोपरूपा सा। अन्यथा तटादौ गङ्गात्वप्रतीतिदुर्लभा स्यात्।

पण्डितराजः सम्बन्धरूपां लक्षणां यदाह तत्र यद् वक्तव्यं तदभिधा निरूपणे उक्तम्।

तत्र मम्मटाचार्यो रूढिलक्षणायां भेदं नाकार्षीत्। अत्र कारणं प्रतिभाति, यत् स काव्योपयोगदृष्ट्यैव लक्षणा भेदं व्याजहार न तु शुद्धपदार्थनिरूपणधिया। काव्ये च प्रायः प्रयोजनवत्याः षड्भेदानामेवोपयोगो दृश्यते, शुद्धोपादानलक्षणायाः अर्थान्तरसङ्क्रमितवाच्यध्वनौ, लक्षणलक्षणायाश्चात्यन्ततिरस्कृतवाच्यध्वनौ उपयोगः। गौणसारोपारूपकालङ्कारस्य गौणसाध्यवसाना चातिशयोक्तेर्बीजम्, शुद्धसारोपा चतुर्थातिशयोक्तेः प्रयोजिका, शुद्धसाध्यवसाना तु सहकारिणमनपेक्ष्य कार्यकारित्वरूपसामर्थ्यातिशयरूपव्यङ्ग्योपदर्शिका। मतान्तरे हेत्वलङ्कारप्रयोजिकेति।

पण्डितराजोऽपि चर्तुण्णां भेदानमलङ्काररूपतया परिणतिं भेदद्वयस्य ध्वनिरूपतां निरूपयन् षड्भेदानामेवोपयोगं ब्रूते (र०गं० २/११९ पृ.) इति निरूढभेदकरणं काव्यदृष्ट्या नावश्यकम्।

अपि च शक्तिग्राहकव्याकरणकोशव्यवहारादिभिर्नीलादिपदानां नीलगुणे गुणिनि च शक्तिर्निश्चीयते। तत्र "गुणवचनेभ्यो मतुपोलुगिष्टः" इति। (भाष्ये इष्टिः १/४/१९सूत्रे) वार्तिकेन गुणवाचिशब्देभ्यो विहितस्य मतुपो लोपविधानात्" यः शिष्यते स लुप्यमानार्थाभिधायी" इति नियमात् नीलादयः शब्दा गुणिवाचकाः रूढाः सन्ति। एष मतुब्लोपः रूपादिशब्देभ्यो न जायते व्याख्यानात्। गुणे गुणिनि च प्रसिद्धानामेव तत्र गुणवचनशब्देन ग्रहणाद् अतो रूपो घट इति प्रयोगो न जायते।

एवं कोशादपि **"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"** इत्युक्तेः गुणे गुणिनि रूढिशक्तिरेव। नीलो घटः नीलं रूपमित्युभयविधव्यवहाराच्च तथेति। न्यायनये तथा सत्यपि काव्ये विशेषानाधायकत्वादुपेक्षितो तद्भेदो मम्मटभट्टैः। केवलं रूढिवशादपि लक्षणा भवति, अतः रूढिलक्षणा सामान्यतो निरूपितेति। परं पण्डितराजः लक्षणायां कारणीभूतां रूढिं निरूप्य तद्भेदमप्यभ्यधात्। युक्तं च तत् न्यायरीत्या इति शम्।

## तात्पर्यवृत्तिः

काव्यात्मभूतस्य ध्वनेः शब्दार्थयोः सहभावेन व्यञ्जकतयाऽर्थोऽपि सप्रेभदं निरूपणीय इति कृत्वा वाच्यलक्ष्यव्यङ्ग्येति भेदात् पूर्वं त्रिविधमर्थमुपपाद्य वाक्यार्थस्यापि व्यञ्जकत्वात् साहित्यशास्त्रस्य चतसृणां विद्यानां निष्यन्दभूतत्वात् केषाञ्चित् मते वाक्यार्थस्य तात्पर्यार्थत्वात् तन्निरूपयन् प्रकाशकृत् "तात्पर्यार्थोऽपि केषुचित्" (का०प्र० २/७) इति सूत्रयाञ्चक्रे।

अत्रायमभिसन्धिः — यथा पदार्थो व्यञ्जकः, तथा वाक्यार्थोऽपि। अन्वयरूपे वाक्यार्थे पदानां शक्तिस्वीकारे गौरवम्, (लाघवात् पदानां पदार्थमात्रे शक्तिः, अन्वयानामनेकविधत्वात् तत्र शक्तिस्वीकारे गौरवात्, अन्वयांशस्यान्यलभ्यत्वाच्च)। परं वृत्तिं विनार्थबोधनेऽतिप्रसक्तिः स्यात्, अतः पदार्थानां मिथोऽन्वयरूपे वाक्यार्थे शब्दस्य तात्पर्याख्या वृत्तिरभ्युपगन्तव्या। तत्प्रतिपाद्यस्यार्थस्य तात्पर्यार्थत्वव्यपदेशः। स च आकाङ्क्षायोग्यता-सन्निधिवशाद् जात्यादिरूपपदार्थानां परस्परमन्वये वाच्यार्थभिन्नः प्रत्येकपदवृत्त्यविषयः पदसमूहगम्यो वाक्यार्थं इत्यभिहितान्वयवादिनां मतम्।

तत्र जिज्ञास्यते क इमेऽभिहितान्वयवादिनः? मीमांसकाः, नैयायिकाः, वैयाकरणाः, वेदान्तिनः, आलङ्कारिका वा। (अन्यत्र दर्शनेषु प्रायः शब्दार्थविचारस्याप्रस्तुतत्वात्)।

तत्र वाक्यार्थविचारकुशला मीमांसका भाट्टाः प्राभाकराश्च। तत्र प्राभाकरास्तु — अन्विताभिधानवादिनः, तद्यथा प्रकरणपञ्जिकायां शालिकनाथः (प्रकरणपञ्जिकायां सवृत्तिकवाक्यार्थमातृकायाः प्रथमपरिच्छेदे प्रथमः श्लोकः) पदेभ्य एव वाक्यार्थप्रतीतिर्यथा भवति, तथा प्रभाकरगुरोर्मतं वयं निबध्नीमः) तत्रैव द्वितीयः श्लोकः–

**प्रधानगुणभावेन लब्ध्वाऽन्योन्यसमन्वयात्।**
**पदार्थानेव वाक्यार्थान् सङ्गिरन्ते विपश्चितः।।** इति।

इति प्रतिज्ञायाह — प्रधानपदार्थ एव, गुणभूतार्थान्तरान्वितो वाक्यार्थ इत्युच्यते, न च पदार्थानामन्वयो न वाक्यार्थः, किन्त्वन्विताः पदार्था एव वाक्यार्थः। यद्यपि वृद्धव्यवहारेणैव सर्वाश्शब्दव्युत्पत्तयो जायन्ते, वाक्यैरेव च वृद्धव्यवहारो भवति, तथापि यत्पदावापे यस्यार्थस्यावापः, यदुद्धारे चोद्धारस्तस्मिन्नेवार्थे तस्य पदस्य वाचकशक्तिर्निश्चीयते। न चैवमन्वितार्थप्रतीतिः कथमिति वाच्यम्, अन्वितपदार्थस्यैवावापोद्धाराभ्यां पदानामन्वितेष्वर्थेषु सामर्थ्यस्वीकारात्।

प्रकरणपञ्चिकायां सवृत्तिकवाक्यार्थमातृकायाः प्रथमपरिच्छेदे सप्तमः श्लोकः–

**ओप्यन्ते चोद्ध्रियन्ते च स्वार्था अन्वयशालिनः।**
**अन्वितेष्वेव सामर्थ्यं पदानां तेन गम्यते।।**

मम्मटोऽप्यन्विताभिधानवादिनः प्रभाकरस्य मते वाक्यार्थो वाच्य एवेति (का०प्र०, द्वि०उ० सप्तमसूत्रस्य वृत्तौ।) निरूपयति। अन्यत्र च तन्मतमुपपादयन्नाह यद् बालकः (का०प्र०, प०उ० शब्दवृद्धाभिधेयांश्चेत्यादि) शक्तिग्रहवेलायां मध्यमवृद्धमुद्दिश्य गामानयेति उत्तमवृद्धस्य वाक्यप्रयोगात् सास्नादिमद्व्यक्तिमानयति सति मध्यमवृद्धे तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमिनोति। पश्चाद् गां नयाश्वमानयेति प्रयोगे गवापसरणमश्वाहरणं च दृष्ट्वाऽन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियायां च क्रियापदस्य शक्तिं निश्चिनोति। अतो बालस्य प्रथमत एवान्वितबुद्धिर्जायते। न च गौरवादन्वयांशः परित्यज्यत इति वाच्यम्, प्रथमज्ञातस्योपजीव्यत्वेनोपजीव्यपरित्यागानौचित्यात्। इत्थं प्रभाकरमते विशिष्टा एव पदार्था वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम्, अतस्तन्मतानुयायिनोऽन्विताभिधानवादिनः कथ्यन्ते।

भाट्टमीमांसका: सन्त्यभिहितान्वयवादिन:, तेषां मते पदैरन्चितोऽप्य- भिहितोऽर्थोऽन्वितार्थप्रतिपत्तेर्निमित्तं भवतीति पदानां पारम्पर्येणान्वितेष्वपि हेतुत्वम्,-

**न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः।**
**तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते।।**

(श्लोक वा०अधि०७, श्लोक: २२९ तम:)

**वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्।।**

(श्लोक वा०अधि०७, श्लोक:३४३ तम:) (भाष्यकार: शबरस्वामी च पृ०मी०) १-१२५।

पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीमवगता: सन्त: वाक्यार्थमेव गमयन्तीति।

तथापि तेऽन्वितेऽर्थे पदानां शक्तिं न स्वीकुर्वन्ति, न वा पदार्थानामन्वयबोधाय तात्पर्याख्यां वृत्तिमङ्गीकुर्वन्ति, ते लक्षणयैव वाक्यार्थं प्रतिपादयन्ति।

इदमत्र तात्पर्यम्-- पदेनाभिधया प्रतिपादिता अर्था वाक्यतात्पर्यानुपपत्या आकाङ्क्षायोग्यतासन्निधिवशाद् विशिष्टं रूपं स्वान्वयमनुभावयन्तीति वाक्यार्थो लक्ष्य (''वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति न: स्थिति:'' इति वार्तिककारा मिश्रमहोदया:) एव, पदेन यद् बोध्यते तच्छक्यं पदार्थेन यद् बोध्यते तल्लक्ष्यमिति नियमात्।

वेदान्तिनस्तु प्रायो भाट्टानुसारिणोऽत्र लक्ष्यन्तेऽभिहितान्वयवादिन:, तथापि तेषां मते वाक्यार्थो लक्ष्य एवेति। तद्यथा चित्सुखाचार्योऽभिहितान्वयवादेऽन्विताभिधानवादिभिरारोपितं गौरवदोष-मुद्धर्तुमाशङ्कते।) तत्त्वप्रदीपिकायाम् (चित्सुख्याम्)।

नन्वभिहितान्वयवादे तिस्र: शक्तय: कल्पनीया भविष्यन्ति। तथा हि— १. पदानामर्थस्वरूपानुभवजननशक्ति:, २. अर्थानां चान्योन्यान्वयप्रत्यायनशक्ति:, ३. तदाधानशक्तिश्च। पदानामर्थस्मारकत्वपक्षेऽपि प्रथमां विहाय द्वितीयतृतीयशक्त्योरवश्यकल्प्यत्वाद् शक्तिद्वयं कल्पनीयम्। अन्विताभिधानवादे पदानां परस्परान्वितार्थाभिधानवादपक्ष एव श्रेयानिति चेत्, मैवम्, अन्विताभिधानवादेऽपि स्वार्थाभिधायिनी, अर्थान्तराभिधायिनी, अन्वयाभिधायिनी चेति तिसृणां शक्तीनां पदेऽवश्यकल्पनीयत्वात्।

न चोभयो: समानशक्तिकल्पनागौरवे विनिगमकाभावादन्विताभिधानपक्ष एव श्रेयानिति वाच्यम्। अभिहितान्वयेऽन्वितार्थप्रत्यायनाय प्रयुक्तानां

पदसमूहानां समभिव्याहारसामर्थ्यात् पदस्मारितार्थानां मिथोऽन्वयस्य लक्षणयैवौपपत्तेरनन्यलभ्यस्य च शब्दार्थत्वात्, तत्र शक्तिकल्पनस्य वैयर्थ्यात्। तदुक्तम्।

**विशिष्टार्थप्रयुक्ता हि समाभिव्याहृतिर्यतः।।** इति।

वैयाकरणाश्च नाभिहितान्वयवादिनः, तेषां मते निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकमिति। ते वाक्येऽपि शक्तिं स्वीर्कुन्ति। तद्यथा वैयाकरणभूषणसारे कौण्डभट्टः— (वैयाकरणभूषणसारे ६३-६४ कारिके)– हरेऽव विष्णोऽवेत्यादौ ''एङः पदान्तादति'' इत्येकादेशे सति पदयोर्विभागस्य दुर्ज्ञेयत्वात् प्रत्येकपदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात् समुदायेऽपि शक्तिस्वीकार आवश्यकः। वस्तुतो यथा पदेभ्यः पदार्थबोधः, तथा वाक्येभ्यो वाक्यार्थबोधः इति पदेषु पदार्थशक्तिरिव वाक्येषु वाक्यार्थशक्तिः स्वीकरणीयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ।

न च वाक्यार्थस्यापूर्वत्वात् कथं शक्तिग्रह इति वाच्यम्, पदेऽपि पर्यनुयोगस्य तुल्यत्वात्। न च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांऽशेऽज्ञातैवोपयुज्यत इति कुब्जशक्तिवाद इति वाच्यम्, वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्य तुल्यत्वात्।

अपि च घटः कर्मत्वमानयनं कृतिरित्यतस्तादृशशाब्दबोधाभावाद् घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकविभक्तेः, ततो धातोः, तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधात् तज्ज्ञानमपि हेतुरिति चेत्, सिद्धो वाक्यस्फोटः।

वस्तुतस्तु यथैकारौकारऋृकाऌादिवर्णेषु प्रतीयमाना अपि अवयवा न सन्ति, तथैव पचतीत्यादौ वर्णा न सन्ति, अतो न वर्णसमूहः पदम्। एवं वाक्यात् पदानां भेदो नास्ति। इत्थं च वाक्यमखण्डमेव। तद्यथा—

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।**

(वै०भू०सार, कारिका –६६)

परमलघुमञ्जूषायां नागेशभट्टा अप्यखण्डवाक्यस्फोटमाहुः। तत्र वर्णपद–स्फोटयोस्तु यथैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदः, जीवानां च परस्परं भेदः यथा वा मुखे मणिकृपाणदर्पणव्यञ्जकोपाधिवशाद् दैर्घ्यवर्तुलत्वादिभानम्, तद्वदौपाधिकं भानम्। (परमल०म०स्फोटविचारे) तत्र शास्त्रप्रक्रियानिर्वाहाय वर्णस्फोटादयः

कल्पिता एव, "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः" इति न्यायात्। (तत्रैव शक्तिविचारे)

एवं तेषां मतेऽखण्डं वाक्यमेव वाचकमर्थश्चाखण्ड एव वाच्य इति। पदार्थानामन्वयकल्पना तेषां मते दूरेऽपास्ता।

शास्त्रप्रक्रियानिर्वाहाय कल्पितपदार्थयोरन्वयग्राहिका वाक्यशक्तिः। सा चाकाङ्क्षाभास्या, वाक्यसमयग्राहिका चाकाङ्क्षेत्युक्तेः। एवं तावद् वैयाकरणानां मते तात्पर्यवृत्तेरनङ्गीकार इति।

प्राचीनाः परमप्राचीनाश्च ये वैयाकरणास्ते त्वभिधातिरिक्तां कामप्यन्यां वृत्तिं नाङ्गीकुर्वन्तीति विदितचरमेव विपश्चिताम्।

नैयायिका अपि प्राचीननव्यभेदेन द्विधा विभक्ताः सन्ति। तेषु नव्यनैयायिकास्तु पदार्थानामन्वय आकाङ्क्षाभास्य इति वदन्ति। तदुक्तं गदाधरभट्टाचार्येण— "शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते"। (व्युत्पत्तिवादे शब्दखण्डे) तत्र "संसर्गमर्यादया भासते" इत्यस्य आकाङ्क्षाभास्य इत्यर्थः, संसर्गस्य मर्यादा यया सा तया आकाङ्क्षयेत्यर्थात्।

शक्तिवादे च— सङ्केतो वृत्तिरिति स्वीकारे आधुनिकसङ्केतस्यापि वृत्तित्वं निर्वहति। तथा च तात्पर्यस्यापि वृत्तित्वं स्यात्, यतो हि "इदं पदमिममर्थं बोधयतु" इत्येवंरूपेण यद्बोधकत्वेन पदविषयकत्वम्, तदेव सङ्केतत्वम्, तस्य तात्पर्येऽपि सत्त्वात्। न चेष्टापत्तिः लक्षणास्थले तात्पर्येणैव बोधे लक्षणोच्छेदापत्तेरित्याद्याशङ्क्य पदार्थोपस्थितिरूपव्यापारेण शाब्दबोधोपयोगित्वस्यैव वृत्तित्वात् तात्पर्यस्य साक्षादेव शाब्दबोधोपयोगितया न तस्य वृत्तित्वमिति समादधे। (न्यायमञ्जरी) गौतमसूत्रस्य तात्पर्यविवृतिरूपा (३७०पृष्ठतः ३७२पृष्ठं यावत्। तात्पर्यशक्त्याऽन्वितप्रतीतिरिति प्रघट्टके।

प्राचीननैयायिकेषु जयन्तभट्टः स्वकीयोद्भटवैदुष्येण निराकृत्य शङ्कापङ्कं तात्पर्यं याथातथ्येन निरूपयाञ्चक्रे। (शक्तिवादे गदाधरः पृ०८) तद्यथा—

**दोषोऽन्विताऽभिधाने यः सामान्येऽपि स तादृशः।**
**दोषतुल्यो विशेषेऽपि यश्चोक्तोऽभिहितान्वये।।** इति।

(न्या०म०)

केचन सामान्येनान्विताभिधानं मन्यन्ते, विशेषतश्चाभिहितान्वयं वदन्ति। अर्थाद् गोशब्दः स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते

तावति अन्विताभिधानम्। शुक्लादिगुणविशेषसम्बन्धस्तु पदान्तरादवगम्यते। सोऽयं विशेषोऽभिहितान्वये इत्येतदपि दोषोपहतमेव।

न च भवताऽपूर्वमेवोच्यते, अन्विताभिधानेऽभिहितान्वये च दोष इति, एवं सत्यभिधानिको व्यवहार एव सङ्कुलः स्यात्, सर्वत्र दोषसम्भवादिति वाच्यम्, संहत्यकारीणि पदानीत्युक्तेः (समुदितैः पदैरेकस्य वाक्यार्थस्य प्रत्यायनात्'')। वाक्यार्थश्च विशेषणीभूतपदार्थसंसृष्टः कश्चित् पदार्थ एव। न चैवमन्विताभिधानपक्ष एव भवता प्रतिपाद्यते। पदानि संहत्यान्वितमर्थं सम्पादयन्ति, नान्वितमभिदधतीत्युक्तेः। किमुच्यते पदानि वाक्यार्थं तथोत्पादयन्ति, यथा मृदादयो घटमिति? न ज्ञापकत्वात् पदानां न कारकत्वम्। तर्हि किमिदं पदानां संहत्यकारितेति? पदानि समुदितान्यन्वितमर्थं प्रत्याययन्ति, नान्वितमभिदधति। नाभिधाशक्तिरन्वयमभिदधाति, अपि तु तात्पर्यशक्तिः पदार्थानामन्वयबोधिका निराकाङ्क्षप्रत्ययोत्पादनसमर्था। तथा हि—

**अन्यथैव प्रवर्तन्ते प्रत्यक्षाद्युद्भवा धियः।**
**अर्थं पूर्णमपूर्णं वा दर्शयन्तु पुरः स्थितम्।।**
**अन्यथैव मतिः शब्दे विषयेषु विजृम्भते।**
**प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधिः ।।**
**अत एव पदं लोके केवलं न प्रयुज्यते।**
**नहि तेन निराकाङ्क्षा श्रोतुराधीयते मतिः।।** इति।

(न्यायमञ्जरी)

अभिधातिरिक्तोऽयं तात्पर्यात्मा व्यापारः सर्वैः संसर्गवादिभिरप्रत्याख्येयः संसर्गश्च वाक्यात् प्रतीयते, न चाभिधीयते। अतः–

**अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता।**
**तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः।**
**तेनाऽन्विताभिधानं हि नास्माभिरिह मृष्यते।**
**अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते।।** इति।

(न्यायमञ्जरी)

आलङ्कारिकशिरोमणिर्ध्वनिसम्प्रदायप्रवर्तक आनन्दवर्धनाचार्यो मुख्यतया व्यञ्जनामेव निखिलविप्रतिपत्तिनिरासपूर्वकं साधयति, तथाप्येकत्र ध्वन्यालोके (तृतीये उद्योते ४९२पृष्ठे) अप्रस्तुतप्रशंसायां वाच्यस्य क्वचिद-विवक्षितत्वम्, क्वचिद् विवक्षित्वम्, क्वचिदुभयमिति त्रिविधां बन्धच्छायामुपपाद्य वाच्यस्याविवक्षितत्वे— ''कस्त्वं भोः कथयामि दैवहतकं

मां विद्धि शाखोटकम्'' इत्यादिपद्यमुदाहृत्याह— नहि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयत इति। तेन वाक्यार्थस्तात्पर्यार्थमिति सिद्धम्।

आलङ्कारिकेषु सहृदयजनमनःप्रकाशमानस्य ध्वनेरालोकसुखानुभवाय लोकलोचननियोजननिपुणा अभिनवगुप्तपादाचार्याः स्वोपज्ञे लोचने वाच्यव्यङ्ग्ययोः स्वरूपभेदमुपपादयन्तः ''भ्रम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण'' इत्यादौ वाच्योऽर्थो विधिरूपः, व्यङ्ग्योऽर्थो निषेधरूप इति भ्रम मा भ्रमीरिति विधिनिषेधरूपयोरर्थयोरेकदाऽभिधेयता भवितुं नार्हति, घटतदभावयोरिव तयोर्विरोधात्। विरूद्धयोस्तयोर्युगपद् बुद्धिपथानारोहितत्वात्। नापि क्रमेण वाच्यता, अभिधाया विधिरूपार्थं बोधयित्वा विरामात् पुनर्निषेधरूपार्थबोधने व्यापाराभावादित्याद्यभिधाय संशेरते– ननु यत्र तात्पर्यं तद्धि वाक्यार्थः, तात्पर्यविषयश्चात्र भ्रमणनिषेधः, अतस्तस्यैव विवक्षितत्वाद् भ्रमणविधौ पर्यवसानमनाप्नुवती पदनिष्ठा विवक्षितार्थप्रतीतिजननसामर्थ्यरूपतात्पर्यात्मिका शक्तिर्वाक्यार्थीभूतस्य निषेधस्य प्रतीतिं विपरीतलक्षणया करोति, तन्न वाच्याद् भिन्नोऽर्थ इति। ततः सिद्धान्तयामासुः– (ध्वन्यालोके लोचने प्रथमोद्योते भ्रम० इत्यादिपद्यव्याख्यानावसरे पृ०५६) नैतद् युक्तम्, लोके हि शब्दस्याभिधातात्पर्यलक्षणारूपास्त्रयो व्यापाराः संवेद्यन्ते। गोत्वादिसामान्यरूपेषु पदार्थेषु गवादिपदानामभिधाव्यापारः। अभिधा च सङ्केतग्रहसहकारेणार्थावगमशक्तिः। सङ्केतश्च जातावेव न व्यक्तौ, व्यक्तीनामानन्त्याद् व्यभिचाराच्च। तत आकाङ्क्षादिवशाद् गुणप्रधानभावेन मिथः सम्बन्धे विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः। मुख्यार्थबाधादिसहकार्यपेक्षयार्थप्रतिभासनशक्तिर्लक्षणा शक्तिः। तत्राभिधाशक्तिर्मुख्यार्थं बोधयित्वोपक्षीणा। द्वितीया (तात्पर्यशक्तिः) च पदार्थानां मिथोऽन्वयं बोधयित्वोपक्षीणा। मुख्यार्थबाधाद्यभावेन तृतीयशक्तेर्लक्षणाया अत्रावसर एव नास्तीत्यतश्चतुर्थव्यापारो ध्वननात्मा (तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभा सहायाऽर्थद्योतनशक्तिर्ध्वननव्यापारः) अनलपनीय एवेति।) ध्वन्यालोकलोचने प्रथमोद्योते वाच्यव्यङ्ग्ययोः स्वरूपभेदप्रतिपादनावसरे क्वचिद् वाक्ये विधिरूपे प्रतिषेधरूपः, यथा भ्रम धार्मिकेत्याद्युदाहरणव्याख्यायां लोचने।

इत्थमिमे तात्पर्यशक्तिं विना वाक्यार्थबोधाभावमाहुः तद्यथा तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिस्तात्पर्यशक्तिरिति। (तदन्यथा तस्यास्तात्पर्यशक्तेरन्यथा प्रकारान्तरेण, अभावादित्यर्थः। अनुपपत्तिः

वाक्यार्थबोधाभाव एव सहाय: कारणं सा तदन्यथानुपपत्तिसहायेति तद्व्याख्यातार:। तात्पर्यशक्ति: स वाक्यार्थ: परं प्रधानतया प्रतिपाद्य: येषां तानि तत्पराणि, तेषां भावस्तात्पर्यं तद्रूपा शक्तिस्तात्पर्यशक्तिरिति)

तात्पर्यवृत्तिविषये व्यञ्जनानिरसनाय कृतप्रयत्नयोर्धीधनिकयोर्धनिक-धनञ्जययोर्मतं निरूपयिष्याम:।

धनिको धनञ्जयश्च न केवलं वाक्यार्थावगतये तात्पर्याख्यां शक्तिं स्वीचक्रतु:, अपि तु सहृदयमनोमन्दिरेऽनश्वरीं प्रतिष्ठामाप्तस्य ध्वनिसम्प्रदायप्रवर्तकस्यानन्दवर्धनाचार्यस्य सिद्धान्तभूतां रसादिव्यङ्ग्यार्थाभिव्यञ्जिकां व्यञ्जनामञ्जसा निरसनायापि तात्पर्यशक्ति-मुपाददाते।

**एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।**
**यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्।।**
**पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता।**
**वक्त्रभिप्रेततात्पर्यमत: काव्यस्य युज्यते।।** इति।

(दशरूपके चतुर्थप्रकाशे ३७कारिकावलोके चतुर्थसप्तमश्लोकौ)

चतुर्दशभाषावारविलासिनीभुजङ्गकुलक्रमादागतवैदुष्यसरणिसनाथो विश्वनाथोऽपि साहित्यदर्पणे द्वितीयपरिच्छेद आह—

**तात्पर्याख्यां वृत्तिमाहु: पदार्थान्वयबोधने।**
**तदर्थं तात्पर्यार्थं च वाक्यं तद्बोधकं परे।। इति।**

(सा०द०द्वि०प०,कारिका २०)

तदयमभिप्रायो यत् पदानामभिधैकैकं पदार्थं बोधयित्वोपक्षीणा, अतो वाक्यार्थस्य (पदार्थानां मिथोऽन्वयरूपस्य) बोधिका तात्पर्यवृत्ति:। अनया वृत्त्या बोधितोऽर्थस्तात्पर्यार्थ:, तद्बोधकं च वाक्यमित्यभिहितान्वयवादिन आहु:।

## निष्कर्ष:

इत्थं भाट्टमीमांसका:, नैयायिका:, व्यवहार(प्रक्रिया)दशायां वैयाकरणा वेदान्तिन आलङ्कारिकाश्च सन्त्यभिहितान्वयवादिन:, परं तेषु वैयाकरणा वेदान्तिनो नव्यनैयायिका: प्राभाकरा: प्राचीना भाट्टाश्च पदार्थानामन्वयबोधाय तात्पर्यवृत्तिं नाङ्गीकुर्वन्ति। प्रतिष्ठापयन्ति च तां प्राचीननैयायिका आलङ्कारिका: अर्वाचीनभाट्टाश्च। अत एवेयं वृत्तिरेकदेशितयोपेक्षिता लक्ष्यते। पण्डितराजो व्यङ्ग्यस्याभिधा-

लक्षणामूलकत्वादभिधालक्षणे एव निरूपयामास तात्पर्यवृत्तिनिरूपणं तद्ग्रन्थे नोपलभ्यते, अतस्तत्र तदनभिमतिः सुस्पष्टं प्रतीयते। तथा हि— "अभिनवनलिनी किसलयमृणालवलयादिदवदहनराशिः"। इति मम्मटेनोदाहृते वाच्यविरोधोदाहरणे विरोधवाचकस्य "अपि" शब्दस्याभावात् कथं वाच्यविरोधाभास इति विचिकित्सायामवान्तरशङ्कामुत्थापयन्नाह पण्डितराजः—

न च विरोधविशिष्टाभेदस्य संसर्गत्वाद् वाच्यार्थबोधविषयतया विरोधस्य वाच्यत्वमिति वाच्यम्"। (र०गं०, पृ० २/८२) इति। तेनेदं प्रतीयते यदयं पदार्थसंसर्गं वाच्यमङ्गीकरोति। (अतोऽन्विताभिधानवादी) पदार्थसंसर्गबोधं संसर्गमर्यादया च स्वीकरोतीति नव्यनैयायिको वा अत एतन्मते तात्पर्यवृत्तिर्नास्तीति मतभेदः।

**विमर्शः**

परमयं क्वचिन्न्यायसरणिमनुसृत्य शाब्दबोधं विचारयति, यथा— "सादृश्यस्य समानधर्मरूपत्वे तु" (र०गं०, पृ० २/३३४) इत्यादिना। सादृश्यं समानधर्मरूपं नैयायिका निरूपयन्ति। एवं "सादृश्यस्य पदार्थान्तरत्वे" (र०गं०, पृ० २/३१०) इत्युक्तिः मीमांसकरीत्या सङ्गच्छते। "स च जातिगुणक्रियायदृच्छात्मकः" (र०गं०, पृ० २/१३८) इत्यादि-व्याकरणसरणिमनुसृत्याभिधत्ते। परमधिकांशतो न्यायरीतिमेवानुसरति। नैयायिकाश्चाभिहितान्वयवादिनोऽपि संसर्गमाकाङ्क्षाभास्यमङ्गीकुर्वन्तीति न तात्पर्यापेक्षा तन्मते।

वस्तुतः मम्मटोऽपि वाच्यार्थस्य व्यञ्जकत्वे "मातर्गृहोपकरणम् (का०प्र०२/६) इत्याद्युदाजहार, तत्र च वाक्यार्थो व्यञ्जकः तं च वाच्यं स्वीकृत्यैव तदुदाहरणं सङ्गच्छत इति।

**अथ व्यञ्जना**

काव्ये व्यञ्जकः शब्दः, व्यङ्ग्योऽर्थश्च विदग्धैर्महाकविभिः प्रयुज्येते "तौ शब्दार्थौ महाकवेः" (ध्वन्या०१/१८) इत्युक्तेः। तत्र व्यञ्जनया विशिष्टः शब्दः व्यञ्जकः, व्यञ्जनया बोध्योऽर्थो व्यङ्ग्यः— इति रीत्या व्यञ्जकशब्दव्यङ्ग्यार्थज्ञानं व्यञ्जनाज्ञानाधीनमतो विदग्धजनोपासितां व्यञ्जनां निरूपयितुमुपक्रमे। तदुक्तम्–

**शक्तिं भजन्ति सरला लक्षणां चतुरा नराः।**
**व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः।।**

(त्रिवेणिका, पृ०३३)

सा च व्यञ्जनार्थसामर्थ्याक्षिप्ता भवति। अर्थश्च वाच्यो लक्ष्यश्च। तयोर्मूलमभिधालक्षणे। अतोव्यञ्जनाऽपि तावदभिधामूला लक्षणामूला च। तत्र लक्षणायां हेतुभूतप्रयोजनोपपादने व्यञ्जनात्मको व्यापार:— "तत्र व्यापारो व्यञ्जनात्मक: (का०प्र० २/१४) इत्युक्ते:। एवं व्यङ्ग्यप्रकाशनानुकूलशब्दव्यापारो व्यञ्जनेति तथोक्तम्।

अभिधामूला शाब्दी, आर्थी चेति। शाब्दत्वं चास्या शब्दस्यान्वयव्यतिरेकाभ्यां ज्ञेयम्। शाब्द्या: स्वरूपं निरूपयन् मम्मटाचार्य: प्राह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्।।**

(का०प्र० २/१९)

अयं भाव: -- अनेकार्थकशब्दस्याभिधया सर्वेषामर्थानामुपस्थितौ शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे सति श्रोता वक्तृविवक्षितार्थनिर्णायकान् हेतून् संयोगादीन् पर्यालोचयति। तत: संयोगादिभिर्यत्रार्थे वक्तृतात्पर्यं तत्रार्थेऽभिधा नियन्त्रिता सती तमेवार्थं बोधयति, सोऽर्थो वाच्य:। अनन्तरं विदग्धानां यो वाच्यार्थादतिरिक्तोऽर्थो भासते तत्प्रतिपत्तिहेतु: शब्दस्य या वृत्ति: सा व्यञ्जनेति। एवमर्थोऽपि व्यञ्जक:। अत आर्थ्या: स्वरूपम्—

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधे:।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।।** इति।

(का०प्र० ३/२१,२२)

अत्र वक्तृबोद्धव्यादिवैशिष्ट्यात् प्रतिभाशालिनामन्यार्थप्रतिपत्तिहेतुरर्थस्य वृत्तिर्व्यञ्जनेति फलितम्। तत्र वक्तृबोद्धव्यादिवैशिष्ट्यं सहकारिकारणम्, प्रतिभाशालिनस्तत्प्रतिपत्तार:। अन्यार्थ(वाच्यलक्ष्यातिरिक्तार्थ) प्रतिपत्तिहेतुरर्थव्यापारो व्यञ्जनेति लक्षणम्। एवञ्च—

नियन्त्रितार्थविषयकज्ञानानुकूलशब्दव्यापारत्वं शाब्दव्यञ्जनात्वम्, वक्त्रादिवैशिष्ट्यहेतुकप्रतिभाशालिनामन्यार्थज्ञानहेतुभूतव्यापारत्वमार्थ-व्यञ्जनात्वम्।

लक्षणामूलव्यञ्जनाया निषेधेमुखेनैवोपपादनं लक्ष्यते। "नाभिधा समयाभावादित्यादिना"। विश्वनाथस्त्वाह—

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते पर:।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।**

(सा०द० २/१२.५)

अच्युतरायस्तु प्राह —

**अशक्यालक्ष्यसम्बोधादमन्दानन्ददायिनी ।**
**दृशोश्चुम्बनतः किं न व्यञ्जना रञ्जनं जनाः ।।** इति।

अर्थात्– शक्यलक्ष्यभिन्नार्थबोधहेतुभूतसहृदयाह्लादिका वृत्तिर्व्यञ्जनेति लक्षणं फलितम्। तदपि मम्मटानुवादभूतमेव। आशाधरभट्टश्च— शक्यलक्ष्यार्थातिरिक्तार्थबोधिकावृत्तिर्व्यञ्जनेति प्राह।

पण्डितराजेन तु– व्यञ्जना लक्षितैव न। भवेन्नाम कुत्रचिल्लक्षितं स्यात् परमुपलभ्यमानेऽपूर्णे ग्रन्थे तु न दृश्यते। परं रसनिरूपणे व्यक्तिं निरूपयन्नाह— व्यक्तिश्च भग्नावरणाचिदिति। परं रसोपयोगिन्या व्यक्तेरेवैतल्लक्षणं प्रतिभाति।

नागेशश्च -- "मुख्यार्थबाधादिग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बसम्बद्ध-साधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कार-विशेषो व्यञ्जना"। इति प्राह। एतन्मते संस्काररूपा व्यञ्जना। अत्र लक्षणायामतिप्रसक्तिवारणाय मुख्यार्थेत्यादि। मुख्यार्थसम्बद्धासम्बद्ध विषयकः" इति स्वरूपकथनम्। वक्त्रादिवैशिष्ट्यज्ञानेत्यादिसहकारिनिरूपणम्। इदमपि मम्मटग्रन्थपर्यालोचनमेव कृतम्।

## व्यञ्जनाया आश्रयः, मूलं च

इयं व्यञ्जना शब्दस्य, अर्थस्य, वर्णस्य रचनायाः प्रबन्धस्य वाचकचेष्टादेरपि वृत्तिः। अत एव नैयायिकमीमांसकादिभिः शब्दवृत्तित्वेन नेयमङ्गीकृता। आलङ्कारिका एवेमां शब्दवृत्तिमङ्गीकुर्वन्ति। तत्रापि मूलं वैयाकरणा एव। तथा हि महाभाष्यकारः— "अथवा प्रतीतिपदार्थको लोके ध्वनिः शब्द इत्युच्यते। (म०भा०पस्पशाह्निके)। स्फोटः — शब्दः, ध्वनिः शब्दगुणः (म०भा०न०आ०तपरसूत्रे) इत्याह। ततश्च प्रतीयते यद् व्यङ्ग्यस्य स्फोटरूपस्य शब्दस्य व्यञ्जकेषु तत्तत्कण्ठताल्वाद्यभिघातजन्यश्रूयमाणवर्णेषु ध्वनिशब्दोक्त्या ध्वनतीति ध्वनिः व्यञ्जकः सः, स्फोटश्च व्यङ्ग्यः। अतो द्वयोः कश्चन व्यापारः, स च व्यञ्जनारूप इति।

भर्तृहरिरपि — "ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते" (वा०प० १/१८४) अन्यत्र च– "निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः। (वा०प्र० २/१९४) इत्याह। द्योतकता व्यञ्जकता च पर्यायः। यद्यपि

**स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।**
**यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्।।**

इति रीत्या दीपघटयोर्व्यङ्ग्यव्यञ्जकभावः सर्वैरभ्युपेयत एव। नैयायिकाश्च— जलगतमाधुर्यस्य व्यञ्जकं हरीतकीभक्षणमङ्गीकुर्वन्त्येव। परं शब्दवृत्तित्वं नाङ्गीकुर्वन्ति।

**व्यञ्जनायां विप्रतिपत्तयः, निराकरणं च**

लक्षणामूलव्यञ्जनायां द्विधा विप्रतिपत्तयः सन्ति— प्रयोजनप्रतिपिपादयिषया हि लाक्षणिकशब्दप्रयोगः। अतो लक्षणया लक्ष्यार्थ-बोधानन्तरं पुनर्लक्षणयैव प्रयोजनसम्प्रत्यय इत्येके। लक्ष्यप्रयोजनप्रतीतौ सूक्ष्मक्रमस्यानाकलनात् तयोर्युगपदेव लक्षणेत्यपरे। तथा हि मुकुलभट्टः स्फुटमभिधत्ते ''लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य विद्यत इति दिशमुन्मूलयितुमिदमत्रोक्तम्'' (अभिधावृत्तिमातृका पृ० ६६)

भोजराजश्च—

> **एकस्मिन्नक्ष्णि श्रावणोऽन्यस्मिन् भाद्रपदः**
> **माधवो महीतलस्रस्तो गण्डस्थले शरद्।**
> **अङ्गे ग्रीष्मः सुरवासिका तिलवने मार्गशीर्षो**
> **मुग्धाया मुखपङ्कजसरसि आवासितः शिशिरः।।**

(सरस्वतीकण्ठाभरणम् २ ५०)

इत्यत्र प्रणिजगाद— असौ विरहवत्या वियोगवेदनातिशयं लक्षयन्ती कमितरि स्नेहातिशयं लक्षयतीति'' (तत्रैव)। अत्र वियोगवेदनातिशयो लक्ष्यः, कमितरि स्नेहातिशयः प्रयोजनम्, परं तत्रापि लक्षणैव स्वीकृता भोजराजेनेति लक्षयतीत्युक्त्याऽवसीयते। एतावता सिद्धमिदं यदिमे प्रयोजनांशमपि लक्षणावेद्यमेवेत्यभिदधाना भाक्तवादिनः सन्ति।

**अत्र प्रकाशकारः**

यस्य शैत्यपावनत्वातिशयादिरूपप्रयोजनस्यानुभवमाधातुं वाचकं शब्दमनादृत्य लाक्षणिकः शब्द आश्रीयते, तत् प्रयोजनं शब्दैकगम्यं शब्दस्य सम्भृतसामग्रीकत्वात्, अनुमानस्य व्याप्त्यादिप्रतिसन्धानादिविलम्बेन विलम्बितत्वान्नानुमानगम्यम्। किञ्च, तथा सति गङ्गात्वं एव लिङ्गं सत् शैत्यादिकमनुमापयतीति स्वीकार्यम्। न च तटे गङ्गात्वं सिद्धम्, तत्पदप्रयोगविषयत्वे च न व्याप्तिग्राहकं प्रमाणम्। तत्कथमस्य लिङ्गता? अतः शब्दैकगम्ये प्रयोजने शब्दस्य व्यञ्जनादृते नान्यो व्यापारः। तथा हि— शैत्यपावनत्वादौ गङ्गादिशब्दानां सङ्केताभावादभिधायाश्च सङ्केतितार्थस्यैव बोधनाद् नाभिधा।

तात्पर्यविषयान्वयानुपपत्तौ सत्यां प्रयोजनमभिसन्धाय मुख्यार्थसम्बद्धमर्थं प्रतिपादयन्ती लक्षणापि प्रयोजनांशं न लक्षयति। यतो हि मुख्यार्थमभिधायाभिधायां विरतायां तात्पर्यान्वयानुपपत्तौ सत्यां लक्षणा प्रवर्तते, अतस्तात्पर्यान्वयोपयोगिनमर्थं मुख्यार्थसम्बन्धेन लक्षयित्वा लक्षणोपक्षीणशक्तिः प्रयोजनांशबोधने न क्षमा।

"गङ्गायां घोषः" इत्यत्राभिधया प्रवाहरूपोऽर्थोऽभिधेयः आधाराधेयभाव-सम्बन्धस्य प्रवाहघोषयोरनुपपन्नत्वात् प्रसरन्ती लक्षणा विवक्षितसम्बन्धसम्बन्धिनं मुख्यार्थसम्बद्धं लक्षयति। शैत्यं पावनत्वं च नाधाराधेयभावसम्बन्धिप्रतियोग्यनुयोगिनी भवतः। अतः प्रवाहस्य सामीप्यसम्बन्धसम्बन्धिनं विवक्षितसम्बन्धप्रतियोगियोग्यं तटरूपमर्थं लक्षयित्वोपक्षीणा लक्षणा प्रयोजनांशं न लक्षयति।

अपि च प्रथमं मुख्यार्थोपस्थितिः, ततो बाधप्रतिसन्धानम्, ततो लक्ष्यार्थज्ञानम्, ततः प्रयोजनांशप्रतीतिरिति क्रमः। एवं प्रयोजनं शैत्यपावनत्वादि, तदा लक्ष्यं स्याद् यदा लक्ष्यस्तटादिर्मुख्योऽर्थः (गङ्गापदाभिधेयः) स्यात्। न च तीरादिर्गङ्गापदाभिधेयः। तटाद्यर्थे मुख्ये सति तत्र घोषाधिकरण-त्वस्यासम्भवरूपबाधोऽपि न। प्रवाहसमवेतेन शैत्यपावनत्वादिरूपप्रयोजनेन तटस्य साक्षात् सम्बन्धोऽपि नास्ति। शैत्यपावनत्वादिप्रयोजने लक्षयितव्येऽन्यत् प्रयोजनमपि नास्ति। प्रयोजनेऽपि प्रयोजनान्तरकल्पनायां तत्प्रयोजनान्तरं कया शब्दवृत्त्याऽवगम्यते? यदि लक्षणया, तदा तत्रापि प्रयोजनान्तरं देयम्, एवमनवस्थापातः।

गङ्गादिशब्दः शैत्यपावनत्वादिप्रयोजनप्रतिपादने क्षीणसामर्थ्योऽपि न। यतो हि प्रयोजनप्रतिपत्तिस्तस्मादेव गङ्गाशब्दाद् जायते, परं नाभिधया तत्र सङ्केताभावात्। नापि लक्षणया मुख्यार्थबाधादिहेतुत्रयाभावात्। अतो व्यापारान्तरं मुख्यम्।

न च प्रयोजनं तटगतं शैत्यपावनत्वज्ञानं लक्ष्यमेव, तत्र प्रयोजनान्तरं घोषवृत्तिशैत्यादिप्रतीतिरिति शङ्क्यम्। घोषनिष्ठशैत्यादेः कया वृत्त्या प्रतीतिरिति शङ्कायां लक्षणयेत्युत्तरे, तत्रापि प्रयोजनान्तरमित्यनवस्थापातात्। न च बीजाङ्कुरन्यायेनानवस्था न दोषायेति वाच्यम्, प्रयोजनान्तरे लक्ष्ये तत्रापि प्रयोजनान्तरचिन्तायां मूलभूतलक्षणाप्रयोजनप्रतीत्यनापत्तेः। मूलक्षयकारिण्या अनवस्थाया दोषत्वेनाभिधानात्। तद्यथा–

**मूलक्षतिकरीं चाहुरनवस्थां च दूषणम्।।** इति।

एवं पावनत्वादिकं प्रयोजनं न गङ्गापदाभिधेयम्, गङ्गापदनिष्ठ–सङ्केताविषयत्वात्। न च तात्पर्यवृत्तिवेद्यम्, पदार्थसंसर्गभिन्नत्वात्, पदार्थयोः संसर्ग एव तात्पर्यवृत्तिवेद्यः, न वा गङ्गापदलक्षणाया लक्ष्यं लक्षणाजन्यज्ञानजनकसामग्रीरहितत्वात्।

किञ्च, गङ्गापदस्य लक्षणावृत्तिस्तटमर्थं लक्षयित्वा पुनः प्रयोजनांशं लक्षयितुं न क्षमा "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति न्यायात्। अतो व्यञ्जना स्वीकार्यैवेति प्रथमे निरस्ताः।

अपरे प्रयोजनांशविशिष्टे लक्ष्ये लक्षणामङ्गीकुर्वन्ति। तेषामयं भावः— "गङ्गायां घोषः" इत्युक्ते तात्पर्यविषयीभूतप्रवाहघोषयोराधाराधेयभाव-सम्बन्धानुपपत्त्या प्रवाहसम्बद्धे शैत्यपावनत्वादिविशिष्टे तटे लक्षणा। न च प्रयोजनविशिष्टस्य लक्ष्यत्वे प्रयोजनाभाव इति वाच्यम्, "गङ्गातटे घोषः" इति वाक्यात् केवलस्य तटस्याधारताप्रतीतेः, "गङ्गायां घोषः" इत्यनेन शैत्यपावनत्वादिविशिष्टतटस्येत्यधिकस्यार्थस्य प्रतीतेः प्रयोजनादिति।

अत्रोच्यते– शैत्यपावनत्वादिविशिष्टे तटे लक्षणा न युक्ता। विशिष्टलक्षणायां लक्षणाजन्यज्ञानस्यैव फलज्ञानात्मकत्वाच्छैत्यपावनत्वादिज्ञानं लक्षणाजन्यज्ञानफलं न स्यात्। यथा ज्ञानस्य विषयो ज्ञानादन्यः एवं ज्ञानस्य फलमपि ज्ञानादन्यत्। फलफलिनोः समसमयसमुत्पत्त्यसम्भवात्।

भाट्टमीमांसकादीनां मते प्रत्यक्षादिज्ञानस्य घटादिर्विषयः घटप्रत्यक्षानन्तरं तस्मिन् घटे ज्ञाततापरपर्याया प्रकटता जायते। सा प्रकटतैव घटज्ञानस्य फलं यया घटज्ञानमनुमीयते।

नैयायिकाश्च— घटज्ञाने जाते घटविषयकज्ञानवानहमिति प्रतीतिरूपाऽनुव्यवसायापरनाम्नी संवित्तिर्ज्ञातरि जायते, यया घटज्ञानस्य प्रामाण्यं भवति। अनयोर्मते ज्ञानं न स्वप्रकाश इति। एवं ज्ञातृधर्मः संवित्तिः प्रत्यक्षादिज्ञानस्य फलं ब्रुवते।

वेदान्तिनश्च— घटप्रत्यक्षे जाते घटेऽज्ञानात्मकावरणस्य भङ्गो भवति। स आवरणभङ्ग एव घटाभिव्यक्तिर्वेति घटज्ञानस्य फलमिति निगदन्ति। वेदान्तिप्रभाकरमीमांसकवैयाकरणालङ्कारिकाणां मते ज्ञानं स्वप्रकाश इति। एवं यथा प्रत्यक्षादिविषयफलयोः प्रत्यक्षाद्भिन्नत्वम्, तथा लक्ष्यज्ञानात् तत्फलस्य पावनत्वादिज्ञानस्य भिन्नत्वमवश्यमवगन्तव्यम्, अतो विशिष्टे लक्षणा भवितुं नार्हति। तदाहुर्मम्मटभट्टाः:–

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।**
**विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते।।** इति।।

अत्र सूत्राक्षरस्वारस्येन ज्ञानस्य विषयोऽन्य:, फलञ्चान्यदिति विषयफलयोर्भेद इति प्रतीयते। परमिदं न युक्तम्, यतो हि फलं द्विविधं भवति— जन्यं वा ज्ञाप्यं वा। अत्र शैत्यपावनत्वादिफलं जन्यं चेत्, तर्हि विशिष्टलक्षणापक्षेऽपि शैत्यपावनत्वादिज्ञानस्य लक्षणाजन्यज्ञानत्वाद् विषयभेदसत्त्वाच्च (फलं ज्ञानं विषयो न ज्ञानमिति भेदसत्त्वाच्च) शैत्यपावनत्वादौ फलत्वमव्याहतमेव।

अपि च मृद्घटोपादानमितीश्वरगतोपादानप्रत्यक्षफले घटादौ तद्विषयभेदसत्त्वाद्, व्यभिचरितश्चेति। यदि ज्ञाप्यं फलं तदा फलं तु प्रकटता संवित्तिर्वेति दृष्टान्तविरोधस्तयोर्जन्यत्वरूपत्वादिति।

अतो लक्षणया बोधिते तटादौ ये शैत्यपावनत्वादयो विशेषा: प्रतीयन्ते, ते न लक्षणया गम्या:, अपि तु व्यञ्जनद्योतनध्वननादिपर्यायेण व्यापारान्तरेण गम्या:।

## तात्पर्यान्तर्भावखण्डनम्

भट्टलोल्लटधनञ्जयधनिकप्रभृतीनां मीमांसकैकदेशिनां मते शब्दश्रवणानन्तरं यावन्तोऽर्था: प्रतीयन्ते तेषु शब्दस्य तात्पर्यवृत्तिस्तात्पर्याकृष्टाभिधैव वा व्यापारोऽस्ति। एतदेवाभिप्रेत्य– "तात्पर्यं न तुलाधृतम्" "नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते" "सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार:" "यत्पर: शब्द: स शब्दार्थ:" इत्यादयो न्याया व्यवह्रियन्ते। परञ्च ध्वनिसम्प्रदायाचार्यै: स्वप्रखरप्रतिभाभि: सूक्ष्मातिसूक्ष्मदृशा विचार्य निरणायि, यद् व्यञ्जनैव व्यङ्ग्यार्थबोधने क्षमा न तात्पर्यशक्तिर्न वाऽभिधेति। तद्यथा— यदुच्यते तात्पर्यं न तुलाधृतमिति तत्र जिज्ञास्यते किमिदं तात्पर्यम्, अन्विदतार्थप्रतिपत्तयेऽभिहितान्वयवादिभि: स्वीकृतमन्यद्वा, आद्यस्य तु पदार्थानां संसर्गं बोधयित्वोपरमात्।

न च विभावादिसंसर्गस्य व्यङ्ग्यार्थस्य रसादेश्च तात्पर्यशक्त्या युगपदेव प्रतीतिर्भवेदिति चेन्न, विभावादिसंसर्गरसयो: क्रमिकत्वाङ्गीकारात् आशुभावितया क्रमस्यालक्ष्यत्वादलक्ष्यक्रमव्यङ्ग्यत्वव्यवहारो न तु क्रमाभावात्। यत्त्वत्र साहित्यदर्पणे विश्वनाथेनोक्तं यत् "तयोर्हेतुफलभावाङ्गीकारादिति" तन्न सम्यक्। यतो हि विभावादय: कारकहेतवो ज्ञापकहेतवो वा। नाद्य:, यस्मादेष विभावादिसमूहालम्बनात्मक:। तस्मान्न कार्य:। न द्वितीय:, नायं ज्ञाप्य:, स्वसत्तायां प्रतीत्यव्यभिचारत:" इत्यादिना तेनैव निराकृतत्वात्। अन्यच्चेत् चतुर्थी वृत्ति: सिद्धा। परं नाममात्रे विवाद:। यदि तत्परत्वं तदर्थत्वमित्युच्यते, तदा व्यञ्जनावृत्तिवेद्येऽप्यर्थे तदर्थतानपायात् स्वीकृतमेव।

यद्यप्युच्यते ''नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'' रसादिप्रतीतिः केनचिन्निमित्तेन जायते, निमित्तान्तरानुपलब्धेस्तत्र शब्द एव निमित्तम्, निमित्तत्वं च वृत्तिं विना शब्देऽसम्भवादभिधैव वृत्तिरतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्राभिधैव व्यापारः। एवञ्च वाच्या एव रसादय इति। तत्रोच्यते– रसादिप्रतीतौ यच्छब्दस्य निमित्तत्वं तत्कारकत्वं न सम्भवति शब्दस्य प्रकाशकत्वात्। ज्ञापकत्वञ्चेदज्ञातस्यार्थस्य ज्ञापकत्वस्वीकारेऽव्युत्पन्नस्यापि शब्दश्रवणमात्रेणार्थप्रतीतिप्रसङ्गात्। प्रत्यक्षातिरिक्तप्रमाणस्य ज्ञातस्यैव करणत्वनियमाच्च। अतः शब्दो ज्ञातस्यैव ज्ञापक इति। ज्ञातत्वञ्च सङ्केतेनैव। सङ्केतश्चान्वितमात्रे। शब्दस्यार्थनिमित्तत्वं व्यापारसापेक्षमेव। अतो व्यङ्ग्यार्थबोधाय व्यञ्जनाव्यापारोऽभ्युपेयोऽन्यथा व्यङ्ग्यार्थं प्रति शब्दस्य निमित्तत्वानिश्चयात्कथं प्रतीतिः। अपि च व्यङ्ग्येऽर्थे सङ्केतग्रहे सति शब्दात्तदुपस्थितिः, शब्दादुपस्थितौ च सङ्केतग्रह इत्यन्योन्याश्रयदोषदूषितत्वान्नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम्।

यच्चोक्तं भट्टलोल्लटेन ''सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार इति यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण शत्रोर्मर्मच्छेदं वर्मच्छेदं प्राणहरणं च करोति तथैव सुकविना प्रयुक्तः शब्द एकेनैवाभिधाख्येन व्यापारेण पदार्थोपस्थितिमन्वयबोधं व्यङ्ग्यप्रतीतिं च जनयतीति। न चैकार्थप्रतीत्यनन्तरं शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः'' इति नियमाच्छब्दस्य विराम इति वाच्यम्, विवक्षितार्थप्रतीत्युत्तरमेव विरामाङ्गीकारात्। तत्रोच्यते— स दीर्घोऽभिधाव्यापारः किमेकः प्रतिविषयमनेको वा। तत्र नाद्यः, वाच्याद्यर्थरूपस्य विषयस्य भिन्नत्वात्। विषयभेदे सति तत् सम्बन्धिव्यापारभेदस्याप्यावश्यकत्वादिति। न द्वितीयः, वाच्यलक्ष्यव्यङ्ग्याद्यर्थरूपविषयाणां सङ्केतग्रहमुख्यार्थबाधादिवक्तृबोद्धव्य-वैशिष्ट्यादिसहकारिणां च भेदाद् भिन्नजातीयत्वात्। अनेकस्मिन् व्यापारे सजातीयेऽङ्गीक्रियमाणे सति ''शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति सिद्धान्तात् पुनस्तस्याऽप्रवृत्तेः। असजातीयो व्यापारश्चेत् सिद्धा व्यञ्जना। न च व्यापारस्य दीर्घत्वं नाम नैकत्वमेकजातीयत्वं वा, किन्तु वाक्यप्रतिपिपादयिषितचतुर्थकक्षानिविष्टार्थप्रतिपादनशैत्यविशेष एव। अतो व्यङ्ग्यस्याभिधाविषयत्वमस्त्येवेति वाच्यम्, व्यङ्ग्यार्थे सङ्केतग्रहाभावाद-भिधयाऽप्रतिपत्तेः। अथ पदार्थवाक्यार्थयोर्निमित्तनैमित्तिकभावाभ्युपगमाद् निमित्तभूतेषु पदार्थेषु सङ्केतग्रहात्तन्मात्रेणैव पृथगन्त्यवाक्यार्थविषयकसङ्केतानपेक्षया तद्वाक्यार्थप्रतीतिरभिधया भवतीति चेद्, अहो मीमांसकानां वाक्चातुर्यम्। प्रथमं

प्रतीतिपथमवतीर्णश्चतुर्थकक्षानिविष्टार्थतः पश्चादवगताः पदार्था निमित्तभावं गच्छन्तीति नूनं प्रपौत्रं प्रति नैमित्तिकत्वं मीमांसकस्य।

अथास्तु पदार्थप्रतीतिः पश्चात्तनी तथापि तद्विषयकसङ्केतग्रहस्य पूर्वं— जातत्वात् तद्द्वारकः पदार्थानां निमित्तत्वव्यपदेशो न विरुद्ध इति चेत्, न तदनुसरणोपयोगिनोऽनुक्तेः। किं च पूर्वपदार्थेषु सङ्केतग्रहोऽपि न घटते अन्वितानामेव सर्वदा प्रयोगात्। अथावापोद्वापाभ्यां पृथक् पृथक् पदार्थेषु सङ्केतग्रह इति चेत्, सत्यम्, सङ्केतः पदार्थमात्रे एवेत्यभ्युपगमे वाक्यार्थप्रतीतिः पश्चात्तनीति निर्विवादात्। (ध्व०लोचने, प्रथमोद्योते – भ्रम धार्मिकेति पद्यव्याख्याने पृ० ६४–६६ पर्यन्तम्)।

२. अपि च, शब्दश्रवणानन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारस्तदा ब्राह्मण पुत्रस्ते जातः, चैत्र कन्या ते गर्भिणी जातेत्यादिवाक्यश्रवणानन्तरं हर्षविषादादिप्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात्। न चानन्यलभ्यो हि शब्दार्थ इति न्यायेनात्र मुखप्रसादमुखमालिन्यादिलिङ्गेन लिङ्गिनोर्हर्षशोकयोरनुमानात् प्रतीतेरन्य-लभ्यत्वात्तत्र नाभिधेति वाच्यम्, प्रतीतिमात्रेऽभिधाकल्पने लक्षणोच्छेदापत्तेः। न चेष्टापत्तिः, स्वसिद्धान्तविरोधात्। ननु लक्षणीयेऽर्थे मुख्यार्थबाधेनाभिधाया विच्छेदान्न दीर्घतरो व्यापार इति चेत् "श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (पू०मी०३, अ०पा०१-४०सू) इति जैमिनिसूत्रासङ्गतेः। अयं भावः— सूत्रोक्तानां श्रुत्यादीनामेकत्रोपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वात् पूर्वपूर्वस्य श्रुत्यादेः प्राबल्यं मीमांसकैर्निरणायि। यदि शब्दश्रुतेरनन्तरोपस्थितेषु सर्वेष्वर्थेष्वभिधैव व्यापारस्तदा सर्वेषामर्थानामभिधेयतया समकालोपस्थितत्वादर्थविप्रकर्षादिति हेतूपादानमसङ्गतं स्यात्।

३ ननु शब्दश्रुतेरनन्तरं यावतामर्थानां प्रतीतिस्तावतां केवलयाऽभिधया न, अपि त्वाकाङ्क्षादिसापेक्षयेति श्रुतिलिङ्गादिसूत्रोक्तानां परपरस्यार्थबोधे पूर्वपूर्वस्य सहकारित्वात् परपरार्थोपस्थाने विलम्बादर्थविप्रकर्षाभिधानमुचितमेवेति।

"अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्कुरु" इत्यादीनामदोषतापत्तेस्तत्राऽसभ्यार्थस्याविवक्षितत्वात्। न च सन्धौ सति "चिङ्कु" पदस्य लाटभाषायां स्त्रीगुह्याङ्ग(योन्यन्तर्वर्त्यङ्कुर) वाचकत्वादसभ्यार्थस्मारकत्वाद् दुष्टत्वं तस्येति वाच्यम्, व्यङ्ग्यार्थस्याभिधेयतायां च्युतसंस्कृत्यादीनां नित्यदोषत्वं श्रुतिकट्वादीनामनित्यदोषत्वमिति व्यवस्थानापत्तेः। न चेष्टापत्तिः, सर्वेषां व्यवस्थिततत्वेन प्रतिभासात्।

व्यञ्जनास्वीकारे व्यङ्ग्यार्थस्यानेकविधत्वाद् श्रुतिकट्वादीनां शृङ्गारे हेयत्वेऽपि वीररौद्रादावानुकूल्येनानित्यत्वमसाधुत्वादीनां सर्वत्र त्याज्यत्वान्नित्यत्वमिति व्यवस्थितत्वात्। न चाभिधाबोध्येऽपि शृङ्गारादौ प्रातिकूल्येन वीरादावानुकूल्येन नित्यानित्यव्यवस्था युज्यत एवेति चेत्, न। रसादिप्रतीतेरभिधाबोध्यत्वाभावात्।

अपि च "द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः" इत्यत्र कपालिन इति पदस्यानुगुण्यं न पिनाकिन इत्यत्र द्वाभ्यामपि पदाभ्यां शिवस्यैव वाच्यत्वाद्विनिगमकाभावः, प्रसज्येत। न च तत्र यौगिककार्यप्रतीतिर्विनिगमिकेति वाच्यम्। योगरूढिस्थले रूढेर्योगापहारकत्वात्। न च प्रकरणाद्यभाव एव रूढेर्योगापहारकत्वनियमोऽत्र प्रीतिपरीक्षणे वटुकृतशिवनिन्दायाः प्रकृतत्वादिति चेत्, न, वाच्यार्थस्य सर्वान् प्रतिपतॄन् प्रति नियतत्वाद् व्यङ्ग्यार्थस्य च प्रकरणवक्त्रादिसहकारेणानेकरूपत्वादनियतत्वाच्च। (का०प्र० पञ्चमोल्लासे) तदुक्तं दर्पणे–

**"बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम् ।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतोऽव्यङ्ग्यः"।**

(सा०द०, पञ्चमपरि०) इति।

यदप्युच्यते— (का०प्र०पञ्चमोल्लास उद्धृतम्) यत्परः शब्दः स शब्दार्थ इति न्यायाद् व्यङ्ग्यार्थो वाच्य एवेति तदप्यापातरमणीयम्, यतो हि मीमांसकैरस्य न्यायस्यार्थः स्वयमेव निरणायि यत्– उपात्तशब्दोपस्थापितेष्वर्थेषु यदंशे विधेयत्वं तदंशे वाक्यतात्पर्यम्, यत्र तात्पर्यं स शब्दार्थस्तदंश एव शब्दस्याज्ञातज्ञापकत्वरूपप्रामाण्यमिति। न तु यत्तात्पर्यकतया शब्दः प्रयुज्यते स शब्दार्थ इति। एवं सति तात्पर्यस्यानियतत्वात् शक्तेरप्यनियतत्वापत्तेः। न च विधेयत्वं प्रवर्तनारूपविधिविषयत्वम्, तच्च क्रियाया एव न द्रव्यादेरिति दध्ना जुहोतीत्यादौ दध्यंशेऽप्रामाण्यापत्तिरिति वाच्यम्, कारकक्रिययोः समभिव्याहारे कारकपदार्थाः प्रधानक्रियासम्पादकस्वक्रियासम्बद्धाः साध्या इव भवन्तीत्यर्थकाद् "भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते" इति न्यायाद् दध्ना जुहोतीत्यादौ प्रधानक्रियाहोमस्तदनुकूला दधिक्रिया पूर्वदेश-संयोगध्वंसहेतुविभाग-जनिकास्पन्दक्रियातत्सम्बन्धाद् दध्यादेरपि साध्यत्वेन विधेयत्वात्। नन्वेवमपि प्रधानाया हवनक्रियाया एव विधेयता स्यादिति चेत्, न, यथा तृणमिश्रितभस्मराशावग्निरदग्धमेव तृणं दहति न तु दग्धं भस्म, तथैव साध्यान्वितसिद्धेषु साध्यमेव विधीयते। अप्राप्ते शास्त्रमर्थवदिति न्यायाद् यावदप्राप्तं तावदेव शब्देन विधीयतेंऽशान्तरे तु केवलमनूद्यते। यथा ऋत्विक् प्रचरणे ज्योतिष्टोमविकृतश्येनयागप्रकरणस्थवाक्ये "लोहितोष्णीषा ऋत्विजः

प्रचरन्ति" इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम्, "सोष्णीषा विनीतवसना ऋत्विजः प्रचरन्ति" इति वाक्यादुष्णीषस्यापि प्राप्तत्वाद् लौहित्यमात्रं विधेयम्, एवं दध्ना जुहोतीत्यादौ अग्निहोत्रं जुहोतीत्युत्पत्तिवाक्याद् हवनस्य साधनद्रव्यत्वेनाक्षेपतो दध्नोऽपि सिद्धत्वेन करणत्वमात्रमेव विधेयम्। एवं सोमेन यजेतेत्यत्र सोमयागयोरुभयोर्विधिः। यदाग्नेयोऽष्टाकपाल इत्यत्र हव्यदेवता-यागानां विधेयत्वात्त्रिविधिः। लोकेऽपि रक्तं पटं वयेत्यत्र गुणद्रव्यक्रियाणामेकस्य द्वयोस्त्रयाणां वा सिद्धावेकविधिर्द्विविधिस्त्रिविधिर्वेति यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्य वृत्त्युपस्थापितेऽर्थे तात्पर्यं न प्रतीतिमात्रे। येन केनापि सम्बन्धेन प्रतीतेऽर्थे तात्पर्याङ्गीकारे पूर्वो धावतीत्यादौ पूर्वत्वस्य नियतापरसापेक्षत्वादर्थापत्या पश्चिमपदार्थोऽपि कदाचित्तात्पर्यविषयभूतः पूर्वपदवाच्यतां भजेतेति।

१. ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यस्वीकारे विषं भक्षय मा चास्य गृहे भुङ्क्था इत्यत्र भक्षय, भुङ्क्थाः इति क्रियाद्वयघटितस्य वाक्यद्वयस्यैतद्गृहे न भोक्तव्यमित्येकस्मिन्नर्थे तात्पर्यं न स्याद् विषं भक्षयेति वाक्यार्थत्वाभावादिति चेच्छृणु— मा चास्येत्यत्र चकारेण सुहृदुक्तस्य विषं भक्षयेति वाक्यस्य स्वार्थेऽविश्रान्तस्य साकाङ्क्षतया समनन्तरोच्चारितेन मा चास्य गृहे भुङ्क्था इत्यनेनैकवाक्यता सूच्यते। अन्यथा गुणानाञ्च परार्थत्वादसम्बद्धः समत्वात् स्यादिति न्यायेन यथा समत्वेनाप्रधानयोः परस्परमसम्बन्ध एवं प्रधानयोरपि समत्वेन परस्परमनन्वयादेकवाक्यता न स्यात्। विषभक्षणं च न सुहृदुपदेशयोग्यमिति विषं भक्षयेति वाक्यं स्वार्थे सबाधं सद्विरोधितारूपसम्बन्धेन विषभक्षणाधिकबलवदनिष्टानुबन्धित्वा-विशिष्टैतद्गृहभोजनमनिष्टहेतुरतः सर्वथा माऽस्य गृहे भुङ्क्था इति वाक्यार्थः सम्पद्यत इत्युच्चारितशब्दस्य वृत्त्युपस्थापितेऽर्थे एव तात्पर्यं नान्यत्रातो व्यङ्ग्यार्थबोधाय व्यञ्जनावृत्तेः स्वीकार आवश्यक इति बहुशः प्रपञ्चितं ध्वन्यालोकलोचनप्रकाशदर्पणादिषु। तत एव विशेषतोऽवगन्तव्यं जिज्ञासुभिरिति।

## अभिधान्तर्भावखण्डनम्

अभिधातो भिन्ना व्यञ्जना "गतोऽस्तमर्कः" इति वाक्यश्रवणानन्तरं सर्वे प्रतिपत्तारः समानमेव वाच्यार्थं सूर्यास्तरूपमवगच्छन्ति। व्यङ्ग्योऽर्थः पुनः वक्तृबोद्धव्यप्रकरणादिसहाय्येन भिन्नो भिन्नः प्रतिभासते। तथा हि— अभिसारिकाविषये अभिसरणमुपक्रम्यताम्, कर्मकरस्योक्तौ कर्मकरणान्निवर्तामहे, धार्मिकान् प्रति सान्ध्यो विधिरुपक्रम्यताम्, पथिकान्

प्रति दूरं मा गाः, गोचारकान् प्रति गावो गृहं प्रवेश्यन्ताम्, आतपाकुलितं प्रति सन्तापोऽधुना नास्ति, वणिजं प्रति विक्रेयवस्तूनि संह्रियन्ताम्, विरहिणीं प्रति अधुनापि नागतः प्रियतम इत्यनवधिः प्रतीयते। इति संख्याभेदात्, "निःशेषच्युतचन्दन"मित्यादौ वाच्यो विधिरूपः व्यङ्ग्यो निषेधरूपः इति स्वरूपभेदात्।

वाच्योऽर्थः पूर्वं प्रतीयते, व्यङ्ग्यः पश्चादिति कालभेदात्। वाच्यस्याश्रयो वाचकशब्दः, व्यङ्ग्यस्य च पदपदैकदेशपदार्थवर्णरचनाश्चाश्रयाः, इति आश्रयभेदात्। वाच्योऽर्थो व्याकरणकोशादिशब्दानुशासनज्ञानेन तज्जन्यबोधकताज्ञानमात्रेण चावगम्यते, व्यङ्ग्योऽर्थः वक्तृबोद्धव्यादिप्रकरणादिसहाय्येन प्रतिभानैर्मल्येन शब्दानुशासनज्ञानेन चावगम्यत इति निमित्तभेदात्। वाच्यार्थज्ञातुः बोद्धा इति व्यपदेशः, व्यङ्ग्यार्थज्ञातुः सहृदयविदग्धादिव्यपदेश इति व्यपदेशभेदात्। वाच्यार्थस्य प्रतीतिमात्रं भवति, व्यङ्ग्यार्थेन चमत्कारोऽपि जायत इति कार्यस्य भेदात्। "कस्य वा न भवति रोषो" इत्यादौ वाच्यार्थस्य नायिका विषयः, इयं भ्रमरेण दष्टाधरा न तूपपतिनेति त्वया रोषो न कर्तव्य इति व्यङ्ग्यस्य नायको विषयः इति विषयभेदात्।

एवं स्वरूप–संख्या–काल–कार्याश्रय–निमित्त–व्यवहार–विषयादिभेद-सत्त्वेऽपि यदि वाच्यव्यङ्ग्ययोरैक्यम्, तदा नीलपीतादौ गुणे गुणिनि च क्वचिदपि भेदो न स्यात्। तस्माद् वाच्यव्यङ्ग्ययोर्भेदोऽस्त्येव। तदुक्तम्–

**बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम् ।**
**आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतोऽव्यङ्ग्यः।।**

(सा०द० ५/२)

## लक्षणान्तर्भावखण्डनम्

एकस्यैव रामशब्दस्य लक्ष्यार्थोऽपि "रामोऽस्मि सर्वं सहे" इत्यत्र दुःखसहिष्णू रामः "रामेण प्रियजीवितेन" इत्यत्र निष्करुणो रामः "रामोऽसौ भुवनेषु" इत्यादौ खरदूषणादिनिहन्ता राम इत्यादिरूपेण तत्र तत्र भिद्यते, प्रकरणादिकमप्यपेक्षते, अर्थान्तरसङ्क्रमितेत्यादिविशेषव्यपदशमपि भजते, तत्प्रतीतिश्च शब्दार्थोभयाधीन इति लक्ष्यार्थात् न भिन्नो व्यङ्ग्यः। अतो लक्षणयैव व्यङ्ग्यार्थावगतिरिति न शङ्क्यम्। लक्ष्यार्थस्तत्र तत्र भिन्नोऽपि नानार्थशब्दस्य वाच्य इव नियत एव, एकस्माद् वाक्यादेक एव लक्ष्यार्थः प्रतीयते। मुख्यार्थेनानियितसम्बन्धो न लक्षयितुं शक्यते।

व्यङ्ग्यस्तु "श्वश्रूरत्र निमज्जति" इत्यादौ नियतसम्बन्धः, "शय्यायां मा निमङ्क्षसीति वाच्यस्य शय्यायां निमङ्क्षसीति व्यङ्ग्येन सह विरोधसम्बन्धः नियत एव। "कस्य वा न भवति रोषः" इत्यत्र अविनीतत्वरूपवाच्यस्य "अस्या अधर उपपतिना न दष्टः" इति व्यङ्ग्येन सह न कोऽपि प्रसिद्धः सम्बन्धः। इत्यनियतसम्बन्धः।

**"विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेः दक्षिणनयनं रसाकुला झटिति स्थगयति"।।**

इत्यत्र हरेर्दक्षिणनेत्रं सूर्यः, तस्य स्थगनेन सूर्यास्तसमयः व्यज्यते, तेन पद्मस्य सङ्कोचः, ततो ब्रह्मणः स्थगनम्, ततो निधुवनविलसितमिति व्यज्यते। इति सम्बन्धपरम्परया प्रतीतिपरम्परा जायत इति सम्बन्धसम्बन्धः। इति भेदात्।

अपि च लक्षणायां मुख्यार्थबाधादेरपेक्षा न तु व्यञ्जनायाम्। व्यञ्जना लक्षणानुसारिणी क्वचित्, क्वचिदभिधानुसारिणी। अवाचकशब्देऽपि चेष्टादावशब्देऽपीति न लक्षणया व्यञ्जना गतार्था।

## अनुमानखण्डनम्

महिमभट्टोऽनुमाने ध्वनिमन्तर्भावयन्नाह— वाच्येनासम्बद्धस्यार्थस्य प्रतीतिर्भवितुं नार्हति, असम्बद्धार्थप्रतीतौ यस्य कस्याप्यर्थस्य प्रतीतिः प्रसज्येत। अतोऽनियतसम्बन्धे व्यङ्ग्यार्थप्रतीतिरवश्यं न जायते। नियतसम्बन्धश्च व्याप्तिरतः, पक्षसत्त्वसपक्षसत्त्व-विपक्षव्यावृत्तत्त्व-त्रिरूपाल्लिङ्गाल्लिङ्गिनो ज्ञानमनुमानं भवति। इत्थमनुमाप्यानुमापकभावरूप एवायं व्यङ्ग्यव्यञ्जकभावः।

तथा हि— "भ्रम धार्मिक विश्वस्तः" इत्यादौ शुनो मरणेन विहितं गृहे भ्रमणं गोदावरीतटेऽभ्रमणमनुमापयति। यद् यद् भीरुभ्रमणं तत्तद्भयकारणं निवृत्युपलब्धिपूर्वकमिति भीरुभ्रमणस्य व्यापिका भयकारणनिवृत्तिः, तद्विरुद्धस्य भयकारणस्य सिंहस्योपलब्धेः सत्त्वात्, व्यापकविरुद्धोपलब्धिः। अनुमानाकारश्च गोदावरीतटं भीरुभ्रमणायोग्यं, सिंहवत्त्वाद् इत्यनुमानेनैवावगतेः किं व्यञ्जनयेति तन्मतम्। परं भीरुरपि गुरोः प्रभोः निदेशेन कान्तानुरागेण निधिलाभनिश्चयेन वा सत्यपि भयकारणे भ्रमतीत्युत्कटभ्रमकारणरहितत्वमत्रोपाधिरित्यनैकान्तिको हेतुः। शुनःस्पर्शस्य निषिद्धत्वात् शुनोः विभ्यदपि धार्मिको वीरत्वेन सिंहान्न विभेतीति सिंहवत्त्वादिति हेतुरपि व्यभिचारी।

धार्मिकस्य सिंहमृगयौत्सुक्ये निश्चिते सति यदि गोदावरीतीरमेतद् भ्रमणायोग्यं सिंहवत्त्वादिति प्रयुज्यते तदा साध्याभावव्यापृत्ततया विरुद्धो हेतुः।

यदि गोदावरीतीरभ्रमणं भयसाधनं, भयकारणवद्देशाधिकरणकभ्रमणत्वादिति साध्यते तदा तु नोक्तदोषः। तथापि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद् वा न निश्चितः, किन्तु वचनात् निश्चितः। वक्त्री च पुंश्चलीति तद्वचनस्याप्रामाण्यशङ्कयाऽर्थे प्रामाण्याभावात् सन्दिग्धासिद्धो हेतुः। एवमनैकान्तिकविरुद्धासिद्धरूपाद्धेतोः कथं साध्यसिद्धिः।

अपि च यदुक्तं भवता

**''अर्थान्तराभिव्यक्तौ या सामग्री सन्निबन्धनम्।**
**सैवानुमितिपक्षे नो गमकत्वेन सम्मता''।।**

इति तदपि न युक्तम्। ''निःशेषच्युतचन्दनमित्यादौ यानि चन्दनच्यवनादीनि उपभोगचिह्नतयोक्तानि तानि स्नानादिकारणान्तरादपि भवन्ति। अतो व्याप्त्यभावादनैकान्तिकानि न दूतीसम्भोगरूपमर्थं बोधयन्ति।

व्यञ्जनावादी च निःशेषच्युतचन्दनादिविशेषणवाक्यार्थानां साहाय्येन अधमपदस्य व्यञ्जकत्वमङ्गीकरोति, परमधमत्वं न प्रमाणेन निश्चितम्। कोपाकुलितकामिनीवचनस्याप्रमाणत्वात्। व्यञ्जना तु व्याप्त्यादिकमनपेक्ष्यैव प्रवर्तते। अतो व्यङ्ग्योऽर्थो ''रिरंसया तदन्तिकगमनरूपः'' प्रतीयत इति। नानुमितिः व्यङ्ग्यार्थबोधने क्षमा। अतो व्यञ्जनावृत्तिरवश्यमभ्युपेया। तदुक्तं विश्वनाथेन—

**नानुमानं रसादीनां व्यङ्ग्यानां बोधने क्षमम्।**
**आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः।।**

(सा०द० ५/४) इति।

एवमनुमानान्तर्भावनिराकरणेनार्थापत्तिप्रमाणेन गतार्थता सूचनबुद्ध्या गतार्थता वा अस्याः स्वयं निराकृता भवति। यतो हि— अर्थापत्तिसूचनबुद्ध्योरनुमानरूपत्वादिति।

एवं व्यङ्ग्यार्थो मानसबोधविषयः, व्यञ्जनाङ्गीकारो विफल इत्यपि न, मानसोपनीतानां लौकिकवृत्तान्तवित्तीनां चमत्कारजनकत्वाभावदर्शनात्, काव्यश्रवणात् नाट्यदर्शनात् व्यञ्जनाजन्यत्वाच्चमत्काराधायकत्वाच्च व्यञ्जनाङ्गीकार्या एव।

उपलभ्यमाने रसगङ्गाधरे अभिधालक्षणानिरूपणवद् यद्यपि व्यञ्जनानिरूपणं नोपलभ्यते परं व्यञ्जनां वृत्तिमङ्गीकरोत्येव पण्डितराजः। शाब्द्या व्यञ्जनाया लक्षणं तूपलभ्यत एव सर्वतो नवीनं यथा—

**''योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।**
**धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा।।** इति।

अत्र यद् वक्तव्यं तद् शब्दशक्त्युद्भवध्वनिप्रभेदे निरूपयिष्यते। परं रसनिरूपणावसरे पण्डितराजेन "परे तु" रीत्या यद्रसोन्यरूपि तत्तत्प्रतिभोद्भूतं तदुपज्ञं चेति न तिरोहितं मतिमताम्। तत्र-

**"व्यञ्जनाव्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि"।**

इत्युक्तम्, तेन च व्यज्जनावृत्तिरनङ्गीकारः सूचित इति नाशङ्कनीयः पण्डितराजोद्भाविर्तेऽपि 'नव्यास्तु" "परे तु" इति मतद्वये पण्डितराजाभिमतिर्नास्ति, अन्यथा तत्र तत्र व्यङ्ग्यार्थोपपादनेन ग्रन्थस्याकुलीभाव प्रसङ्गात् रसस्य चानिर्वचनीयता भ्रान्तिरूपता च स्यात्। पण्डितराजाभिमतं तु प्रथममतमेव तृतीयचतुर्थयोरुपपादनं दर्शनान्तररीत्या स्वप्रतिभाप्रकर्षप्रदर्शनायैवेति।

## विमर्शः

इयं व्यञ्जना स्वरूपसती उपयोगिनी भवति, व्यङ्ग्येषु सङ्केताभावात्, नाभिधावत् ज्ञाता सती उपयुक्ता भवति। एवं सति सर्वेषां सर्वत्र व्यङ्ग्यार्थबोधः प्रसज्येत इति न शङ्क्यम्। वक्तृबोद्धव्यादिवैशिष्ट्यात् प्रतिभाजुषामेव व्यङ्ग्यार्थबोधो नान्येषाम्।

## वृत्तिषु परस्परं भेदाः

अभिधा ज्ञाता सती उपयुक्ता भवति, लक्षणा व्यञ्जने स्वरूपसत्यावुपयोगिन्यौ भवतः। अभिधा शब्दवृत्तिः, लक्षणा साक्षादर्थवृत्तिः परं लक्ष्यार्थबोधेऽपि शब्द एव कारणम्। अत आरोपिता शब्दवृत्तिः। व्यञ्जना च वाक्य–पद–पदांश-वर्ण–रचना–प्रबन्धार्थ–चेष्टादीनां वृत्तिः। व्यञ्जनयाऽर्थबोधे क्वचित् (नानार्थस्थले) शब्दस्य प्राधान्यम्, अर्थः सहकारी। क्वचिदर्थस्य प्राधान्यं शब्दः सहकारी। अभिधयाऽर्थबोधे सङ्केतग्रहः कारणम्, लक्षणयाऽर्थबोधे मुख्यार्थबाधादित्रयं कारणम्, व्यञ्जनयाऽर्थबोधे वक्तृबोद्धव्यादिवैशिष्ट्यसहकृतप्रतिभाकारणम्, क्वचित् प्रतिभैव। लक्षणा मुख्यार्थबाधसापेक्षाऽतोऽभिधा पुच्छभूता। व्यञ्जना क्वचिदभिधानुगामिनीति अभिधा मूला क्वचिद् लक्षणानुगामिनीति लक्षणामूला, क्वचिदवाचकवर्णादावुभयमपि नानुसरति। परमियमर्थसामर्थ्यादाक्षिप्ता भवति, लक्षणाऽपि। लक्षणा नियतसम्बन्धा, व्यञ्जना क्वचित् नियतसम्बन्धा, क्वचिदनियतसम्बन्धा, क्वचित् सम्बन्धसम्बन्धेति परस्परं वृत्तिषु वैलक्षण्यं ज्ञेयमिति।



# अथ तृतीयोऽध्यायः

# रसस्वरूपात्मकः

## अथ रसस्वरूपम्

मम्मटाचार्यः सद्यः परिनिर्वृत्तिधामत्वात् परमरमणीयं रसं निरूपयति—

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।।**

(का०प्र० ४/४२)

एवं हि दृश्यते लोके नवयौवनोद्दलितचित्तवृत्तीनां यूनां कामिनीनां च मिथो मनोहररूपावलोकनेन सौन्दर्यादिगुणश्रवणेन वा प्रीतिर्जायते। ततस्तल्लावण्यादिभिश्चन्द्रिकोपवनधीरसमीरादिभिश्चोद्दीपिता सा प्रीतिरभिलाष-स्वरूपेण परिणमते, सैव प्रीतिः रतिः। एवं जातायां रतौ प्रियसमागमोपायमाचरतोः प्रिययोश्चिन्ताग्लानि-शङ्का-विषादादयो जायन्ते। ततो मिथः प्रीतिव्यञ्जिकाश्चेष्टाः प्रादुर्भवन्ति। ततः कदाचित् काकतालीयन्यायेन स्वतः दूतीसम्प्रेषणादिना वा समागमः सम्पद्यते। तत उत्तरोत्तरं सा रतिः प्रवणायते। चिन्तादयोऽप्यप-गच्छन्ति। सैवात्युत्कटतां गता द्रवीभूते चित्ते प्रतिबिम्बते। यदुक्तम्–

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।।** (गीता २/६७)।

चित्ते सैव वासनारूपेण स्थिता जन्मान्तरजाऽपि भवति। यथा द्रवीभूतायां लाक्षायां निक्षिप्तो रागः पुनः पृथक् कर्तुं न पार्यते तथैव वासनाऽप्यपहर्तुमशक्या चिरं चित्तेऽवतिष्ठते। अत इयं जन्मान्तरजाऽपि। कदाचिद् हृद्यरूपलावण्यसम्पद्भिरुद्बुद्ध्यते।

एषैव स्थितिः रसान्तरस्थायिस्वपि ज्ञेयम्। एवं लोके तस्या रतेर्यानि जनककारणानि ललनादीनि, यानि चोद्दीपनकारणानि चन्द्रोद्यानादीनि यानि च तत्कार्याणि कटाक्षभुजाक्षेपस्तम्भरोमाञ्चादीनि यानि च तत्परिपोषहेतुभूतानि सहकारिकारणानि चिन्ताग्लानिहर्षादीनि तानि चेत् नाट्ये (दृश्यकाव्ये) काव्ये

च निबध्यन्ते तदा कारणानि विभावा कथ्यन्ते, रत्यादयो विशेषेणभाव्यन्ते अमीभि-रिति व्युत्पत्त्या। कार्याणि अनुभावाः कथ्यन्ते, रत्यादीननुभावयन्ति अनुमापयन्तीति विवरणात्। सहकारिकारणानि व्यभिचारिणः रसज्ञैः कथ्यन्ते, विशेषेणाभिमुख्येन रत्यादीन् चारयन्ति, विशेषादाभिमुख्येन चरन्तीति वा व्युत्पत्तेः। तदुक्तम्—

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ।।** (प्रदीपे)।

एतैर्विभावादिभिर्व्यक्तः व्यञ्जनया प्रतिपादितः, विशेषणाक्तः पानकरसन्यायेन विभावादिमिश्रणेनास्वादनीयतां प्राप्तो वा (अतः विभावादिसमूहालम्बनात्मको रसः) अथवा व्यक्तः, व्यक्तिविशिष्टः व्यक्तिश्च चर्वणा। इत्थं चर्वणाविशिष्टः स्थायीरसः। भग्नावरणाचिद् वा, तस्याः विषयः यः स्थायी तैर्विभावादिभिः सह रसः। तैरित्यत्र सहयोगे तृतीया। एवञ्च समूहालम्बनात्मको रसः। समूहालम्बने घटपटयोरिव पृथक् पृथक् प्रतीतिर्न शङ्क्या पानकरसन्यायेन चर्वणात्। अत्र रत्यादिग्रहणेनैव स्थायित्वे सिद्धे पुनः स्थायीत्युक्तिः रत्यादीनामपि रसान्तरे व्यभिचारित्वोपपादनायेति।

वस्तुतः मम्मटाचार्यः सूत्ररूपेण रसस्वरूपमुक्तवान्। विविधा आचार्याः स्वप्रतिभया विविधव्याख्यां कुर्वन्ति मम्मटाचार्यः स्वोक्तौ भरतसूत्रं प्रमाणतयोपन्यस्यति— "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति।

अस्य सूत्रस्य व्याख्यां मीमांसकाः, नैयायिकाः, सांख्याः, आलङ्कारिकाश्च स्वस्वसम्प्रदायानुसारं कृतवन्तः। तत्र "संयोगात्" "निष्पत्तिः" इति पदद्वयमेव विविधव्याख्यायां मूलम्।

### तत्र भट्टलोल्लटमते

विभावानुभावव्यभिचारिभिरित्यत्र सहयोगे तृतीया। संयोगाद् इत्यस्य सम्बन्धसामान्योऽर्थः, निष्पत्तिरित्यस्योत्पत्तिरर्थः। विभावश्च द्विविधः— आलम्बनरूप उद्दीपनरूपश्च। आलम्बनविभावाः ललनादयः उद्दीपनविभावाश्चन्द्रिकादयः। एवं रत्यादेः स्थायिनः विभावेन ललनादिनोद्यानादिना च सह संयोगात् जन्यजनकभावसम्बन्धात्, रत्यादिस्थायिभावो जनितः, यद्यप्युद्दीपनविभावा उद्दीपका एव न जनकास्तथापि विशेषाकारपरिणतिजनकत्वात् तेषामपि जनकत्वं ज्ञेयम् (अनुभावेन कटाक्षभुजाक्षेपादिना सह संयोगाद् गम्यगमकभावरूपसम्बन्धात्, रत्यादिस्थायिभावः प्रतीतिविषयीकृतः, व्यभिचारिभिश्च निर्वेदग्लानिहर्षादिभिः सह संयोगात् पोष्यपोषकभावरूपसम्बन्धात् रत्यादिस्थायिभावः पुष्टीकृतः रसः।

स च सीतादिविषयकः रामादावनुकार्ये एव साक्षात्सम्बन्धेन विभावादिप्रतिपादककाव्यशब्दाऽभिधया वा प्रतीयते। नायकतुल्यवेषभूषाऽभिनयादिकर्तरि नटे च तत्तुल्यरूपतानुसन्धानवशादसन्नपि आरोप्यमाणः सहृदयानां साश्चर्यानुभवश्चमत्कारहेतुरिति। मतमिदं मीमांसकमतम्, उत्पत्तिवादश्च कथ्यते।

## निष्कर्षः

यथाऽसत्यपि सर्पे सर्पतयाऽवलोकनाद् दाम्नो भीतिरुदेति, कम्पादिश्च जायते तथा सीतानुरागरूपा रतिर्नटेऽविद्यमानाऽपि नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सामाजिकानां चमत्कुर्वाणा रसपदवीमधिरोहतीति।

## मतेऽस्मिन् विप्रतिपत्तयः

सामाजिकेषु रसनिष्पत्तेरभावात् सामाजिकानां चमत्काराभावादप्रवृत्तिः। न च वस्तुतो नायकगतस्यारोपितनटगतस्य स्थायिनो ज्ञानमेव चमत्कारहेतुरिति शङ्क्यम्। शाब्दज्ञानेऽपि लौकिकशृङ्गारदर्शनेनापि चमत्कारप्रसङ्गात्। किं चैवं रसस्य भ्रान्तित्वापत्तिः स्यादिति।

## श्रीशङ्कुकमते

एतन्मते सूत्रस्य रत्यादेः विभावादिभिः सह संयोगात् अनुमाप्यानुमापकभावरूपसम्बन्धाद् रसस्य रत्यादेः निष्पत्तिरनुमितिरित्यर्थः। लोके हि चतुर्धा प्रतीतयो जायन्ते, सम्यक्–मिथ्या–संशय-सादृश्यप्रतीतिभेदात्। तथा हि ''राम एवायम्'' इति रामत्वायोगव्यवच्छेदिका प्रतीतिः, ''अयमेव रामः'' इत्यन्ययोगव्यवच्छेदिका प्रतीतिः सम्यक् प्रतीतिः, ''न रामोऽयम्'' इत्युत्तरकालिकबाधे सति ''रामोऽयमिति या प्रतीतिः सा मिथ्या प्रतीतिः,'' ''रामः स्याद्वा न वा'' इति संशयप्रतीतिः ''रामसदृशोऽयम्'' इति सादृश्यप्रतीतिरिति लौकिकचतसृभ्यः प्रतीतिभ्यो भिन्नया चित्रतुरगादिन्यायेन रामाद्यभिनयकर्तरि नटे ''रामोऽयम्'' इति प्रतीतिर्जायते तया प्रतीत्या विषयीकृतो नटः (पक्षः)—

**''सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।**
**मनोरथश्रीर्भनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता''।।**

इति संयोगशृङ्गारस्य–

**''दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च''।**
**''अविरलविलोल जलदः कालः समुपागतश्चायम्''।।**

इत्यादिविप्रलम्भशृङ्गारस्य च तत्काव्यार्थस्य साक्षात्करणरूपानुसन्धानसहकृतशिक्षाभ्यासाभ्यां सम्पादिताभिनयेन कृत्रिमविभावानुभावसहकारिण: प्रकाशयति। परं सामाजिकास्तान् वास्तविकान् मन्यन्ते न कृत्रिमतया, एवं नटेन प्रकाशितै: विभावादिभि: संयोगाद् अनुमाप्यानुमापकभावरूपसम्बन्धादनुमीयमानो रत्यादिभाव: नटेऽविद्यमानोऽपि स्थायित्वेन नटे सहृदयै: सम्भाव्यमान: स्थायिनामास्वादमयत्वादस्यानुमान-स्यान्यानुमानविलक्षणत्वात् सामाजिकानां चमत्कारिप्रतीतिरूपचर्वणया आस्वाद्यमानो रस:। अनुमानाकारश्च— रामोऽयं सीताविषयकरतिमान् सीताविषयककटाक्षादिमत्त्वाद् यन्नैवं तन्नैवं यथा विरक्त इति।

**निष्कर्ष:**

सम्यग्'मिथ्या-संशय-सादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगन्यायेन 'रामोऽयम्' इति प्रतीत्या ग्राह्येन नटेनाभिनयद्वारा प्रकाशितै: कृत्रिमतया ज्ञातै: विभावादिभि: कुज्झटिकाकुलिते प्रदेशेऽविद्यमानस्यापि धूमस्याभिमानाद् यथा धूमनियतस्य वह्नेरनुमानं तद्वत् तस्मिन्नविद्यमानोऽपि रत्यादिर्भाव: सामाजिकैरनुमीयमान: स्ववासनयास्वाद्यमानो रस इति। मतमिदं नैयायिकमतम्, अनुमितिवादश्चेति।

**अत्र विप्रतिपत्तय:**

प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नानुमित्यात्मकमित्यनुमीयमाने रसे चमत्कारानापत्ते:, रसं साक्षात्करोमीति अनुव्यवसायानापत्तिश्च।

**भट्टनायकमतम्**

मतेऽस्मिन् सूत्रार्थ: रत्यादे: स्थायिन:, विभावानुभावव्यभिचारिभि: संयोगात्, भोज्यभोजकभावसम्बन्धात्, रसस्य निष्पत्ति: = भुक्तिरिति। काव्ये अध्येता, श्रोता, नायक: नाट्येऽपि अनुकार्य: नायक:, अनुकर्ता नट:, द्रष्टा सामाजिकश्चेति त्रय: सन्ति (सामाजिकातिरिक्तौ तटस्थौ)। तत्र नायकगता, नटगता वा रसप्रतीति: स्यात्, तदा सामाजिकानामास्वादो न स्यात्। सामाजिकगता रसप्रतीति: भवितुं नार्हति, यतो हि स्थायी एव रस:। स्थायिन उद्बोधका: ये शकुन्तलादयो विभावा: ते सामाजिक संबन्धिनो न सन्ति यद्यपि सामाजिकानां विभावा: तत्कान्ता: सन्ति। शकुन्तलापि कान्ता। अतो विभावतावच्छेदकं (विभाव: कान्ता विभावता कान्तायां तदवच्छेदकं कान्तात्वं) कान्तात्वं शकुन्तलादावप्यस्ति परमेतत् कान्तात्वं स्वस्रादिष्वप्यस्ति, ता अपि रत्युद्बोधका भविष्यन्तीति महदनर्थम्।

अतः अगम्यात्वप्रकारकज्ञानविरहविशिष्टं कान्तात्वं विभावतावच्छेदकं स्वीकर्तव्यम्। (यद्यपि अगम्यात्वप्रकारकं ज्ञानमात्मनि वर्ततेऽतो ज्ञानविरहोऽपि आत्मन्येव ज्ञानविरहविशिष्टं कान्तात्वं कथम्? इति विप्रतिपत्तिस्तथापि ''इयमगम्या'' इत्याकारके ज्ञाने अगम्यात्वं प्रकारः, इदमर्थो विशेष्यम्, अतो ज्ञानं समवायेनात्मनि प्रकारतासम्बन्धेन अगम्यात्वे, विशेष्यातत्सम्बन्धेन इदमर्थे नायिकायाम्। अतो विशेष्यतासम्बन्धेनागम्यात्वप्रकारज्ञानविरहविशिष्टं कान्तात्वं विभावताऽवच्छेदकं ज्ञेयम्। यदि भ्रमात् स्वकान्तायामपि ''इयमगम्या'' इत्याकारकं ज्ञानं स्यात् तदा सापि विभावो न स्यात्। अतोऽप्रमाण्यनिश्चयानालिङ्गितस्या-गम्यात्वप्रकारकज्ञानस्य विरहो विवक्षितः) तच्च शकुन्तलादौ न सम्भवति तत्र पूज्यत्वबुद्धेः सत्त्वात्। अतः पूज्यत्वबुद्धेः प्रतिबन्धकं किमपि निरूपणीयम्। यद्यपि दुष्यन्ताद्यभिन्नोऽहमिति ज्ञानेन शकुन्तलादौ अगम्यात्वप्रकारकज्ञानस्य विरहः स्यात्। परं दुष्यन्तो धराधौरेयः, धीरः अहं कापुरुष आधुनिक इति वैधर्म्यादभेदबुद्धिरपि दुर्लभा।

किञ्च, इयं रसप्रतीतिः कीदृशी? काव्यशब्दादेव जायतेऽतः शाब्दीति वक्तुं न शक्यते। व्यावहारिकशब्दजन्यलौकिकनायकनायिकावृत्तान्तप्रतीतिर्यथा चमत्कारशून्या भवति तथैवास्यापि चमत्कारशून्यत्वापत्तेः। मानसी प्रतीतिरपि नास्ति, गुड इत्युक्तेर्माधुर्यस्य बोधेऽपि तत्र यथा न चमत्कारस्तथेहापि चमत्काराभावः प्रसज्येत। पूर्वानुभूतस्यैव स्मृतिर्भवति। अस्यानुभवजन्यसंस्कारजन्यत्वाभावात्, स्मृतिरपि नेयम्। तस्मात्काव्ये त्रयो व्यापाराः सम्भवन्ति—

**''अभिधा भावना चैव तद्भोगीकृतिरेव च''।**

तत्राभिधया विभावादयो बोध्यन्ते। ततः भावकत्वव्यापारेण अगम्यात्वादिरसविरोधिज्ञानप्रतिबन्धद्वारा, कान्तात्वादिरसानुकूलतया तेऽवस्थाप्यन्ते। एवं दुष्यन्तशकुन्तलादेशकालवयोऽवस्थादीन् साधारणीकृत्य विरते सति भावकत्वव्यापारे, भोजकत्वव्यापारेण रजस्तमसी निगीर्य प्रादुर्भूतसत्त्वजन्येन वेद्यान्तरस्पर्शशून्यस्वात्माऽऽनन्दस्वरूपसाक्षात्कारेण विषयीकृतः भावनोपनीतः साधारणात्मा रत्यादिः स्थायी भुज्यत इति। तत्र भुज्यमानो रत्यादिः रत्यादिभोगो वा रसः। अयं भोगः विभावादिविषयविशिष्टोऽतो ब्रह्मास्वादसविधवर्तीत्युच्यते।

**निष्कर्षः**

काव्ये नाट्ये चाभिधाभिन्नेन भावकत्वव्यापारेण साधारणीकृतो भोजकत्वव्यापारेण सहृदयैर्भुज्यमानो रत्यादिकः स्थायी रस इति।

**विप्रतिपत्तयः**

परमस्मिन् भावकत्वभोजकत्वेति व्यापारद्वयकल्पनागौरवम्। यद्यपि भोजकत्वं व्यञ्जनैव तथापि भावकत्वस्य स्वीकारे गौरवम्। यद्यपि फलमुखगौरवं न दोषाय, तथापि साधारणीकरणस्य व्यापारान्तरस्वीकारमन्तरापि सम्भवात्। भावकत्वं भावना। सा च सहृयानां व्यापारो न काव्यस्येति।

## अभिनवगुप्तपादाचार्यमतम्

एतन्मते स्थायिनो विभावादिभिः संयोगाद् व्यङ्ग्यव्यञ्जकभावसम्बन्धाद् रसस्य निष्पत्तिरभिव्यक्तिरिति सूत्रार्थः।

लोके नायकयोर्मिथश्चेष्टां समीक्ष्य तयो रत्यादिकस्यानुमाने लब्धपाटवाः सहृदया यदा समुचितललितसन्निवेशचारु काव्यं पठन्ति नाट्यं वा पश्यन्ति तदा काव्येन प्रतिपादितान् नटेनाभिनयद्वारा प्रकाशितान् वा कारणत्वादिकं परिहृत्यालौकिकविभावनादिव्यापारवत्त्वाद् विभावादिव्यपदेशभाजः शकुन्तलादीन् विभावान् चन्द्रोद्यानादीनुद्दीपनविभावान् अश्रुपातादीननुभावान् चिन्तादीन् व्यभिचारिणः निजसहृदयतासहकारेण भावनाविशेषमहिम्ना ते शकुन्तलात्वदुष्यन्तरमणीत्वादिविशेषधर्मरहितान् साधारणीकृतानवगच्छन्ति। ततस्ते सम्भूय (अन्यशास्त्रेष्ववर्णितत्वात्) अलौकिकं व्यञ्जनाव्यापारं प्रादुर्भावयन्ति। ततो व्यञ्जनया सहृदयानामात्मन आनन्दांशावरणभूतमज्ञानमपसार्यते। ततः सहृदयेषु परिमितप्रमातृता (अहमस्मि इमे विभावादयो ममैव नान्यस्येत्यादिरूपा) लुप्यते। ततो वेद्यान्तरस्पर्शशून्याऽ-परिमितप्रमातृतामाप्तानां सहृदयानां चित्तेषु प्रागविनिविष्टवासनारूपेण स्थितो रत्यादिस्थायीभावो विभावादिसंवलितः स्वप्रकाशस्वरूपेण निजस्वरूपानन्देन विषयीक्रियमाणो ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः। अत्र "आत्मा ज्ञातव्यः" इत्यादौ ज्ञानरूपस्यात्मनो ज्ञानस्य विषयीकरणमिव ज्ञानरूपस्य स्थायिनः स्वप्रकाशेन ज्ञानेन विषयीकरणमविरुद्धम्। समूहालम्बनात्मकोऽप्ययं पानकरसन्यायेन चर्व्यमाणोऽखण्डः। चर्वणाया उत्पादविनाशाभ्यां रसे उत्पादविनाशावुपचरितौ। इमे विभावादय स्वप्ने तुरगादय इव रङ्गरजतादय इव साक्षिभास्याः सन्ति। वस्तुतो विभावादयो वासनारूपा एवेति।

मतमिदमालङ्कारिकमततया व्यवह्रियते, अभिव्यक्तिवादश्चेदमेव।

## निष्कर्षः

सामाजिकेषु वासनारूपेण सूक्ष्मतया स्थितः स्थायी काव्यशब्देनाभिनयेन वोपस्थापितेषु विभावादिषु भावनया साधारणतया प्रतीतेषु तैः प्रादुर्भावितेन व्यञ्जनाव्यापारेणापसारितेऽज्ञानावरणे निजस्वरूपानन्देन विषयीक्रियमाणः पानकरसन्यायेन विभावादिसंवलितोऽलौकिचमत्कारकारी रसः।

## पण्डितराजमतम्

पण्डितराजेनैतन्मतचतुष्टयं स्वविलक्षणप्रतिभयोपपादितं परम्– "इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणाचिद्विशिष्टो रत्यादिः स्थायीभावे रस इति स्थितम्" वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः" इत्युक्तम्।

अयं भावः— "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतेश्चिदेव रस इति प्रतीयते न तु चिद्विशिष्टः स्थायीति परं मम्मटभट्टेन तदेवोक्तम्।

## विमर्शः

अत्र श्रुतिरीत्या– अद्वैतदर्शनरीत्या च ब्रह्मातिरिक्तं सर्वं मिथ्या जडोऽतो जडस्यानन्दात्मकताऽसम्भवात्, परमानन्दरूपे रसे रत्यादीनां विशेष्यता नोपपद्यते। श्रुत्या ब्रह्मैव रस इति प्रतीयतेऽतः पण्डितराजोक्तं युक्तम्। परम्, अभिनवगुप्तमम्मटभट्टादयः काश्मीरिकाः शैवागमानुयायिनस्तत्र चितिरूपा शक्तिरेव रतिः सा च सुखस्वरूपेति परमानन्दतोपपद्यत इति दर्शनभेदादुभयमतं युक्तम्।

## पण्डितराजस्यात्र वैशिष्ट्यम्

"पण्डितराजः "नव्यास्तु" "परे तु" इति रीत्या नवीनं मतद्वयमुद्भावितवान्। तत्र नव्यास्तु काव्ये कविना नाट्ये नटेन विभावादयः प्रकाश्यन्ते ततो व्यञ्जनाया दुष्यन्तादौ शकुन्तलादीनां रतौ ज्ञातायां भावनाविशेषरूपदोषमहिम्ना कल्पितदुष्यन्तत्वेन सहृदयानामात्माऽवच्छादितो भवति, ततोऽस्मिन् दुष्यन्तत्वाच्छादिते आत्मनि समुत्पद्यमानः शकुन्तलादिविषयकरत्यादिरेव रसः। स च स्थायी साक्षिभास्यः अनिर्वचनीयश्च यथा अज्ञानावच्छिन्ने शुक्तिशकले प्रतिभासमानो रजतखण्डः साक्षिभास्यः अनिर्वचनीयश्चोच्यते तद्वदिति आहुः।

परे तु — भावनाविशेषरूपदोषमहिम्ना सहृदयानां स्वात्मनि काव्यार्थभावनाजन्यः "दुष्यन्तोऽहं शकुन्तलाविषयकरतिमान्" इत्याकारकः स्वात्मविशेष्यकः दुष्यन्ताद्यभेदविषयकशकुन्तलादिविषयकरत्यादिमदभेद-विलक्षणविषयताशाली बोध एव रसः।

पक्षेऽस्मिन् व्यञ्जनाव्यापारस्यानिर्वचनीयख्यातेश्चाङ्गीकारो नावश्यक इति। अन्येषामपि पञ्चानां मतानामुल्लेखोऽकार्षीत् पण्डितराजः। यथा—

**विभावादयस्त्रयः समुदिता रसा इति कतिपये।**

विभावादिषु त्रिषु य एव चमत्कारी स रसः, चमत्काराभावे कोऽपि नेति बहवः।

भाव्यमानो विभाव एव रसः इत्यन्ये। अनुभावस्तथा (भाव्यमानो) रसः इतीतरे।

व्यभिचार्येव तथा तथा (भावनाविषयीक्रियमाणः व्यभिचार्येव रसरूपतया) परिणमतीति केचित्।

**विमर्शः**

इत्थं पण्डितराज एकादशमतं प्रतिपादितवान्। तत्र चतुर्णामुपादानं तु सर्वत्र लभ्यते। अन्तिमानां च पञ्चानामुपादानं लोचने दृश्यते। तथा हि

"अन्ये शुद्धं विभावम्, अपरे शुद्धमनुभावम्, केचित्तु स्थायिमात्रम्, इतरे व्यभिचारिणम्, अन्ये तत्संयोगम्, एकेऽनुकार्यम्, केचन सकलमेव समुदायं रसमाहुरित्यलं बहुना" (ध्वन्या०पृ० २/१८६)।

एष्वेव पञ्चानामुपादानं पण्डितराजेन किञ्चिद् वैलक्षण्यमुपपाद्य कृतम्, तेषु त्रयाणां मतानां निराकरणं तु पण्डितराजेन सूत्रविरोधात् स्वयं कृतम्। अष्टानां विषये विवेचनं प्रस्तोतव्यं वर्तते। तत्र "परे तु" "नव्यास्तु" इति मतद्वयं पण्डितराजो वेदान्तिनामनिर्वचनीयख्यातिम्, नैयाकानामलौकिकसन्निकर्षं मानसलक्षणां प्रत्यासत्तिं चानुसृत्य व्याचख्यौ। तत्र यथा रसस्य सामाजिकवृत्तित्वाभावेन भट्टलोल्लटमतमनुमेये चमत्काराभावात् श्रीशङ्कुकमतं भावकत्वव्यापारान्तरस्वीकारे गौरवात् भट्टनायकमतं चापूर्णम्। तथा रसस्यानिर्वचनीयतायां "रसो वै सः" "इति श्रुतिविरोधादवास्तवविकत्वापाताच्च नव्यमतं रसे अतात्त्विकत्वापातात् "परे तु मतं" स्थायिरहितत्वात् कतिपयेषां मतम्, बहूनां च मतमुपेक्ष्यमेव।

एकैकस्य रसत्वकल्पनं तु प्रथमं नाट्यमवलोकयद्भिः अनुकर्तुर्वेशभूषादिभिरभिनयैश्च प्रभावितैर्विभावस्य रसत्वं कल्पितम्।

ततोऽनुभावमन्तरा विभावस्य चमत्काराजनकत्वं विचार्यानुभावस्य, पुनश्चित्तवृत्तेरास्वाद्यतां विचार्य व्यभिचारी रसः, कदाचित् त्रिषु कस्यचिदेव चमत्कारितां निभाल्य य एव चमत्कारी स रस इत्युपपादितम्। इदं प्रथमतया विशिष्टां व्याख्यां रससूत्रस्य भट्टलोल्लटोऽकार्षीत्। ततस्तन्मतमग्रभूमिरूपेणासाद्य तत्र न्यूनतां निराकर्तुं श्रीशङ्कुकः प्रायतत। तत्रापि न्यूनतया भट्टनायको व्याख्यत्।

मतमिदमतीवोपयुक्तम्। साधारणीकरणमेतदुपज्ञमेवाचार्यैः स्वीकृतम्। भोजकत्वव्यापारश्च व्यञ्जनाव्यापार एवेति। वैशिष्ट्यं पुनर्भोजकत्वं कल्पितम्, व्यञ्जना ध्वनिकारेण व्याकरणदर्शनरीत्योपपादिता। अत एवैषां चतुर्ण्णामाचार्याणां मतं प्रायः सर्वैरालङ्कारिकैः स्वस्वग्रन्थे निबद्धम्। अभिनवगुप्तश्चाह—

**चित्रं निरालम्बनमेव मन्ये प्रमेयसिद्धौ प्रथमाऽवतारं**
**सन्मार्गलाभे सति सेतुबन्धपुरप्रतिष्ठादि न विस्मयाय।**
**तस्मात् सतामत्र न दूषितानि, मतानि तान्येव तु शोधितानि**
**पूर्वप्रतिष्ठापितयोजनासु मूलप्रतिष्ठाफलमामनन्ति।।**

(अभिनवभारती, ६अ.)

इति शिवम्।

## शान्तरसविषयको मतभेदः

तत्र मम्मटभट्टः–

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।**

इति नाट्येऽष्टौ रसान् निरूप्याग्रे काव्ये नव रसान् न्यरूपयत्। तद्यथा—

**"निर्वेदः स्थायिभावोऽस्ति शान्तोऽपि नवमो रसः"।**

इति तत्रायमभिसन्धिः— नाट्येऽभिनयेन चमत्कारिणोऽष्टावेव रसाः। शान्तरसाभिनयस्तु नाट्ये न स्वदते अतः शान्तः काव्ये एवोपनिबध्यते। एतदेव सूचयितुं व्यभिचारिभावान् निर्दिशन् "हर्षौत्सुक्यादिषु सत्स्वपि व्यभिचारिभावेषु अमङ्गलप्रायस्य निर्वेदस्य प्रथममुपादानानर्हस्याप्युपादानं तस्य व्यभिचारित्वेऽपि शान्तरसस्य स्थायित्वसूचनार्थमकृत ग्रन्थकारः। न च क्रोधरूपस्यामर्षस्यापि रौद्ररसे स्थायित्वात्तस्यैव प्रथममुपादानं कुतो नेति वाच्यम्। स्थायिप्रकरणे तस्य स्थायित्वेन निरूपितत्वात् पुनः स्थायित्वनिरूपणप्रयासस्य व्यर्थत्वात्।

इत्थं मम्मटमते काव्ये एव शान्तरसो न नाट्ये इति सिद्धम्।

**पण्डितराजः**

नाट्येऽपि शान्तरसमुपपादयति। पूर्वं पूर्वपक्षतया नाट्ये शान्तरसस्याभावं केषाञ्चिन्मते उपपादयति यत् शान्तरसस्य स्थायिभावस्य शमस्य नटेऽसम्भवात् नाट्येऽष्टावेव शान्तातिरिक्ता रसा इति तदाहुः—

**शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।**
**अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते।।**

इत्याक्षिप्य समादधे यत्- नटे शमाभावादिति हेतुरसङ्गतः। ''यतः कञ्चिन्न रसं स्वदते नटः'' इति निर्णयात्। रसास्वादकताऽवच्छेदकं सहृदयत्वमेव। न तु नटत्वम्। काव्यार्थानुसन्धानबलेनैव क्वचिन् नटोऽपि रसं स्वदते। तथा ह्युक्तं दर्पणे (३/९५)—

''**काव्यार्थभावनेनायमपि सभ्यपदास्पदम्**''। इति।

सहृदयानां शमवत्त्वेन तेषु रसोद्बोधे बाधकाभावात्। न च यदा नटे शमो नास्ति तदा स कथमभिनेतुं क्षमेतेति वाच्यम्, नटः शिक्षाभ्यासादिबलेनाभिनयं प्रकाशयति, न तु तत्तद्रसस्थायिसत्तया। वस्तुतो भयक्रोधादीनामपि तत्राभावात् तदभिनयप्रकाशकताया अपि असङ्गत्यापत्तेः। नटे च यथा भयक्रोधादेरभावेन वास्तविकभयक्रोधादिकार्याणां पलायनबधादीनामुत्पत्तिस्तथैव शमाभावेऽपि वास्तविकतृष्णाक्षयादीनामभावेऽपि शिक्षाभ्यासादिना कृत्रिमाक्षिनिमीलनादितत्कार्याणामुत्पत्तौ बाधकाभावात्।

न च नाट्ये गीतवाद्यादीनां मनोविक्षेपकारिणां विरोधिनां विषयाणां सत्त्वाद् विषयविमुखतापादकस्य शान्तरसस्य सामाजिकेष्वपि कथमाविर्भाव इति वाच्यम्, नाट्येऽपि शान्तरसं स्वीकुर्वद्भिः कार्यानुकूलकारणकल्पनात् तदनुकूलगीतवाद्यादेर्विरोधिताया अकल्पनात्। न च विषयचिन्तनसामान्यमेव शान्ते विरोधीति गीतावाद्यादीनामनुकूलविषयाणामपि बाधकत्वमिति वाच्यम्, शान्तरसालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनस्य पुराणश्रवणसत्सङ्ग-पुण्यवनतीर्थावलोकनादेरपि विषयत्वेन विरोधित्वात्, श्रव्यकाव्येऽपि तदभावापत्तेः।

अत एव सङ्गीतरत्नाकरे चरमाध्याये व्यवस्थापितम्—

**अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।**
**तदचारु यतः कञ्चिन्न रसं स्वदते नटः।।**

इति व्यवस्थापितम्। येऽपि नाट्ये शान्तरसं नाभ्युपगच्छन्ति, तेऽपि महाभारतादिप्रबन्धेषु शान्तरसप्राधान्यस्य सकलानुभवसिद्धतया श्रव्यकाव्ये

शान्तं रसमवश्यं स्वीकुर्युरत एव मम्मटभट्टाः— "अष्टौ नाट्ये रसाः स्मृताः" इत्युपक्रम्य "शान्तोऽपि नवमो रसः" इत्युपसमाहार्षुरिति।

तत्र श्रव्यकाव्ये आनन्दवर्धनाभिनवगुप्तमम्मटभट्टादय आचार्याः शान्तं रसमभ्युपगच्छन्त्येव केवलं नाट्ये विवादः। तत्र कियतामाचार्याणां मतम्।

तत्र केचन नाट्ये च वाच्छन्ति शान्तरसं तथा हि–

**न यत्र दुःखं न सुखं न चिन्ता, न द्वेषरागौ न च काचिदिच्छा।**
**रसः स शान्तः कथितो रसज्ञैः सर्वेषु भावेषु समप्रमाणः।**

(का०द० ४/२०४)

इति रीत्या समस्तव्यापारप्रविलयलक्षणस्याभिनेतुमशक्यतया तस्य नाट्यरसत्वायोगाद् इति। अपरे च वनप्रदेश-विविक्तदेशसेवितादेः शान्तरसाभिव्यञ्जकस्याभिनययोग्यतासत्त्वात् नाट्येपि शान्तरसमङ्गीकुर्वन्ति।

न च सहृदयेषु अनादिसिद्धरागद्वेषवासनादिसत्त्वात् कथं शान्तरस आस्वादनीय इति वाच्यम्, वीतरागादिभिः शृङ्गारादीनामप्यचर्वणीयतया रसत्वानापत्तेः। भरतेन तस्य विभावादीनामनुपदेशाद् अस्य कथं रसत्वमित्यपि न शङ्क्यम् तस्य विभावादीनां सहृदयैः स्वयमुत्प्रेक्षणीयत्वात्, लोकयात्रातिक्रान्तपरमपुरुषार्थतया विभावादीनां मुनिना प्रतिपादितत्वात्। अतोऽस्याध्यात्मशास्त्राभ्याससत्पुरुषसंवादादयो विभावाः, यमनियमादयोऽनुभावाः, मतिस्मृति–धृति–चिन्ता–वितर्कादयो व्यभिचारिणः, निर्वेदस्थायिभावः।

अत्र केचन (भट्टोद्भटप्रभृतयः) सर्वचित्तवृत्तिप्रविलयरूपः शम एव शान्तरसस्य स्थायीति निगदन्ति। अत एव भट्टोद्भटेनोक्तम्—

**जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः।** इति।

(द्रष्टव्यम्- का०द, पृ० २०३–४)

परमभावरूपस्य शमस्य चित्तवृत्तिरूपत्वाभावात् स्थायिभावत्वाभावात्।

केचन द्वादशरसान् निरूपयन्ति, तद्यथा—

**शृङ्गारवीरकरुणाद्भुतरौद्रभयानकाः ।**
**बीभत्स–हास्य–प्रेयांसः शान्तोदात्तोद्धता रसाः।।**
**रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ धृतिं गतिम्।**
**स्थायिनोऽप्युद्धत प्रेयः शान्तोदात्तेषु जानते।।**

अपरे दशरसान् आहुः–

**शृङ्गारवीरकरुणाद्भुतरौद्रभयानकाः ।**
**बीभत्सहास्यशान्ताश्च वात्सल्यं च रसा दश।।**

इति तत्र वात्सल्यं प्रेमोदयः, स शृङ्गाररसे प्रेयस्यन्तर्भूत इति नवैव रसाः सन्ति। ध्वनिकारप्रभृतयो नवैव रसाननुमेनिरे। परं धनिकादयो नाट्ये शान्तरसं नाभ्युपगच्छन्ति। यदुक्तं तैः—

**निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम्।।** इति।
**वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः।।** इति।

अयं भावः— प्रबन्धेषु सर्वेषु मुखप्रतिमुखगर्भविमर्शोपसंहारेषु सन्धिषु स्रक्सूत्रन्यायेनानुवर्तते स स्थायीत्युच्यते। निर्वेदादयस्तथा न सन्ति सर्वेषु सन्धिषु एकस्यैव व्यभिचारिभावस्य पोषे विरसतापातात् (विवरणे, पृ० १६८)।

गोकुलनाथास्तु शान्तस्य नाट्येऽभिनयं न वाञ्छन्ति। तदभिप्रायः— शान्तस्याभिनयो न सम्भवति काव्ये प्ररोहस्तु सम्भवत्येव। यदुक्तं धनिकेन— "शमप्रकर्षो निर्वाच्यो मुदितादेस्तदात्मता"। इति।

शान्तरसस्थायिभावः शमो द्विधा— अविद्या परिहारेणात्मनश्चिदानन्दोल्लासः, अविद्यावच्छिन्नस्यात्मनः स्थूलसूक्ष्म-शरीरपरिहारेण स्वस्वरूपोल्लास इति भेदात्। तत्र प्रथमोऽभिनेतुं न शक्यः। न वा तस्य काव्ये प्ररोहः, न वा सहृदया आस्वादयितुं क्षमाः पूर्वानुभवाभावात्। श्रुतिरपि तं नेति नेतीत्यन्यापोहेन निरूपयति। अत एवाह धनिकः— "न च तथा भूतस्य शान्तरसस्य सहृदयाः स्वादयितारः सन्ति" इति। द्वितीयस्तु— "सुखमहमस्वाप्सं न किञ्चिदवेदिषम्" इति स्मरणदर्शनात् सुषुप्तावनुभूयते। इति तस्य निर्वचनमास्वादश्च कर्तुं शक्यः। अत एव ध्वनिकारादिभिः शान्तो रसः, श्रव्यकाव्ये महाभारतादौ निरूपितः।

**यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्।।**

इत्यादिना।

## विमर्शः

वस्तुतः कृत्रिमस्यापि पूर्वानुभूतस्यैव भावस्याभिनयः विधातुं शक्यः। नटे भयक्रोधादीनामभावेऽपि तेषां तदनुभूतत्वात् शक्यः कृत्रिमाणां शिक्षाभ्यासादिनाऽविर्भावः। अनुभूतस्यैव प्रकाशनं सहृदयहृदयावर्जकं भवति, नानुभूतस्य। शमस्य निर्वेदस्य वा नटेन कदाप्यनभूतत्वात् तत्प्रकाशनं

शिक्षाभ्यासादिबाहुल्येऽपि समीचीनतयाऽसम्भवात्, कृत्रिमताऽऽभासात् सहृदयहृदयावर्जकाभावात् रसनीयतानापत्तेः। श्रव्ये चानन्तरोदीरितस्य द्वितीयप्रकारस्यानुभवाद् वर्णयितुमनुभवितुं च शक्यत्वात् मम्मटस्य प्रामाण्यम्।

यद्यपि केचन नागानन्दप्रबोधचन्द्रोदयादिषु शान्तरसमङ्गित्वेन निरूपयन्ति। परमेक एव रसोऽङ्गी वीरः शृङ्गार एवेति शास्त्रविरोधात् न तद्युक्तम्। वस्तुतस्तत्र दयावीरधर्मवीरादिरसानामेव सत्तेति परं क्वचित् शान्तरसोऽप्यङ्गित्वेनोक्तः। अतः प्रबोधचन्द्रोदयादिषु शान्तस्याङ्गित्वेऽपि दोषाभावः।

## विप्रलम्भे मतभेदः

मम्मटश्च सम्भोगविप्रलम्भभेदात् शृङ्गाररसं द्विविधं निरूप्य विप्रलम्भम् ''अभिलाष–विरहेर्ष्या–प्रवास–शापादिरूपकारणभेदात् पञ्चविधं समाम्नासीत्। तत्र पण्डितराजस्याभिप्रायो यत् कारणभेदसत्त्वेऽपि कार्ये (विप्रलम्भे) वियुक्ततत्प्रकारकबुद्धौ भेदानुपलम्भादयमेकविध एव इति तथा तेन निरूपितः।

अग्रे पण्डितराजः शृङ्गाररसं संयोगविप्रलम्भभेदेन द्विविधं निरूप्य विप्रलम्भविषये ऊचे यत् मम्मटादयः प्राञ्चः आचार्याः इमं विप्रलम्भं तु ''प्रवासाभिलाषविरहेर्ष्याशापाद्युपाधिभिः पञ्चविधमामनन्ति। परं प्रवासादिषु मिथो वैलक्षण्याभावात् ते भेदा नास्माभिः प्रपञ्चिता इति।

## विमर्शः

परं तत्र पूर्वसङ्गमरहितयोर्नायकयोरनुरागे जाग्रत्यपि पारतन्त्र्याद् दैवाद् वा कुतोऽपि हेतोरसमागमोऽभिलाषहेतुको विप्रलम्भः। अभिलाषहेतुकविप्रलम्भे चक्षुप्रीतिः, मन सङ्गः सङ्कल्पः प्रजागरः अरतिः सञ्ज्वरः, कार्श्यं, लज्जात्यागः, भ्रमः, मृतिः इत्यादयो दशावस्था भवन्ति। प्रथममनुरक्तयोः नायकयोः मान–प्रवास–शापातिरिक्तात् कुतश्चित् कारणात् विश्लेषो विरहः। प्रिये गोत्रस्खलनान्यासम्भोगादिरूपेऽपराधे कृते सति यो विश्लेषः स ईर्ष्याहेतुकः। प्रिये देशान्तरोन्मुखे प्रवासजो विप्रलम्भः। मुनि–देव–स्वामी–गुर्वादिकोपतः शापजो विप्रलम्भः। एवं कारणभेदवैलक्षण्यात् कार्यभेदोऽप्यवश्यं स्वीकार्यः। यदुक्तम्— ''अयमेव हि भेदो भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्च'' (का०प्र० उ० ५ पृ० २४४)। अत एव गोकुलनाथैः विवरणे — ''अयमत्र विवेकः— अभिलाषविषयसिद्ध्याऽनुभावेन कुण्ठितोऽभिलाषो हर्षश्च यत्र प्रधानरतिमुल्लासयतः तत्र सम्भोगः। यत्र च विषयासिद्ध्या धाराधिरूढोऽभिलाषः पीडा च रतिमुल्लासयतः तत्र विप्रलम्भ इति। यदाहुः—

**दर्शनस्पर्शनादीनि यत्राऽन्योन्यं विलासिनौ।**
**अनुरक्तौ निषेवेते स सम्भोग उदाहृतः।।**

(पृ० १४७)

अनुरागोऽत्र बाह्यरतिरभिलाषः। तथा—

**यत्र भावो रतिर्नाम प्रकर्षमधिगच्छति।**
**नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते।।**

(पृ. १४८)

रतिरभिलाषः। स चाभिलाषो द्विविधः— पूर्वरागः, उत्कण्ठा चेति। तत्र कदाप्यलब्धसङ्गमः पूर्वरागः। सङ्गमपूर्विका उत्कण्ठा। सैव दत्तसङ्केतास्यानागमनसहकारेण बाधाजनिका विरह इत्युच्यते। अभिलाषस्य बाधाजनने मानः प्रवासश्च सहकारिणौ। तत्र मान ईर्ष्याप्रयुक्तो विक्षेपः।

प्रवासो द्विविधो धनादिलिप्सया शापेन च। एवञ्चैतैः पञ्चभिरुपाधिभिः विभक्तो विप्रलम्भः पञ्चविधः। अत एव धनिकः शृङ्गारं त्रिविधमाह—

**''अयोगो विप्रयोगश्च सम्भोगश्चेति स त्रिधा''।**

(दशरूपकम् ४/८५)

अत्र सामान्यविप्रलम्भशब्देन अयोगविप्रयोगौ सङ्गृहीतौ। अभिनवगुप्तपादाचार्यैश्च विप्रलम्भशब्देन अयोगवियोगौ सामान्येन गृहीतौ। एवं सत्यपि भेदे विशेषानुपलम्भादित्युक्तिः पण्डितराजस्य वियुक्तत्वप्रकारकबुद्धेरैक्यादिति दिक्।

परमुत्साहस्य स्थायिन ऐक्येऽपि दया–दान–युद्ध–धर्म–सत्य–क्षमा–बल–पाण्डित्यादिरूपोपाधिकभेदात् शृङ्गारस्येवानेके भेदा वीररसस्य भवतैव निरूपितास्तदाऽत्र पञ्चविधनिरूपणे का क्षतिरिति।

## रौद्ररसे मतभेदः

पण्डितराजो रौद्ररसम्–

**नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे**
**मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति।**
**अयं पततु निर्दयं दलितदृप्तभूभृद्गल–**
**स्खलद्रुधिरघस्मरो मम परश्वधो भैरवः।।**

इत्युदाहृत्य मम्मटस्य रौद्ररसोदाहरणं दूषयन्निजगाद— ''काव्यप्रकाशे मम्मटेन यद् रौद्ररसोदाहरणमुपन्यस्तम्—

**कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं**
**मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।**
**नरकरिपुणा सार्धं तेषां सभीमकिरीटिना—**
**मयमहमसृङ्मेदो मांसैः करोमि दिशां बलिम्।।** इति।

तच्च रौद्ररसव्यञ्जने क्षमा या समासबहुला संयुक्ताद्यक्षरबहुला परुषावृत्तिर्या वामनादयो गौडीत्युदाहरन्ति सा नास्ति। अतोऽत्र वेणीसंहारकृतो भट्टनारायणस्याशक्तिरेव। इत्थं कवेरशक्तिमुदाहरन् तदुदाहरतो मम्मटस्याऽप्यनुचितोदाहरणदानेन समुचितोदाहरणाभावादशक्तिमभिव्यनक्ति।

**विमर्शः**

वस्तुतो द्विविधो दोषः कवेः— अशक्तिकृतः, अव्युत्पत्तिकृतश्च। तत्राव्युत्पत्तिकृतो दोषः कविशक्तितिरोहितत्वात् क्वचिन्न लक्ष्यते, परमशक्तिकृतो दोषो झटिति प्रतीयते, सहृदयानामरुन्तुदत्वात्। तदुक्तं ध्वन्यालोके—

**अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।**
**यस्त्वशक्तिकृतो दोषः झटित्येवावभासते।।**

(तृ०उ०पृ० ३१६)

अत्र रौद्ररसे तदनुरूपवृत्त्यभावाद् दोषस्य झटिति प्रतीतेरशक्तिरेव कवेः। एवं दुष्टस्योदाहरणं नोचितमिति।

अत्र बदरीनाथः समर्थयति– ध्वन्यालोकस्य द्वितीयोद्योते आनन्दवर्धनेनोक्तं यत् ''तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः। यथा—

**यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां**
**यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।**
**यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः**
**क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्याऽन्तकोऽहम्।।**

तृतीयोद्योते पुनः— तथा रौद्रादिष्वसमासा दृश्यते। यथा— ''योः यः शस्त्रं विभर्ति'' इत्यादौ। तेन ज्ञायते दीर्घसमासरचनासंयुक्ताद्यक्षरबाहुल्यानपेक्षितोऽप्यर्थः प्रसन्नवाचकाभिधेयः ओजोगुणं तदाश्रयं च रौद्रादिरसमभिव्यनक्ति। एवमत्र रौद्ररसव्यञ्जनक्षमा वृत्तिरस्त्येवेति कवेरशक्तिमुद्घाटयतः पण्डितराजस्यैव वस्तुतो

विवेकाशक्तिरिति। वस्तुतः प्रसादस्तु सर्वेषु रसेषु सर्वासु रचनासु च साधारण इति निर्विवादतयाऽत्र प्रसादगुणस्वीकारे न कश्चिद् दोष इति।

**अद्‌भुतरसे मतभेदः**

पण्डितराजः अद्‌भुतरसे—

**चराचरजगज्जालसदनं वदनं तव।**
**गलद्‌गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना।**

इत्युदाहृत्यात्र पुत्रगतप्रीतेर्व्यञ्जकाभावाद् भावध्वनित्वमेवं विस्मयस्य गुणत्वं निराकृत्य भक्तावपि गुणत्वं परिहृत्य मम्मटोदाहरणं समीक्षमाण आह— सहृदयशिरोमणिभिः प्राचीनैः मम्मटाचार्यैर्यदद्‌भुतरस उदाहृतः।

**चित्रं महानेष नवावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः।**
**लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः।।** इति।

तत्र मया उच्यते, यद्यप्यत्राद्‌भुतरसोऽभिव्यज्यते, परमयं न ध्वनिः। अत्र स्तोतृगता वर्णनीयमहापुरुष विषयकभक्तिः (भावः) प्रधानम्। तस्या उत्कर्षकतयाऽस्य गुणीभूतत्वात्। यथा महाभारते गीतासु विश्वरूपमवलोकयतः पार्थस्य—

**''पश्यामि देवांस्तव देव! देहे सर्वास्तथाभूतविशेषसङ्घान्''।**

इत्यादि वाक्यसन्दर्भे। अत इदं पद्यं रसवदलङ्कारस्योदाहरणं न रसध्वनेः। अत्र भक्तिर्न प्रतीयते इति सहृदयैर्वक्तुं न शक्यत इति।

**विमर्शः**

वस्तुतोऽत्र न भक्तिरिति प्रकरणादिनाऽवसीयते। यतो हि युद्धसन्नद्धं कुशमवेक्ष्य भगवतो रामचन्द्रस्येयमुक्तिः। एष बालोऽपि महानिव भाति चित्रम्। अयं नवावतारः। एषा कान्तिः क्व कुत आगता। भङ्ग्यवस्थितिरभिनवैवाननुभूतपूर्वा। अस्य धैर्यं लौकोत्तरम्, अस्य प्रभावः- प्रभुत्वमहो अस्याकृतिरवयवसंस्थानविशेषः कापि वाङ्मनसाऽतीता तस्मादस्यैवैतादृशः सर्गः सृष्टिर्नूतन एव लोकसृष्टिविलक्षण एव। अत्र कुश आलम्बनविभावः। तदीयमहत्त्वादय उद्दीपनविभावाः। तदवलोकनजनिता रामनेत्रविकासादयोऽनुभावाः। तदनुमिता हर्षादयो व्यभिचारिणः। एभिः स्थायिनो विस्मयस्य परिपोषाद् अद्‌भुतरसः सहृदयैरास्वाद्यत। इति।

न चात्र पुत्रगता प्रीतिः प्रधानमिति वाच्यम्, तदभिव्यञ्जकाभावात्। अतो भवता स्वकीयोदाहरणवदस्यापि विस्मयरसस्योदाहरणत्वं स्वीकरणीयमन्यथा भवदुदाहरणमप्याकुलीभूतं स्यादिति।

## वीररसविषये विमर्शः

वीररसस्य मम्मटाचार्यैर्भेदो न कृत:। उदाहरणप्रसङ्गे-

**क्षुद्राः सन्त्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा**
**युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।**
**सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः**
**किञ्चिद् भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि।।**

(का०प्र०च०उ० ४०)

इत्येकमेव पद्यमुदाजहार। परं पण्डितराज: दान-दया-युद्ध-धर्मै-रुपाधिभिरुपधेयस्य वीररसस्य चातुर्विध्यमुदाहृत्याह— इत्थं वीररसस्य चातुर्विध्यं प्रपञ्चितं प्राचामनुरोधात्'' इति। तत्र बदरीनाथो व्याख्यत्। प्राचां मम्मटादीनामनुरोधात् न तु स्वविचाराद् इति। तदेतद् बदरीनाथस्य काव्यप्रकाशग्रन्थानवलोकनजन्यो भ्रमविलास: काव्यप्रकाशे वीररसस्य क्वचिदपि भेदानुक्ते:। मम्मटस्य रसविषयकस्यान्यग्रन्थस्यानुपलब्धे:। वस्तुतो दान-दयावीरयोरपि धर्मवीरात् पृथग् गणना नोचिता। पाण्डित्यवीरस्य युद्धस्वरूप-वादसाधारणात् युद्धवीरे एवान्तर्भाव:, क्षमावीरोदाहरणे—

**बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु**
**पातयतु वाऽसिधारामहमणुमात्रं न किञ्चिदाभाषे।**
**परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय**
**अहमिह पुरुहूतपक्ष कोणे निखिलमिदं जगदण्डकं वहामि।।**

''बहलदहनजालम्'' इत्यादौ धृतिभावध्वनिरेव ''परिहरतु धरां फणिप्रवीर'' इत्यादिबलवीरोदाहरणे गर्वभावध्वनि: स्फुट एव। एवं धर्मवीरोदाहरणे—

**''सपदि विलयमेतु राज्यलक्ष्मीरुपरि पतन्त्वथवा कृपाणधारा।**
**अपहरतुतरां शिरः कृतान्तो मम तु मतिर्नमनागपैति सत्यात्''।**

इत्यादावपि धृतिभावध्वनिरेव । इत्थमविशिष्यते युद्धवीर एव। न च युद्ध—वीरेऽपि गर्वभावध्वनिरिति वाच्यम्, स्थायिन उत्साहस्य प्रतीतेरपह्नोतुमशक्यत्वात्। यैः पुनरुच्यते दान-दया-धर्म-वीरादिषूत्साहः स्थायी प्रतीयते सत्य-क्षमा-बलवीरादिषु न प्रतीयते, इति तैः प्रौढिवादितामात्रं क्रियते, अनुकूलतर्काभावात्।

अतो वीररस एकविध एव। अथवा पूर्वोक्तेषु सर्वेषूदाहरणेषूत्साहप्रतीतेरनेकविधत्वात् संख्यातुमशक्यत्वादेकविधत्वं युक्तं, चातुर्विध्योपपादनं तु अयुक्तमेव।

अत एव श्रीवत्सलाञ्छनेनोदाहृते दानवीररसोदाहरणे—

**उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरु-**
**र्वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत् कर्मभिः।**
**त्यागः सप्तसमुद्रमुद्रितमही निर्व्याजदानावधिः**
**सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम्।।**

(महावीरचरितनाटके)

इत्यत्र तु कविनिष्ठपरशुरामविषयकरतिर्भाव एव प्रधानम्, न रसध्वनिरिति पण्डितराजेनाप्युक्तम्।

इदन्तु वक्तुं शक्यते- मयेदं कार्यमेवेति बुद्धिर्वासनारूपेण परिणता "उत्साह" इत्युच्यते। उत्साहश्च चिकीर्षाप्रवृत्ती जनयित्वा वृत्ते फले दीप्तस्वरूपसुखेन सम्बध्यते। स च कर्तव्यत्वाध्यवसायो द्विविधः- द्वेषयोनिर्निष्फलेच्छायोनिश्च। तयोराद्यः शत्रुगोचरद्वेषादिसहकारेण तन्निधनादौ चिकीर्षाप्रवृत्ती जनयति। द्वितीयस्तु फलानुसन्धानसहकारेण यागादौ रणादौ च। तत्राद्यो रौद्ररसस्य प्रकृतिः, द्वितीयस्तु वीरस्येति गोकुलनाथोक्तरीत्या (का०प्र०विवरणे पृ०१५१) निष्फलेच्छायोनेर्यागादौ चिकीर्षा प्रवृत्योर्जननात् त्याग-दया-दान-धर्मादिष्वप्युत्साहस्यास्वादः सहृदयानुभवसिद्धश्चेदनेकविधत्वात् सम्भोगशृङ्गारस्येवैकविधत्वम्। वस्तुतश्चातुर्विध्येऽपि न सर्वेऽनुकूलाः। राजचूडामणिदीक्षितेन (का०द०पृ० १७८-१७९च०३०) रण-दया-दानभेदात् त्रिविधस्यैवोपपादितत्वात्। अतोऽत्र मम्मटभट्टपण्डितराजयोर्न वैमत्यमिति।

## अथ भावध्वनिविमर्शः

अथ के भावाः— भवन्तीति भावाः भावयन्तीति वा, "वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावा इति णिजन्तभूधातोः करणे घञि भावः वासनाकृतमित्यनर्थान्तरम्।

**विभावेनाहृतो योऽर्थो ह्यनुभावैस्तु गम्यते।**
**वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः।।**

(ना०शा० ७/१)

इमे व्यभिचारिभावा एव भावपदेनोच्यन्ते। तथा हि मम्मटः- "व्यभिचारिणो ब्रूते" इति प्रतिज्ञाय—

**निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः।**
**आलस्यं चैव दैन्यं च चिन्तामोहस्मृतिर्धृतिः।।**

**व्रीडाचपलता हर्ष आवेगो जडता तथा।**
**सुप्तप्रबोधोऽवमर्षश्चाप्यवहित्थमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।।**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः।।**

इति। (का०प्र० ४/४६सू०)

विज्ञेया व्यभिचारिण इत्यनन्तरम्, त्रयस्त्रिंशदमी भावा नामतः (न तु लक्षणादिना) समाख्याताः परिगणिता इत्यर्थः।

भेदस्त्वेतावान् प्रतीयते– इमे व्यभिचारिणो विभावादिभिर्व्यक्ता एव भावा भवन्ति न वाच्याः। यद्यपि व्यभिचारिणोऽपि व्यङ्ग्या एव, तेषां स्ववाचकशब्देनोपादानं दोषाय। तथा हि मम्मटो "रसदोषेषु व्यभिचारिरसस्थायिभावानां शब्दवाच्यता"......। रसे दोषा स्युरीदृशाः" (का०प्र० ७/८२) उदाजहार च–

**सव्रीडा दयिताननें सकरुणा मातङ्गचर्माम्बरे**
**सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।**
**सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे**
**पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः।।**

(३२१)

अत्र ब्रीडादीनां व्यभिचारिणां स्वशब्देनोपादानं दोषः। अत्र दूषकताबीजं च व्यभिचार्यादीनां स्वशब्देनोपादानेऽनास्वाद्यत्वमिति। अतो व्यभिचारिणोऽपि व्यङ्ग्या एव आस्वाद्या भवन्ति। यथा–

**शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।**
**दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते।।**

इति उत्तमोत्तकाव्योदाहरणे नायक आलम्बनम्, सविधशयनादाक्षिप्तं रहःस्थानमुद्दीपनम् निरीक्षणमनुभावः दरमीलन्नयनात्वेन व्यङ्ग्या लज्जा निरीक्षणेन व्यङ्ग्या उत्सुकता च व्यभिचारिभावः, एतेषां संयोगाद् रतिरभिव्यज्यते। न चात्र लज्जोत्सुकयोः वाचकं पदमस्तीति। प्रायो व्यङ्ग्या एव ते। तथापि क्वचिद् वाच्या अपि भवन्ति। यत्रानुभावविभावाभ्यामुपपादनं न सम्भवति, तत्र स्वशब्दवाच्या एव ते। स्वशब्दवाच्यता दोषोऽपि तत्र न भवति। तथा ह्युक्तं मम्मटेन—

**"न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्"।**

(का०प्र० ७/८३)

**औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्यमाना ह्रिया**
**तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।**
**दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे**
**संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः।।**

(३३०)

अत्रैकोऽपि विभावस्तादृशो नास्ति य औत्सुक्यं प्रत्याययेत्। एवं व्यभिचारिणः वाच्या अपि भवन्ति।

तस्मान्निष्पन्नं वाच्या रसाङ्गतया व्यङ्ग्या वा ते व्यभिचारिणः। ये प्राधान्येन व्यङ्ग्यास्ते भावाः। तथा ह्युक्तं मम्मटेन—

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः।**
**भावः प्रोक्तः – – – – – – –।।**

(का०प्र० ४/४८)

अत्र रतिशब्दः सकलस्थायिभावोपलक्षकः, देवादिविषयेति अप्राप्तरसावस्थोपलक्षणम्। अतो देवादिविषया रतिः, कान्ताविषयाऽपुष्टा रतिः, अप्राप्तरसावस्थाः हासादयः प्राधान्येनाञ्जितो व्यभिचारी च भावः प्रोक्तः। तदुक्तम्—

**रत्यादिश्चेन्निरङ्गः स्याद् देवादिविषयोऽथवा।**
**अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्।।**

(का०प्र०प्रदीपे, पृ० १२६)

तत्रैकस्य भावस्याभिव्यक्तौ व्यभिचार्यन्तरस्य नियमतो नापेक्षा, अपेक्षायां तस्यैव प्राधान्यं स्यात्। परं यत्र प्रकरणादिना कस्यचिद् भावस्य प्राधान्यं निश्चितं स्यात् तत्र प्रधानभावाभिव्यञ्जकसामग्र्यैव नान्तरीयकतया स्वल्परूपेण भासमानस्य क्वचिद् व्यभिचार्यन्तरस्याङ्गत्वेन सद्भावेऽपि न क्षतिः।

अत एवामर्षादौ गर्वस्य गर्वादौ वाऽमर्षस्याङ्गत्वमुपपद्यते। एकस्य प्राधान्येऽपरस्याङ्गत्वे गुणीभूतव्यङ्गता न शङ्क्या, पृथक् पृथग्विभावादिभिरभि-व्यक्त्योरङ्गाङ्गिभावे गुणीभूतत्वम्। एकयैव सामग्र्याभिव्यक्तयोर्न गुणीभूतत्वम्। अन्यथा गर्वादौ अमर्षस्य, अमर्षादौ च गर्वस्य सत्त्वाद् द्वयोर्गुणीभावाद् गर्वामर्षभावध्वन्योरुच्छेद एव स्यात्। अत्र विभावो निमित्तकारणमात्रम्। तत्र हर्षध्वनेरुदाहरणम्—

**अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना।**
**अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव।।**

(रं०ग०–पृ० २९७)

अत्रावधिकाले प्रियगमनं विभावः, मुखविकासोऽनुभावः, व्यभिचारी नास्ति। वस्तुतोऽत्र भवनद्वारिविलोचने दधानेत्यनेनौत्सुक्यमपि गम्यते, परं तद् व्यभिचारि, हर्षे औत्सुक्यस्य सत्त्वात्। तथाऽपि अथ रामा विकसन्मुखी बभूवेत्यनेन व्यङ्ग्यस्य हर्षस्यैव प्राधान्यमिति हर्षध्वनिरिति।

**पण्डितराजमतम्**

भावविषये पण्डितराजो मम्मटमेवानुसरति। अथ किं भावत्वमिति जिज्ञासायां'' विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वं भावत्वमित्युक्तौ रसकाव्यवाक्यस्यापि विभावानुभावभिन्नत्वाद् रस व्यञ्जकत्वात्, च भावत्वापत्तिः स्यात्। न च शब्दो न रसव्यञ्जकोऽपि तु विभावादय एव यदुक्तं मुनिना—

''विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'' इति। विभावादीनां काव्यवाक्यार्थत्वादर्थद्वारा शब्दस्यापि व्यञ्जकत्वात्।

अत्र बदरीनाथः— ''वस्तुतस्तु गीतवाद्यादिशब्दानां वाच्यार्थप्रत्यायकत्वेऽपि रसव्यञ्जकत्वस्य ध्वनिकारादिभिर्निर्णीतत्वेन न शब्दस्यार्थद्वारैव व्यञ्जकत्वं तथा च नाग्रिमनिवेशस्यावसरः'' इति निजगदे, तत्पण्डितराजाभिप्रायानभिज्ञतामूलम्। गीतवाद्यादिशब्दानां उद्दीपनविभावत्वाद् रसनिष्पत्तिकारित्वेऽपि काव्यवाक्यानां साक्षाद् रसाभिव्यञ्जकत्वानुपपत्तेः। अनुपदमेव पण्डितराजेन वर्णादीनां गुणाभिव्यञ्जकत्वोपपादनात् वर्णरचनाविशेषाणां माधुर्यादिगुणाभिव्यञ्जकत्वमेव न तु रसाभिव्यञ्जकत्वमित्युक्तेः।

(रसगङ्गाधरे, प्र०आ०, पृ. ४०४)

पदवाक्यादीनां यद् व्यञ्जकत्वं तदर्थद्वारैव—

''यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ''। इत्यत्र शब्दो गुणीकृताभिधेयः अर्थो गुणीकृतात्मेत्यादिध्वनिकारोक्तेः। शब्दबोध्यो व्यनक्त्यर्थ इत्युक्तेश्च। अत्र ''विभावानुभावभिन्नत्वे सति द्वारान्तरनिरपेक्षसाक्षाद् रसव्यञ्जकत्वम्'' इत्युक्तौ भावस्यापि भावनाद्वारैव रसव्यञ्जकत्वात् साक्षाद् अव्यञ्जकत्वाल्लक्षणेऽसम्भवदोषप्रसक्तिः। भावनायां साक्षाद्रसव्यञ्जिकायामति-व्याप्तेश्च। ''विभावानुभावशब्दभिन्नत्वे सति रस

व्यञ्जकत्वम्'' इत्युक्तौ प्रधानभावध्वनौ रसव्यञ्जकताऽभावात्, अव्याप्तिदोषात्। न च प्रधानध्वन्यमाने भावेऽपि प्रान्ते रसाभिव्यक्तिर्भवत्येवेति वाच्यम्, सर्वत्र रसध्वनौ भावध्वनिलोपप्रसङ्गात्। न च प्रधानध्वन्यमानभावे भावस्यैव चमत्कारप्रकर्षः। तत्र प्रान्ते रसाभिव्यक्तावपि रसस्याचमत्कारित्वान्न रसध्वनिव्यवहार इति वाच्यम्। चमत्काररहितरसाभिव्यक्तौ मानाभावात्। सहृदयहृदयप्रामाण्यात् आनन्दाशं विना रसाभिव्यक्तेरस्वीकारात्। न च ''न भावहीनोऽस्ति रसो न भावो रसवर्जितः'' इत्यभियुक्तोक्तौ प्रधानध्वन्यमानभावेऽपि प्रान्ते रसाभिव्यक्तिस्वीकारात् नाव्याप्तिः, इति वाच्यम्। देश-काल-वयोऽवस्थादिनानापदार्थघटितपद्यवाक्यार्थे तस्य विभावानुभावभिन्नत्वाद्रसाभिव्यञ्जकत्वाच्चातिव्याप्तेः।

एवं ''रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वं भावत्वम्'' इत्यपि न युक्तं, (भाव चर्वणायामतिव्याप्तिनिरासाय चर्वणाविषयेति चित्तवृत्तेर्विशेषणम्)

**''कालागुरुद्रवं सा हालाहलवद् विजानती नितराम्।**
**अपि नीलोत्पलमालां बाला व्यालावली किलामनुते''।**

(रसगङ्गाधर, प्र०आ०, पृ० २९१)

इत्यत्र हालाहलसदृशत्वप्रकारकज्ञानस्य विप्रलम्भानुभावत्वेन रसाभिव्यञ्जकचर्वणाविषयत्वात् चित्तवृत्तित्वाच्च भावत्वापत्तेः। न चाखण्डमेव भावत्वम्, मानाभावात्। इत्यादिना समीक्ष्यनिराकृत्य च ''विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं भावत्वमिति'' लक्षयित्वा मम्मटं प्रमाणयाञ्चक्रे यदाहुः- ''व्यभिचार्यञ्चितो भावः'' इति।।

**मतभेदः**

मम्मटस्त्रयस्त्रिंशद् व्यभिचारिभावानाह। पण्डितराजः गुरुदेव-नृप-पुत्रादिविषया रतिश्चेति चतुस्त्रिंशदित्यूचे (र०गं०१/पृ. २९६)

**विमर्शः**

तत्र देवादिविषयकरतेर्व्यभिचारिभावेषु गणनायां किं मूलम्, यद्यपि रतिरपि शृङ्गारे एव स्थायी रसान्तरे व्यभिचारिभाव एव तथापि देवादिविषयकरतेर्भावत्वमेवोपपादितं मम्मटेन। नाट्यशास्त्रेऽपि-

**''त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः''।** इति।

(ना०शा० ७/९४)

अन्यत्र च **''एकोनपञ्चाशदिमे यथावद्भावास्त्र्यवस्था गदिता मयेह''**

(ना०शा० ७/१०९)

इति त्रयस्त्रिंशद् व्यभिचारिणः, अष्टौ सात्त्विकाः, अष्टौ स्थायिभावा इति, एकोनपञ्चाशद् भावाः।

परं पण्डितराजेन— "विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम्" इति लक्षितम्। एवं देवादिविषया रतिर्यदि हर्षादिषु गणिता न स्यात्तदा तत्र भावत्वमव्याप्तं स्यात्। अतः पण्डितराजेन मतान्तररीत्या देवादिविषयकरतीनां व्यभिचारित्वमुपपादितम्। "सञ्चारिणः प्रधानानि देवादिविषया रतिः" इत्युक्तेः।

भावाभासादावपि न विमतिः "अनौचित्यप्रवर्तिताः" इति मम्मटोक्तमेवानुसरति पण्डितराजः। भावशबलतायामपि टीकाकारमेव खण्डयति प्रमाणयति च तत्रापि मम्मटम्, तदुक्तम्– यत्तु काव्यप्रकाशटीकाकारैः—

**"उत्तरोत्तरेण भावेन पूर्वपूर्वभावोपमर्दः शबलता"**

इत्यभ्यधीयत, तन्न—

**"पश्येत् कश्चित् चल चपल रे का त्वराहं कुमारी**
**हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि"।।**

इत्यत्र शङ्काऽसूया–धृति–भ्रम–दैन्य–मत्यौत्सुक्यानामुपमर्द-लेशशून्यत्वेऽपि शबलताया राजस्तुतिगुणत्वेन पञ्चमोल्लासे मूलकृतैव निरूपणात्" इति।

## रसादीनां संल्लक्ष्यक्रमत्वम्

मम्मटाचार्याः – "यद्यपि न विभावादय एव रसा अपि तु रसस्तैरित्यस्ति क्रमस्तथापि लाघवात् स न लक्ष्यते" इत्यूचिरे। एतावता ज्ञायते यत्ते रसादिरूपमर्थमसंल्लक्ष्यक्रममेव मेनिरे।

निरूपितः सर्वोऽपि रसभावादिरूपव्यङ्ग्यप्रपञ्चः प्रकरणस्य स्फुटत्वात् झटिति ज्ञातेषु विभावादिषु सहृदयैरतिसूक्ष्मेणैव कालेनास्वाद्यते इति (वाच्यानां) विभावानुभावव्यभिचारिणां हेतूनां व्यङ्ग्यानां रसादीनां हेतुमतां पूर्वापरीभावस्यानाकलनाद् अलक्ष्यक्रमो व्यवह्रियते। परं यत्र प्रकरणमस्फुटं विचारवेद्यं विभावादयो वा अनुक्तत्वादुन्नेयाः सन्ति तत्र कारणानां विभावादीनां विलम्बेन रसादिप्रतीतावपि विलम्बात् तदधीनं चमत्कृतेर्मान्थर्यमिति संल्लक्ष्यक्रमोऽप्येष भवति। यथा–

**तल्पगतापि च सुतनुः श्वासासङ्गं न या सेहे।**
**सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति।।**

(र०गं० १/४)

इत्यत्र "सम्प्रति" पदस्यार्थः प्रकरणज्ञानाधीन इति विलम्बेन ज्ञायते "या नववधूपर्यङ्कशयिता श्वासस्यासङ्गमात्रेण सङ्कुचदङ्गलतिकाभूत् सा हृदयगतं प्रियपाणिं नववधूस्वभावादाक्षिपति परं मन्दम्। तत्र मन्दाक्षेपे कारणं तावन्न स्फुटीभवति यावत् सम्प्रति शब्दस्यार्थो नावगम्यते, सम्प्रति शब्दस्यार्थप्रतीतिस्तु प्रकरणात् जायते, प्रकरणं च प्रियप्रवासस्य, अतः सम्प्रति शब्दास्यार्थः प्रस्थानपूर्वरजन्यामिति ज्ञातेन मन्दाक्षेपे कारणं स्फुटीभवति प्रवत्स्यत्पतिकायाः सत्वरभाविप्रियवियोगभयमेवेति प्रकरणज्ञानधीनरतिज्ञानमान्थर्यादत्र संल्लक्ष्यक्रमः। रसादयोऽलक्ष्यक्रमा एवेत्यत्र न सहृदयानुभवः प्रमाणम्। अत एव ध्वन्यालोककारा आनन्दवर्धनाचार्याः लक्ष्यक्रमप्रसङ्गे–

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।**
**लीलाकमलपत्राणि गणयामास पार्वती।।**

(कुमारसं०, ६/८४)

इति पद्ये वर्णितमधोमुखत्वविशिष्टं लीलाकमलपत्रगणनं कुमारीस्वभावादपि सम्भवति, अतो नारद–(वस्तुतः अङ्गिरः)कृत-विवाहवार्तारूपप्रकरणविज्ञानोत्तरमीषद् विलम्बेन ज्ञातायां चमत्कारिण्यां क्रीडायां क्रमस्य लक्ष्यतया संल्लक्ष्यक्रमोऽयं भावध्वनिरित्याहुः। तत्रैवाभिनवगुप्तपादाचार्या अपि– "रसभावादिरर्थो ध्वन्यमान एव न वाच्यः, तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः इत्याहुः"।

परं यदि रसादयः संल्लक्ष्यक्रमाः स्युस्तदा अर्थशक्त्युद्भावानुरणनरूपव्यङ्ग्यस्य भेदगणनायामभिनवगुप्तपादाचार्या आहुर्यत्— व्यञ्जकोऽर्थः स्वतःसम्भवी, कविप्रौढोक्तिनिष्पन्नः, कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्न इति त्रिविधः। त्रिविधोऽपि वस्त्वलङ्कारभेदात् षड्विधः। षड्भिर्व्यञ्जकैरभिव्यज्यमानोऽर्थो वस्त्वलङ्काररूपतया द्विविध इति द्वादशविध इति। यदि रसादिरूपोऽर्थोऽपि संल्लक्ष्यक्रमः स्यात् तदा वस्त्वलङ्कारयोरिव रसादेरप्यभिव्यञ्जनादष्टादशभेदाः स्युस्ते कथं न गणितेति?

अत्रोच्यते— स्फुटैर्विभावानुभावसञ्चारिभिरलक्ष्यक्रमतया व्यज्यमानो रत्यादिः स्थायिभावो रसीभवति। झटिति जायमानालौकिकचमत्कारविषयस्थायित्वं हि रसीभावः। संल्लक्ष्यक्रमतया व्यज्यमानो रत्यादिर्न रसोऽपि तु वस्तुमात्रमतो, वस्तुनोऽलङ्कारस्य च प्रत्येकस्य षड्विधत्वाद् द्वादशविधत्वमेवेति तेषामभिप्रायोऽतो न विरोधः। इत्थं प्राचीनाचार्याणामभिप्रायं प्रकाश्य पण्डितराज आह– "उपपत्तिस्त्वस्मिन्नर्थे विचारणीया" इति। अर्थात् पूर्वमभिनवगुप्तपादाचार्या आहुर्यद् रसभावादिरर्थो

हि ध्वन्यमान एव न वाच्यः, तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः''। अस्याभिप्रायो यद्रसः संल्लक्ष्यक्रमोऽपि भवति। परं संल्लक्ष्यक्रमतायामर्थशक्त्युद्भवस्याष्टादशत्वप्रसक्तौ संल्लक्ष्यक्रमताया वस्तुमात्रत्वमित्यर्थे उपपत्तिश्चिन्तनीयेति। ''रसभावादिरर्थः'' इत्यत्र रसादिशब्दो रत्यादिस्थायिभावपरः''। इत्याह पण्डितराजः। (र०गं०, पृ० १३९४-९९)

उपपत्तिश्चिन्तनीयेत्यत्र नागेशभट्टा आहुः- ''विभावादिप्रतीते रसप्रतीतेश्च सूक्ष्मकालान्तरत्वरूपस्य क्रमस्य सहृदयाकलनेन तस्य विगलितवेद्यान्तरत्वानापत्या रसत्वभङ्गापत्तिः। विगलितवेद्यान्तरत्वं च सकलसहृदयसाक्षिकमिति तवापि सम्मतम्। इति तदुपपत्तिर्ज्ञेयेति। (गु०म०प्र०, पृ० १६७-१६८)

अर्थाद् विभावादय एव न रसा अपि तु रसस्तैरिति क्रमस्त्ववश्यं भावी, परमतिसूक्ष्मतयाऽसौ न संल्लक्ष्यते। रसश्च वेद्यान्तरस्पर्शशून्यः। यदि विभावादिप्रतीत्यनन्तरं मनाग् जातं विलम्बं सहृदया आकलयन्ति तदा विगलितवेद्यान्तरता रसस्य नोपपद्यते। रसश्च वेद्यान्तरस्पर्शशून्य एव। वेद्यान्तरप्रतीतौ न रसोऽपि तु वस्तुमात्रमित्येषोपपत्तिः।

## अत्र नव्यानां मतम्

नव्यास्तु— आर्थ्यां व्यञ्जनायां वक्तृबोद्धव्यप्रकरणादिज्ञान-वैशिष्ट्यादेव प्रतिभाशालिनां व्यङ्ग्यार्थधीः सम्पद्यते। अतः प्रकरणादिसहकृतविभावादिज्ञानोत्तरं रसप्रतीतिर्जायते। प्रकरणदिज्ञानविलम्बेन विभावादिज्ञानविलम्बेऽपि न संल्लक्ष्यक्रमत्वम्। विभावादिज्ञानानन्तरं रसीभावे विलम्बाभावात्। प्रकरणज्ञानं रसीभावेनापेक्षितम्। अत एवार्थशक्तिमूलस्य द्वादशभेदा गणिताः। इत्युपपाद्याग्रे बभाषिरे यत्- ''यत्किञ्चिद् वाच्यार्थाऽपेक्षया क्रमोऽपि गृह्यत इत्यभिप्रेत्य लक्ष्यक्रमत्वोक्तिर्यथाकथञ्चिन्नेया, नहि विभावादिप्रतीतिरहितयत्किञ्चिद्वाक्यार्थमात्रप्रतीतौ विगलितवेद्यान्तरता सहृदयानुभव-साक्षिका। येन तत्क्रमग्रहणेऽपि रसत्वहानिः स्यादित्याहुः। (गु०म०प्र०, पृ० १६८)

## आनन्दवर्धनाचार्यमतम्

ध्वनिकारोऽर्थशक्त्युद्भवं ध्वनिम्—

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते।**
**यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः।।**

(ध्वन्या० २/२२)

इति संल्लक्ष्योदाजहार।

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।**
**लीलाकमलपत्राणि गणयामास पार्वती।।**

(ध्वन्या०, पृ० २/२४८)

अत्र लीलाकमलपत्रगणनरूपोऽर्थ आत्मानमुपसर्जनीकृत्याभिधारूपं शब्दव्यापारं विनैव लज्जारूपं व्यभिचारिभावमभिव्यनक्ति। परं व्यभिचारिभावोऽपि भाव एव, तत्पूर्वमुक्तम्

**''रसभावतदाभासभावशान्त्यादिरक्रमः''**। इति २/३)

अत्र संल्लक्ष्यक्रमं उदाहरन् भवान् पूर्वापरविरुद्धमभिधत्ते। इति शङ्कायामाह— न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव विषयः। यत्र साक्षात् शब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स सर्वोऽसंल्लक्ष्यक्रमस्य विषयः। यथा—

'वसन्तपुष्पाभरणं वहन्ती' इत्यादौ। अत्र तु सामर्थ्याक्षिप्त-व्यभिचारिमुखेन रसप्रतीतिः। तस्मादयमन्यो ध्वनेः प्रकारः (ध्वन्या०, पृ० २/२४९) इति।

**अत्राभिनवगुप्तपादाः**

''एतदुक्तं भवति'' यद्यपि रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि, तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः। यत्र हि विभावानुभावेभ्यः स्थायिगतेभ्यो व्यभिचारिगतेभ्यश्च पूर्णेभ्यो झटित्येव रसव्यक्तिस्तत्राऽस्त्व-लक्ष्यक्रमः— इह तु पद्मदलगणनमधोमुखत्वं चान्यथापि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां विश्रमयति हृदयम्, अपि तु प्राग्वृत्ततपश्चर्यादि-वृत्तान्तानुस्मरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव। रसस्त्वत्रापि दूरत एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षया लक्ष्यक्रमतैव। लज्जापेक्षया तु तत्र लक्ष्यक्रमत्वमिति। (ध्वन्यालोकलोचने २/२४८–५०)

**विमर्शः**

वस्तुतः सर्वैराचार्यैः रसभावादिध्वनीनामक्रमतयैव वर्णनं कृतम्, आनन्दवर्धनोऽपि तथैवोचे। परमत्र संल्लक्ष्यक्रमता यदुक्ता तद् न भावध्वनिमङ्गीकृत्य, अपि तु वस्तुध्वनित्वमिति। तथा हि ध्वनिकारः ''तस्मादन्योऽयं ध्वनेः प्रकारः'' इति यदाह तस्यायं भावः। यत्र लक्ष्यक्रमतया रसादीनां रत्यादिनां (रस्यते आस्वाद्यत इति रसः रत्यादिस्थायिभावः) प्रतीतिः स अन्यः – रसादिध्वनेरन्यः संल्लक्ष्यक्रमरूपो वस्तुध्वनेः प्रकार इति। अत

एवाभिनवगुप्तपादाचार्यः लज्जारूपव्यभिचारिणि व्यङ्ग्ये सँल्लक्ष्यक्रमतामुक्त्वापि "रसस्तु व्यभिचारिस्वरूपे पर्यालोच्यमाने भाति", तदपेक्षया लक्ष्यक्रमतामाह। अत एवार्थशक्त्युद्भवस्य द्वादशविधत्वमुपपद्यत इति पण्डितराजोऽपि समर्थयत्येवेति।

## गुणनिरूपणम्

तत्र मम्मटाचार्यः काव्यात्मनो रसस्योत्कर्षाधायकान् गुणान् निरूपयन्नाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।।**

(का०प्र०८/८७)

अयं भावः – अङ्गिनो रसस्येत्युक्त्या काव्यस्य अङ्गी (आत्मा) रसः, शब्दार्थौ अङ्गभूतौ शरीरभूतावित्यवसीयते। आत्मनः जीवात्मनो यथा शौर्यादयो धर्माः नाचेतनस्य शरीरस्य तथा काव्यात्मनो रसस्य ये धर्मास्ते गुणाः। अर्थाद् रसस्य धर्मा गुणाः, इति फलितम्। परमिदं लक्षणं रसधर्मेषु रसत्वे रसदोषेषु स्थायिषु चातिव्याप्तम्। अतस्तन्निराकृतये उत्कर्ष हेतव इति विशेषणम्। एवं रसधर्मत्वे सति रसोत्कर्षकत्वं गुणत्वमिति फलितम्। परं परम्परया रसधर्मेषु रसोत्कर्षकेष्वलङ्कारेष्वतिव्याप्तिवारणाय "अचलस्थितय" इति अचला नियता स्थितिर्येषान्ते अचलस्थितयः अव्यभिचारिस्थितय इति। अतः

(१) रसोत्कर्षकत्वे सति रसधर्मत्वम्।
(२) रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वम्।
(३) नियमेन रसोपकारकत्वम्।

इति लक्षणत्रयं फलितम्। अतो नीरसेष्वपि सत्स्वलङ्कारेषु नातिव्याप्तिः।

ते च गुणास्त्रय एव– माधुर्यौजः प्रसादाः न दश इति। निरूप्य वामनोक्तदशशब्दगुणानां दशार्थगुणानां केषाञ्चिदुक्तगुणेष्वन्तर्भावम्, केषाञ्चिद्दोषाभावमात्रताम्, केषाञ्चिद् दोषरूपतां च निरूप्य गुणानां त्रित्वं निरधार्षीत्" एवं गुणानां संख्यां निरूप्य तत्स्वरूपं चाह। तथा हि–

**"आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्"।**
**"दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति"।**
**"शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः"।**
**व्याप्नोत्यन्यत्रप्रसादोऽसौ सर्वत्र विहितस्थितिः।।**

(का०प्र०, ८/९०/९४)

अर्थाद् रसास्वादेन सहृदयानां चेतसः तिस्रोऽवस्थाः जायन्ते— द्रुतिः दीप्तिः, विकासश्चेति। तत्र शृङ्गारकरुणशान्तरसास्वादाच्चेतसि द्रुतिर्जायते। अतो द्रुतिजनकाह्लादकत्वमेषु रसेषु वर्तते। तदेव माधुर्यगुणः। एवं वीरवीभत्सरौद्ररसचर्वणया चित्ते विस्तृतिर्जायते। अत एषु रसेषु चित्तविस्तृतिजनकदीप्तित्वं वर्तते। तदेवौजोगुणः। एवं हास्याद्भुतभयानकादिरसास्वादेन चित्तस्य विकासो जायते। अत एषु रसेषु चित्तविकासहेतुः झटिति चित्तव्यापनरूपविकासो गुणः।

इमे गुणाः शब्दार्थरचनाधर्मा न सन्ति। रसविरुद्धवर्णरचनादिभिरुक्ताश्चित्तवृत्तयो न जायन्ते। रसानुकूलवर्णरचनादिभिरेव जायन्ते। अतो रसधर्मा इति। एवं सति शब्दो मधुरः, रचना मधुरेत्यादिव्यवहारो भाक्तः।

काव्ये गुणानामचलस्थितिः वर्तते। वामनेनाप्युक्तम्—

**युवतेरिव रूपमङ्गकाव्यं स्वदते शुद्धगुणं तदप्यतीव।**
**विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः।।**

(काव्यालङ्कार सू० ३/१)

**अच्युतरायश्च**

**अलङ्कारविहीनोऽपि सुदृक् सौभाग्यकृद्गुणः।**
**गुणहीनमलङ्कारसहस्रमपि किं तथा।।**
**अलङ्काराः गुणेष्वेव ग्रथ्यन्ते प्रायशो भुवि।**
**गुणेभ्योऽतः पृथक्त्वेन प्रगल्भानां न तद्ग्रहः।।**

(सा०सा०, १/२१)

गुणविषये प्रायो मम्मटाचार्यमेवानुसरति पण्डितराजः। वामनोक्तानां दश शब्दगुणानां दश चार्थगुणानां तद्रीत्यैव माधुर्यौजःप्रसादेषु त्रिषु गुणेष्वन्तर्भावः कियतामकृत। कियन्तो दोषाभावरूपाः कियन्तोऽलङ्काररूपा अपरे ध्वनिरूपा कश्चन् कविगुणः कियन्तस्तु दोषा एव न गुणा इत्युपपाद्य, मम्मटाचार्यमेव समर्थयाञ्चक्रे।

**मतभेदः**

केवलमाश्रयविषये लक्ष्यते मतभेदः तद्यथा—मम्मटाचार्याः गुणान् रसधर्मान् साक्षात् सम्बन्धेन रसाश्रितान् परम्परया शब्दार्थरचनाधर्मानाहुः। यदुक्तम्—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।।** इति।

कारिकयाऽनया आत्मनः शौर्यादय इव काव्यत्मभूतस्य रसस्य धर्मा गुणा अचलस्थितयो नियमेनोत्कर्षाधायकाः गुणाः इत्याहुः। शब्दार्थौ सगुणौ रचना मधुरेत्यादिव्यवहारस्तु भाक्तो यदुक्तं

**''गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता''।** इति।

परं पण्डितराजो गुणान् साक्षादेव शब्दार्थरसरचनाश्रितान् निरूपायाञ्चक्रे।

तत्रायमभिसन्धिः – द्रुतिदीप्तिविकासाख्यचित्तवृत्तीनां साक्षाज्जनिका तु तत्तद् गुणविशिष्टरसचर्वणैव। परं गुणास्तासां प्रयोजकाः सन्ति न जनकाः। तथा हि माधुर्यगुणविशिष्टकरुण–शान्त–शृङ्गाररस-चर्वणाजन्यायाश्चित्तद्रुतेः प्रयोजकं माधुर्यम्। एवमोजोगुणविशिष्टवीर–बीभत्सरौद्ररसचर्वणाजन्याया दीप्तेः प्रयोजकमोजः। तथा प्रसादगुणविशिष्टाद्भुत–हास्य–भयानकरसानां सर्वरसानां च चर्वणाजन्यस्य विकासस्य प्रयोजकः प्रसादगुण इति।

इत्थं गुणा रसमात्रधर्माः सन्ति, ''मधुरा रचना'' ''ओजस्वी बन्ध'' इत्यादिव्यवहारस्तु आकारोऽस्य शूर इति व्यवहारवदौपचारिकः (भाक्तः) निश्चितो मम्मटादिमते। परं पण्डितराजः पृच्छति गुणानां रसमात्रधर्मत्वे किं प्रमाणम्?

प्रत्यक्षं प्रमाणं तु वक्तुं न शक्यते, अग्नेः कार्यं दाहादि, गुणश्च उष्णस्पर्शः। अग्निरिन्धनं दहति तस्योष्णतामनुभवन्ति पार्श्ववर्तिन इति तयोः पृथगुपलब्धिर्यथा तथा रसकार्येभ्यो द्रुति–दीप्ति–विकासेभ्यः पृथग् रसगुणानामनुपलब्धेः।

अनुमानमपि न मानम्। तथा हि— द्रुत्यादिचित्तवृत्तीनां कार्याणां कारणानि तत्तद्गुणविशिष्टा रसा एव। अतो– ''दुत्यादिनिष्ठकार्यतानिरूपिता रसनिष्ठाकारणता किञ्चिद् धर्मावच्छिन्ना कारणतात्वात् (या या कारणता सा सा किञ्चिद् धर्मावच्छिन्ना) घटनिष्ठकार्यतानिरूपिता दण्डनिष्ठकारणावत्, इत्याकारेणानुमानेन कारणाताऽवच्छेदकतया रसवृत्तीनां गुणानामनुमानमित्यपि न वाच्यम्, क्लृप्तशृङ्गारत्वादिविशेषधर्माणामेव कारणताऽवच्छेदकताऽङ्गीकारे लाघवात् गुणानां रसवृत्तिकारणताया अवच्छेदकत्वकल्पने गौरवात्।

न च प्रातिस्विकरूपेण (स्वं स्वं प्रति प्रतिस्वं, प्रतिस्वं भवं प्रातिस्विकं तेन रूपेण विशेषरूपेण) कारणताकल्पने गौरवं तथा हि शृङ्गारः द्रुतिकारणम्, करुणः द्रुतिकारणम्, शान्तः द्रुतिकारणमिति त्रयः कार्यकारणभावाः।

एवं वीरः दीप्तिकारण्। बीभत्सः दीप्तिकारणम्। रौद्रः दीप्तिकारणमिति त्रयः। एवं विकासस्यापि क्रमशः अद्भुत–हास्य-भयानकानां कारणतेति त्रय इति सङ्कलनया नव कार्यकारणभावाः। अतो गौरवम्। सामान्यरूपेण (माधुर्यादिगुणविशिष्टतया) कारणताकल्पने द्रुतिं प्रति माधुर्यविशिष्टाः शृङ्गारकरुणशान्ताः कारणानि, एवं दीप्तिं प्रति ओजोविशिष्टा वीर–बीभत्स–रौद्राः कारणानि, तथा विकासं प्रति प्रसादविशिष्टा अद्भुतहास्यभयानकाः कारणानि इति त्रय एव कार्यकारणभावा, अतो लाघवम्। कारणताऽवच्छेदकतया गुणानां रसवृत्तिताऽपि सेत्स्यतीति वाच्यम्।

सामान्येन माधुर्यवत्त्वेन कारणताकल्पने एव गौरवात्। तथा हि—

**''करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।**
**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति।**
**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु''।।**

इति सूत्रस्य "क्रमेण" इत्यस्य पूर्वसूत्रेऽपकर्षेणायमर्थो निष्पद्यते यत् सम्भोगशृङ्गारे यन्माधुर्यं तदपेक्षयाऽधिकं करुणे ततोऽप्यतिशयितं विप्रलम्भे तेभ्योऽतिशयं शान्ते। उत्तरोत्तरमतिशयितां चित्तद्रुतिं जनयन्ति। क्रमेणेत्यस्यानपकर्षे संयोगशृङ्गारात् करुण–विप्रलम्भ-शान्तेष्वतिशायितं माधुर्यमित्यर्थः। एवं उत्तरसूत्रस्यापि ज्ञेयम्। एवं कार्यं त्रिविधं सम्पन्नं, द्रुतिः, अतिद्रुतिः, अतितमां द्रुतिरिति। एवं दीप्तिविकासयोरपि त्रैविध्यमित्थं सङ्कलनेन नवविधत्वम्। एवं कार्यभेदात् कारणस्यापि भेदः कल्पनीयः। एवं द्रुतिं प्रति माधुर्यवत्सम्भोगशृङ्गारः कारणम्। अतिद्रुतिं प्रति नितरां माधुर्यवत्करुणविप्रलम्भौ च कारणमतितमां द्रुतिं प्रति नितमां माधुर्यवद्विप्रलम्भः कारणमिति त्रयः कार्यकारणभावाः। एवं दीप्तिविकासयोः प्रत्येकं त्रयस्त्रय इति सङ्कलनया नवकार्यकारणभावाः। सामान्येन पूर्वोक्ताश्च त्रय इति द्वादशकार्यकारणभावकल्पने भवन्मते गौरवात्। प्रातिस्विकरूपेण कार्यकारणभावस्वीकारे नवैवेति लाघवात्। न च सामान्येन कार्यकारणभावकल्पने गुणसिद्धिरूपफलसत्त्वात् फलमुखगौरवं न दोषायेति वाच्यम्। वेदान्तिभिरात्मा निर्गुण इत्युपपादितकाव्यात्मनो रसस्याऽपि निर्गुणत्वस्यैवोपपन्नत्वात्।

न च माधुर्यादीनां रसवृत्तित्वाभावेऽपि रसोपाधीनां स्थायिभावानां रत्य़ादीनामेव गुणत्वमस्त्विति वाच्यम्, मानाभावात्। रत्यादे: सुखरूपत्वाऽङ्गीकारे गुणरूपत्वाद् गुणे गुणानङ्गीकारात्। एवं शृङ्गारादिषु माधुर्यादिगुणानङ्गीकारे शृङ्गारो मधुर इति व्यवहार: कथमिति वाच्यम्। (वाजिगन्धोष्णा'' इतिवद् व्यवहाराक्षते:। यथा वाजिगन्धायां तात्कालिकोष्णत्वाभावेऽपि उष्णताया प्रयोजकत्वाद् वाजिगन्धोष्णेति व्यवहारस्तथैव द्रुत्यादिचित्तवृत्तिप्रयोजकतया व्यवहार: सिद्ध:। द्रुत्यादिचित्तवृत्तिप्रयोजकत्वम्, अथवा प्रयोजकतासम्बन्धेन द्रुत्यादिकमेव माधुर्यादिकमिति। द्रुतिदीप्तिविकासरूपचित्तवृत्तीनां प्रयोजकतासम्बन्धेन द्रुत्यादयों रसे) इति परम्परया व्यवहारात्। न च द्रुत्यादे: प्रयोजकता सम्बन्धो न वृत्तितानियामक इति कथम्, शृङ्गारो मधुर इति व्यवहार:। इदं प्रयोजकत्वं कार्यमात्रप्रयोजकं यददृष्टकालेश्वरेच्छादिकं तद्भिन्नं ग्राह्यम्। एवं च द्रुत्यादिप्रयोजका यथा रसास्तथा शब्दार्थरचनादयोऽपि। एवं शब्दो मधुर:, रचना मधुरा, ओजस्वी बन्ध इत्यादि व्यवहारे भक्तिर्नैव कल्पनीया इति।

## विमर्श:

परमत्र शास्त्रीयकौशलं प्रदर्शयता पण्डितराजेन किमपि नवीनं नोद्भावितम्। मतेऽस्य द्रुतिदीप्तिविकासाख्यचित्तवृत्तिरूपा एव माधुर्यादयो गुणा: सन्ति।

विश्वनाथेन पूर्वमेवोपपादितमिदम्। गुणा शब्दार्थधर्मा इति वामनादयो निरूपयन्त्येव। परं विवेचनं परीक्षणीयम्–

पण्डितराज: कथयति रसमात्रधर्मत्वे किं मानम्? वयं ब्रूम: आप्तानन्दवर्धनाचार्योक्तिरेव मानम् (शब्दप्रमाणम्)।

यदुक्तं तेन—

**''तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृता।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्या कटकादिवत्''।।**

अपि च– अनुमानमपि प्रमाणम्, भवता प्रातिस्विकरूपेण कारणताकल्पने लाघवमुपपाद्यते। परं यथा सामान्यरूपेण माधुर्यादिवत्त्वेन कल्पने गौरवम्, तथैव भवतामपि मते वक्तव्यम्। तथा हि— सम्भोगशृङ्गारापेक्षया यदि करुणे तदपेक्षया विप्रलम्भ-शान्तयोरतिशयिता द्रुतिजनकता तदा करुणे नितरां विप्रलम्भशान्तयोर्नितमाम्।

ध्वनिसम्प्रदायानुयायिनो भवतो ध्वनिकार एव प्रमाणम्। अपि च पूर्वं भवता काव्यात्मनो रसस्य निर्गुणत्वमुपपादयताऽनुपदमेव नवीनमते वर्णरचानानां माधुर्यादि-गुणाभिव्यञ्जकत्वमेव न रसाभिव्यञ्जकत्वमिति निरूपयता यदुक्तम्—

"न हि गुण्यभिव्यञ्जनं विना गुणाभिव्यञ्जकत्वं नास्तीत्यस्ति नियमः, इन्द्रियत्रये व्यभिचारात्" इति तत्कथं सङ्गच्छते।

तस्यायमभिप्रायः — गुणी रसस्तस्याभिव्यञ्जनं विना माधुर्यादि-गुणाभिव्यञ्जनं भवितुमर्हतीति नास्ति नियमः। यतो हि– घ्राण–रसन–श्रोत्रेन्द्रियाणां क्रमशः गुणवतां पृथ्वी–जल–गगनानां प्रकाशकत्वमन्तराऽपि गन्ध–रस–शब्द–गुणानां प्रकाशकत्वम्। रसस्य गुणवत्वाङ्गीकारमन्तरेयमुक्तिर्न सङ्घटत इति पूर्वापरविरुद्धाऽभिधानमेव। शब्दार्थरचनासु भवताऽपि प्रयोजकतासम्बन्धेनैव गुणाः स्वीक्रियन्ते न साक्षात्(समवाय)सम्बन्धेन। मम्मटेनाऽपि स्वाश्रयाभिव्यञ्जकत्व(व्यञ्जकता)सम्बन्धेन स्वीक्रियत इति समानमेव।



# अथ चतुर्थोऽध्यायः
# ध्वनिभेदविमर्शात्मकः
## ध्वनिभेदाः

### मम्मटमते

ध्वनिस्तावद् द्विविधः – लक्षणामूलोऽभिधामूलश्च। लक्षणामूलश्च द्विविधः- अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च। अभिधामूलश्च द्विविधः – असँल्लक्ष्यक्रमव्यङ्ग्यः, सँल्लक्ष्यक्रमव्यङ्ग्यश्च। असँल्लक्ष्यक्रमश्च रसादिरूप एकविध एव। संलक्ष्यक्रमश्च त्रिविधः – शब्दशक्त्युद्भवः, अर्थशक्त्युद्भवः उभयशक्त्युद्भवश्च। तत्र शब्दशक्त्युद्भवो द्विविधः – वस्तुरूपः अलङ्काररूपश्च। अर्थशक्त्युद्भवः द्वादशविधः तथाहि– व्यञ्जकोऽर्थस्त्रिविधः, स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धः। त्रिविधोऽपि वस्त्वलङ्कृतिभेदात् द्विविध इति षड्विधः। षड्विधोऽप्यसौ क्वचिद् वस्तुरूपं क्वचिद् अलङ्काररूपमर्थं व्यनक्ति, इति द्वादशविधः। उभयशक्त्युद्भवः एकविध एवेति सङ्कलनयाऽष्टादशविधः। तत्रोभयशक्त्युद्भवं परित्यज्यान्ये सप्तदशभेदाः पद–वाक्यगतत्वेन द्विविधा इति पञ्चत्रिंशत्। अर्थशक्त्युद्भवो द्वादशविधः प्रबन्धेऽपि भवतीति द्वादशविधानां पुनः, सङ्कलनेन सप्तचत्वारिंशत्। रसादिरूपाऽसंल्लक्ष्यक्रमस्य (पदैकदेशवर्ण–रचना–प्रबन्धगतत्वेन) चत्वारः भेदा अपरेऽपीति सङ्कलिता एकपञ्चाशद् भेदाः। एवमेतेषामन्योन्यं, सन्देह–अङ्गाङ्गिभावैकाश्रयानुप्रवेशरूपभेदात् त्रिविधसङ्करैणैकविधसंसृष्ट्या च गुणनेन– ५१ × ५१ = २६०१, २६०१ × ४ = १०४०४ पुनः ५१ शुद्धभेदैः सह सङ्कलनेन १०४५५ इति भेदाः सन्ति।

### पण्डितराजमते

ध्वनिभेदाः — ध्वनिर्द्विविधः, अभिधामूलो लक्षणामूलश्च। तत्राभिधामूलस्त्रिविधः, रसवस्त्वङ्कारध्वनिभेदात्। रसध्वनिरसंल्लक्ष्यक्रम-मात्रस्योपलक्षणम्। लक्षणामूलश्च द्विविधः अर्थान्तरसङ्क्रमितवाच्योऽत्यन्त-तिरस्कृतवाच्यश्च। सङ्कलनेन पञ्चविधः। संल्लक्ष्यक्रमध्वनिश्च द्विविधः– शब्दशक्तिमूलः, अर्थशक्तिमूलश्च। शब्दशक्त्युद्भवो द्विविधः, वस्त्वलङ्काध्वनिभेदात्। अर्थशक्त्युद्भश्चाष्टविधः। तथा हि— व्यञ्जकोऽर्थो द्विविधः वस्तुरूपोऽलङ्काररूपश्च। द्विविधोऽपि–स्वतःसम्भवी,

प्रतिभामात्रनिवर्तितभेदात् पुनर्द्विविध इति चतुर्विधः, चतुर्विधैरपि तैर्वस्त्वलङ्काररूपोऽर्थो व्यज्यते इत्यष्टविधः। एवं सङ्कलनया दशविधः, तत्र रसादेश्च पद-पदांश-वाक्य-वर्णरचनाप्रबन्धानां व्यञ्जकानां भेदाद् यद्यपि षड्विधत्वं रसस्य, तथापि वर्ण-रचनाविशेषाणां माधुर्यादिगुणव्यञ्जकतैव युक्ता न रसव्यञ्जकतेति चत्वार एव व्यञ्जका इति व्यञ्जकभेदात् रसध्वनेश्चतुर्विधत्वम्। एवं लक्षणामूलो द्विविधः, शब्दशक्त्यद्भवोऽपि द्विविधः, अर्थशक्तिमूलश्चाष्टविधः, उभयशक्तिमूल एकविधः। एवं त्रयोदशभेदाः। तेषूभयशक्त्युद्भव एकविध एव वाक्यगतः। अवशिष्टा द्वादशभेदा पदवाक्यगतत्वेन द्विविध इति चतुर्विंशतिभेदाः। रसादिध्वनिश्चतुर्विध इत्येकोनत्रिंशद् भेदाः। सङ्करभेदा पण्डितराजेन न गणितास्तथापि प्रतीयते तत्राप्यभिमतिर्यदुक्तम्—

"**व्यङ्ग्यभेदे एव सङ्करस्येष्टेः**"। इति।

(रसगङ्गाधर, द्वि०आ०११६)

अन्ये भेदा उपलभ्यमानग्रन्थे नोपलभ्यन्ते।

**मतभेदः**

मम्मटः शुद्धभेदानेकपञ्चाशतं स्वीकरोति, पण्डितराज एकोनत्रिंशदिति।

**विमर्शः**

पण्डितराजमतेऽर्थशक्तिमूले चतुर्णां न्यूनता, तेषां पद-वाक्य-गतत्वेऽष्टानां न्यूनता, प्रबन्धगतभेदानोक्ता इति द्वादशानां योगेन विंशतेः भेदानां न्यूनता। रसध्वनौ द्वयोरिति द्वाविंशतेः भेदानां न्यूनता। अत्र केचन उभयशक्त्युद्भवध्वनिप्रभेदेऽपि पण्डितराजस्यारुचिमभिदधते "अन्ये तु" रीत्योपपादितम्- (र०ग०, ११८पृ०)।

- मतं समीक्ष्य। परमनुपदमेवोक्तं पण्डितराजेनोभयशक्त्युद्भवस्य ध्वनित्वम्' तदेवमेते प्रागुक्ता द्व्युत्थातिरिक्ताः सर्वेऽपि ध्वनय एकस्मिन् वाच्ये यद्येकपदगतास्तदा पदध्वनितया व्यपदिश्यन्ते"। (र०ग०, द्वि०आ० पृ० १२२)

अर्थाद् द्व्युत्था न पदध्वनितया व्यपदिश्यन्ते, प्रत्युत वाक्यध्वनितयेति।

यदि सङ्करोऽपीष्टस्तदा स्वस्य स्वेन साङ्कर्ये, पुनस्त्रिविधसङ्करेणैकया संसृष्ट्या च गुणने—

२९ × २९ = ८४१ × ४ = ३३६४ भेदाः।

शुद्धैः– एकोनत्रिंशद् भेदैः सह सङ्कलनेन—

३३६४ + २९ = ३३९३ भेदाः सम्भवन्तीति।

## वर्णानामलक्ष्यक्रमस्य व्यञ्जकत्वे मतभेदविमर्शः

पण्डितराजः प्राचीनमते पद–पदैकदेश–वर्ण–रचना–वाक्यप्रबन्धानामवर्णात्मिकानां च रागादीनां रसादिध्वनिप्रपञ्चस्य व्यञ्जकत्वमुपपाद्य रचनावर्णविषये आह—रचनावर्णाश्च पदवाक्यान्तर्गताः पदानि वाक्यानि च व्यञ्जकानि, व्यञ्जकता पदेषु वाक्येषु व्यञ्जकतावच्छेदकाश्च वर्णाः रचना चेति वक्तुं युक्तं तथापि तद्वाक्यविशिष्टवर्णत्वेन रचनात्वेन कारणता, उत वर्णरचनाविशिष्टपदवाक्यत्वेनेति जिज्ञासायामेकतरपक्षपाति-युक्तेरभावाद् वर्णेषु रचनासु च, पदेषु वाक्येषु च प्रत्येकपर्याप्त्या व्यञ्जकतायाः सिद्धिर्यथा घटं प्रति दण्डविशिष्टचक्रादेः कारणता, उत चक्रादिविशिष्टदण्डस्येत्यत्र विनिगमकाभावात् प्रत्येकं पर्याप्त्या घटनिरूपितकारणता स्वीक्रियते तथैवाऽत्रापि, इति प्राचीनानां मतम्।

नवीनाश्च (पण्डितराजाश्च) वर्णानां रचनानां च माधुर्यादिगुणाभिव्यञ्जकत्वमेवाङ्गीकुर्वन्ति, न रसादिव्यञ्जकत्वम्। व्यञ्जकाधिक्यप्रयुक्तगौरवात्। फलमुखगौरवं न दोषायेति शङ्कायामाह मानाभावात्।

न च वर्णरचनाश्च यदा गुणाभिव्यञ्जकास्तदा गुणाश्रयरसानामपि व्यञ्जकता तेषां स्वतः सिद्धा; गुणिनो व्यञ्जकतां विना गुणाभिव्यञ्जकत्वानुपपत्तेरिति वाच्यम्। गुणिनो व्यञ्जकतां विना गुणाभिव्यञ्जकता नास्तीति नियमाभावात्, इन्द्रियत्रये व्यभिचारात्। तथा हि घ्राणेन्द्रियं गन्धवत्याः पृथिव्या व्यञ्जकं विनैव गन्धगुणस्य व्यञ्जकम्। एवं रसनेन्द्रियं श्रोत्रेन्द्रियं च रसवतो जलस्य शब्दाश्रयस्याकाशस्याभिव्यञ्जकं विनैव रसशब्दगुणाभिव्यञ्जके इति। इत्थं रसाभिव्यञ्जनं विनैव वर्णरचनानां माधुर्यादिगुणाभिव्यञ्जकत्वं निष्पन्नम्। एवं यथा तत्तद्व्यञ्जकैरुपनीताः कदाचित् पृथक् कदाचिद् गुणाः, गुणिनः, उदासीनाश्च परस्परं सम्मिलिताः कदाचित् पृथक् उदासीनतया प्रमितिविषयतां यान्ति तथा वर्णाः रचनाश्च कदाचिद् गुणविशिष्टानां रसानां मिलितत्वेन कदाचिद् गुणानां केवलनामभिव्यक्तिं कुर्वन्तीति तु नव्या इत्यूचे।

मम्मटश्च— "पदैक देशरचना वर्णेष्वपि रसादयः"। इत्युक्त्या वर्णरचनयोरपि रसव्यञ्जकत्वमुपपादयाञ्चक्रे। परमुदाहरणप्रसङ्गे वर्णरचनानां

व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते'' (का०प्र०, पृ० ४/१८५) इति प्रतिजज्ञे।

तस्यायमभिप्रायः – वर्णरसवृत्तीनां माधुर्यादिगुणानां व्यञ्जकाः, अतो गुणज्ञाने सत्येव वर्णानां रसव्यञ्जकत्वसम्भवोऽतोऽष्टमोल्लासे गुणनिरूपणावसरे उदाहरिष्यत इति। अष्टमे च ''वर्णाः समासो रचना तेषां व्यञ्जकतामिताः''।

(का०प्र०, पृ० ८/९८)

इत्युक्त्या तेषां गुणानां व्यञ्जका वर्णा इति सिद्धम्। उदाहरणम्–

**अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।**
**कुर्वन्ति यूनां सहसा तथैता स्वान्तानि शान्तापरचिन्तनानि।।**

(का०प्र०, पृ० ८/३४७)

अत्र गकारास्तकाराश्च मूर्ध्नि स्वस्ववर्गान्त्यगाः ''अनङ्गरङ्गप्रतिमम्'' इत्यत्र मध्यमसमासः माधुर्यवती रचना च विप्रलम्भशृङ्गारे माधुर्यस्य व्यञ्जकम्।

अत्र ध्वनिकारः—

**''यस्त्वलक्ष्यक्रमव्यङ्ग्यः ध्वनिर्वर्णपदादिषु।**
**वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते''।।**

(ध्व०लो० ३/२)

इति निरूप्य वर्णानामनर्थकत्वाद् अर्थसामर्थ्याक्षिप्तस्य रसस्य व्यञ्जकत्वमसम्भवमित्याशङ्क्य समादधे।

शृङ्गारे भूयसा प्रयुक्ताः शकारः षकारः सरेफसंयोगाः ''र्क–र्ह–र्द इत्यादयः, ढकारश्च रसविरोधिनो भवन्ति। यतो हि रसं न श्च्योतन्ति। त एव यदि बीभत्सादिरसे प्रयुक्तास्तदा(वीभत्सादि)रसं दीपयन्त्येव, अतोऽन्वयव्यतिरेकाभ्यां वर्णानां रसव्यञ्जकत्वं सिद्धम्।

**विमर्शः**

वस्तुतः पण्डितराजस्येमां मान्यतां प्रति मम्मटस्योदाहरणप्रसङ्गे गुणनिरूपणे उदाहरिष्यत, इत्युक्तिः गुणव्यञ्जकता च वर्णानां साक्षान्नास्ति, यतो हि गुणाः रसधर्माः न शब्दधर्माः, परं गुणवृत्या शब्दधर्मत्वं तेषामुक्तम्, तत्र स्वाश्रयाभिव्यञ्जकत्वसम्बन्धेन गुणाः शब्दार्थयोः। एवं गुणः तदाश्रयो रसस्तदभिव्यञ्जकौ गुणा इति। अतो वर्णारसव्यञ्जकाः, परम्परया

गुणाभिव्यञ्जकाः सन्ति। ध्वनिकारोऽप्येवं सङ्गच्छते। यद्यप्यर्थसामर्थ्याक्षेप्या रसादयः तथापि अन्वयव्यतिरेकाभ्यां वर्णेष्ववसीयते।

अत एव "ध्वनिर्वर्णपदादिषु" इति ध्वनिकारेणोक्तम्। तत्र निमित्तसप्तमी वर्णपदादयः रसाभिव्यक्तौ निमित्तभूताः, रसास्वादे च विभावादिसम्बलितस्थायिभावप्रतीतिसम्पत्तिरेव निबन्धनम्। परं तत्रानुरूपवर्णश्रुतिरपि सहकारिणीति तथोक्तम्। परं पण्डितराजः द्रुत्यादिचित्तवृत्तिप्रयोजकत्वं गुणत्वम्, इत्यवसाय तत्प्रयोजकत्वं शब्दार्थवर्ण-रसरचनादिगतं स्वीकृत्य वर्णेष्वपि गुणानाह। अतस्तन्मते वर्णाः गुणव्यञ्जका इत्युक्तिः सङ्गच्छत इति शम्।

## संल्लक्ष्यक्रमध्वनिविषये मतभेदः

अर्थशक्तिमूलध्वनिः द्वादशविध इति मम्मटः। पण्डितराजश्चाष्टविधमाह तत्र पण्डितराजः— कविप्रौढोक्तिकविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोः कविप्रतिभामात्रनिष्पन्नत्वात् न भेदः। अर्थात् कविप्रौढोक्तिसिद्धोऽर्थो यथा कविप्रतिभामात्रनिष्पन्नस्तथैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धोऽप्यर्थः कविप्रतिभामात्रनिष्पन्न एव। द्वयोरप्यविशेषात् पृथग्भेदोपपादनमयुक्तम्, अन्यथा कविनिबद्धवक्तृनिबद्धवक्तृप्रौढोक्तिसिद्धार्थस्यापि सत्त्वादन्येषामपि भेदानां सम्भवापत्तेः। यदि कविनिबद्धवक्तरि कविनिबद्धवक्तृत्वमेव स्वीक्रियते तदा कविनिबद्धवक्ता अपि लोकोत्तरवर्णनानिपुणत्वात्कविरेव तत्प्रौढोक्तिरपि कविप्रौढोक्तिरेव। अतः पृथग्भेदानुपपत्तेरित्याह।

अत्र नागेशः– मम्मटाचार्यं समर्थयन्नाह यथा वृद्धोक्त्यपेक्षया शिशूक्तावधिकलालित्यमनुरागकारित्वं चमत्कृतिश्चानुभूयते तथैव कविप्रोढोक्तिनिष्पन्नार्थापेक्षया कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नेऽर्थे (तन्निबद्धवक्तुरागाद्याविष्टतया) अधिकं लालित्यं चमत्कृतिश्चानुभूयते। कविनिबद्धवक्तृनिबद्धवक्तृभणितिनिष्पन्नेऽर्थे यल्लालित्यं तस्य प्रतीतेरतिशयप्रणिधानसाध्यतया चमत्कृतेः स्थगनात् तस्य पृथगगणना नोचितेति।

(गु०म०प्र० २/२७१)

अत्रैतिह्यदृष्ट्या ध्वनिसम्प्रदायप्रवर्तकानां मतमुपादेयमिति ध्वनिकारिकाकारो यदवोचत् तन्निरूप्यते। तत्र–

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः।।**

(ध्वन्या० २/२४)

इति कारिकाकार: व्यञ्जकमर्थं द्विविधमेवाह। ध्वनिप्रतिष्ठापक आनन्दवर्धनाचार्यो वृत्तावबोचद् यत्– अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य व्यञ्जकोऽर्थो द्विविध:। कवे: कविनिबद्धस्य वा वक्तु: प्रौढोक्तिमात्रनिष्पनशरीर एक: स्वत:सम्भवी च द्वितीय:। यद्यपि आनन्दवर्धन: कविप्रौढोक्तेरुदाहरणम्—

**सज्जेहि सुरहि मासो ण दाव अप्पेइ जुअइजणलक्खमुहे।**
**अहिणव सहआरमुहे णवपल्लवपत्तले अणङ्गस्य शरे।।** इति।

कविनिबद्धस्य प्रौढोक्तेरुदाहरणम्–

**शिखरिणि क्व नु नाम कियच्चिरमित्यादि।** तथापि कवे: कविनिबद्धस्य वा प्रौढोक्तेरेकविधत्वमेवाह, यदूचे– "कवे: कविनिबद्धस्य वा वक्तु: प्रौढोक्तिमात्रनिष्पन्नशरीर एक:"। (ध्वन्या० २/३४वृत्तौ) इति।

**अभिनवगुप्तपादाचार्यश्चाह–** अनुरणनरूपव्यङ्ग्यो ध्वनिरेव न द्विविध:, अपि तु तस्य योऽर्थशक्त्युद्भवाख्यो द्वितीयो भेद: सोऽपि व्यञ्जकस्यार्थस्य द्वैविध्याद् द्विविध:– १. स्वत:सम्भवी २. प्रौढोक्तिमात्रनिष्पन्नशरीरश्चेति। प्रौढोक्तेश्चावान्तरभेदोऽस्ति कविप्रौढोक्ति: कविनिबद्धवक्तृप्रौढोक्तिश्चेति प्रौढोक्तिर्द्विविध इति सङ्कलितस्त्रिविधोऽर्थो व्यञ्जक इति। द्वितीयोद्योतस्यैक- त्रिंशत्तमकारिकाया उपक्रमे ध्वनिभेदगणनायामर्थशक्त्युद्भवं द्वादशविधमाह। पश्चिमस्त्रिविध:– १. कविप्रौढोक्तिकृतशरीर:, २. कविनिबद्धवक्तृप्रौढिक्ति-कृतशरीर:, ३. स्वत:सम्भवी च। ते च प्रत्येकं व्यङ्ग्यव्यञ्जकयोरुक्तभेदनयेन चतुर्धेति द्वादशविधोऽर्थशक्तिमूल इति।

एतदनुसारी मम्मटाचार्योऽप्येवमाह। हेमचन्द्रस्तु कविप्रौढोक्तिनिष्पन्नमर्थमेव केवलं व्यञ्जकं ब्रूते स्वत:सम्भविन्यर्थे यदि प्रौढोक्तिर्न स्यात्तदा तत्र चमत्कारो न स्यात्। तद् वर्णयितुश्च कवित्वं न स्यात् लोकोत्तरवर्णनाभावात्। एवं कविनिबद्धवक्तृप्रौढोक्तिरपि कविप्रौढोक्तिरेव, यतस्तत्रापि कविरेव कवयिता नान्यस्तस्य कल्पनाप्रसूतत्वात्। (काव्यानु० ४६) एवं सर्वत्र कविप्रौढोक्तिरेवेत्याह। माणिक्यचन्द्रोऽपि हेमचन्द्रमेवानुसरति। एवमेव प्रतिहारेन्दुराजोक्त्यापि "अर्थशक्त्युद्भवस्याष्टविधत्वमेव" प्रतीयते।

**विमर्श:**

वस्तुत: स्वत: सम्भविनोऽर्थस्य याथातथ्येन वर्णनं न काव्यम्। **"गोरपत्यं वलीवर्दो घासमत्ति मुखेन स:"** इत्यादि न काव्यमिति

सर्वसम्मतम्। अतो लोकोत्तरवर्णनानिपुणत्वलक्षणकवित्वं तत्रैव यत्र कविप्रतिभोद्भावितोऽर्थो नव–नवः स्फुरति। अत एवोक्तं भामहेन—

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**

इति रीत्या यद्यपि कविप्रौढोक्तिसिद्ध एक एवार्थो व्यञ्जकस्तथापि स्वतः सम्भविनमर्थं यदाऽतिशयोक्त्या (भणिति वैचित्र्येण) कविः वर्णयति तत्र मूलभूतस्यार्थस्य लोके सम्भवात् स्वतःसम्भवी अर्थोऽपि व्यञ्जको यथा ''मृगनयना हरते मुनेर्मनः'' इति। एवं कदाचित् कविः लोकेऽसम्भविनमेवार्थं वर्णयति तदाऽर्थः प्रौढोक्तिमात्रसिद्ध एव। यथा—

**''दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति''।**

इत्यत्र राज्ञः कीर्तौ विसनीनालत्वं श्वैत्येनारोपितं तत्र कीर्तेः स्वरूपाभावात् लोके श्वेतरूपं नावलोकितम्, कविभिरेव तथा वर्णितत्वादयमर्थो प्रौढोक्तिमात्रसिद्धः। अत एव— कविप्रतिभामात्रनिवर्तितः ''प्रौढोक्तिमात्रात्सिद्धः'' इत्यादौ मात्रशब्द उपात्तः। एतादृशार्थानां लोके क्वाप्यदृष्टत्वात्। एवं कविः स्वनिबद्धवक्तुः प्रौढोक्त्या सिद्धमर्थं क्वचिद् वर्णयति। यथा—

**शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।**
**सुमुखि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः।।**

अत्राधरतुल्यस्य बिम्बफलस्यास्वादने कस्मिंश्चित् सिद्धिप्रदे पर्वते अवश्यं सिद्धिप्रदस्य तपसोऽतिशयकालपर्यन्तमनुष्ठानमपेक्षितमिति प्रौढोक्तिमात्रम्, लोके सर्वत्रानायासेन यथेच्छं शुकानां बिम्बफलचुम्बनदर्शनात्। यत्र पुनः कविनिबद्धवक्तृनिबद्धवक्ता प्रौढोक्तिमात्रसिद्धं कमप्यर्थं वर्णयति तत्र तु कविनिबद्धवक्ता एव कविस्तन्निबद्धः कविनिबद्ध एवेति ज्ञेयम्। न च प्रथमोऽपि कविनिबद्धवक्ता कविरेवातस्तत्प्रौढोक्तिः कविप्रौढोक्तिरेवेति वाच्यम्। तत्र कविः स्वकल्पिवक्तुः प्रौढोक्तिं कवते इति स कविनिबद्ध एवेत्यनुभवात्। यद्यपि काव्यकृत् कविरेव सर्वत्र कवयिता नान्यः कश्चनेतरस्तथापि कविः कदाचिद् स्वयं कवते, कदाचित् तत्कल्पितः वक्तेति सहृदयहृदयसिद्धम्। अत्र कविः कवते, अत्र तन्निबद्धवक्तेत्यनुभवाच्च। यथा–

**''गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते**
**किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा''।**

इत्येतावन्मात्रं कापि गोपिका कथयति,

**इत्यामन्त्रणभङ्गिसूचितबृथाऽवस्थानखेदालसा-**
**माश्लिष्टः पुलकोत्कराञ्चिततनुर्गोष्ठे हरिः पातु वः''।।**

इत्युत्तरार्धं कविः कवते। यद्यपि काव्यस्यास्यैक एव कविः कवयिता तथापि सहृदया अनुभवन्ति यत् पूर्वार्धं काचन गोपिका ब्रूते। उत्तरार्धं कविरिति सिद्धं कवेः कविनिबद्धस्य च वक्तृत्वम्। एवं क्वचिद् द्वयोः प्रौढोक्तिरपि सिद्धा।

अपि च महाकविकृतं काव्यं समवलोक्यैव त्रिषु विभागेषु काव्यं विभक्तमाचार्यैः। तत्र क्वचित् स्वतःसम्भविनोऽर्थस्यापरत्र कविप्रौढोक्त्या निष्पन्नस्यान्यत्र च कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नस्यार्थस्योदाहरणेषु बाहुल्येन दर्शनात्। लोके अध्ययनाध्यापनपाठनानुभवेषु त्रिविधस्यार्थस्यानुभूतत्वात् त्रिविधो व्यञ्जकोऽर्थः प्रत्येकं वस्त्वलङ्कारभेदात् षड्विधो निष्पन्न इति अभिनवगुप्तपादाचार्याः सम्यग्विविच्य विभागं कृतवन्तः।

ध्वनिकारिकालोककारौ प्रौढौक्तित्वेनैकविधं गणयित्वाऽपि आलोककारः कवेः कविनिबद्धस्य च प्रौढोक्तेः पृथक् पृथगुदाहरणमुपन्यासञ्चक्रे। एतदेवाभिप्रेत्य मम्मटाचार्यः अर्थस्य षड्विधस्य व्यञ्जकत्वमूचे। राजचूडामणिदीक्षिताच्युतरायावप्येवमेवोचतुः।

अपि च प्रौढोक्तित्वेन प्रौढोक्तेरेकत्वेऽपि व्यवहारस्य प्रमाणेषु प्रबलतया काव्येषु कवेः कविनिबद्धस्य च पृथक् पृथगुपलब्धेस्तयोर्द्वैविध्यं युक्तिसिद्धं नोपेक्ष्यम्।

पण्डितराजस्तु कवेरतिरिक्तस्यास्य वक्तुरभावादेकस्यैव कवेः कृतित्वादेकविधं गणयामास। तत्र ध्वनिकारिकाकार एव मूलम्। न स्वकीयं नवीनोद्भावनं पण्डितराजस्य। प्रौढोक्तित्वेन प्रौढोक्तेरेकत्वेऽप्यवान्तरभेदमादाय द्वैविध्यस्वीकारे न काचित् क्षतिरिति सत्योद्भावन-मेवालोकलोचनकारादीनामित्यलं विज्ञेषु।

## शब्दशक्तिमूलवस्तुध्वनिविषये मतभेदः

वाग्देवतावतारो मम्मटश्च काव्यप्रकाशे संल्लक्ष्यक्रमध्वनिस्त्रिविधः— शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च। तत्र शब्दशक्तिमूलो द्विविधः—

**अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा।।** इति।
(का०प्र०,च०उ०, पृ० ५३)

अलङ्कारध्वनिवस्तुध्वनिभेदादित्याह। तत्र शब्दशक्तिमूलालङ्कारध्वने-रुदाहरणम्–

**उल्लास्य कालकरवालमहाम्बुवाहं**
**देवेन येन जरठोर्जितगर्जितेन।**
**निर्वापित: सकल एव रणे रिपूणां**
**धाराजलैस्त्रिजगति ज्वलित: प्रताप:।।** इति।

पद्यमिदं कस्यचिद्राज्ञो वर्णने उपात्तम्, अतोऽत्र प्रस्तुते राजवर्णनरूपेऽर्थे प्रकरणेनाभिधायां नियन्त्रितायां प्रकृतार्थबोधानन्तरं महेन्द्रविषयकार्थप्रतीतिर्व्यञ्जनयैव जायते, स चार्थो वस्तुरूप:। परञ्च वाक्यस्यासम्बद्धार्थाऽभिधायकत्वादपुष्टार्थताऽर्थयोरसम्बन्धे वाक्यभेदापत्तिश्च स्याताम्। तत्परिहाराय राजेन्द्रयो: सादृश्यप्रतिपादने कवेस्तात्पर्यं ज्ञेयम्, अतोऽत्रोपमालङ्कारध्वनि: प्राधान्येन व्यवर्हतव्य:। इत्थं श्रीमम्मटमते यत्रैकस्यार्थस्य प्राकरणिकत्वं तत्र शब्दशक्तिमूलध्वनि:, यत्रोभयो: प्राकरणिकत्वमनियमो वा तत्र श्लेष इति।

शब्दशक्तिमूलवस्तुध्वनेरुदाहरणम्—

**पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।**
**उण्णअ पओहरं पेक्खि उण जह वससि ता वससु।।**

अस्य संस्कृतच्छाया–

**पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस।।**

अत्र "द्व्यर्थै: पदै: पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रानुसारं स्वयं कामुकी पथिकं प्रति रहस्यमाच्छाद्य कथयति—पथिक! पाषाणमयेऽस्मिन् ग्रामे ईषदपि कटाद्यास्तरणं नास्ति, तच्छयनसामग्र्यभावेऽपि वार्षुकं मेघं दृष्ट्वा तत्प्रतिबन्धाद् यदि वससि तदा वसेत्यापाततो वक्त्रभिप्राय:। व्यञ्जनया तु पाषाणत्वेनाध्यवसितानां मूर्खाणां ग्रामे कामशास्त्रमीषदपि नास्ति, तथा चाकारेङ्गिताद्यभिज्ञाभाववति ग्रामे सति चैवं विधोद्दीपनविभावे मेघेऽनुपभुक्तोन्नतस्तनदर्शने च को नामोपभोगक्षमोऽन्यत्र गन्तुं वाञ्छतीति यद्युपभोगक्षमोऽसि तदा वसेति व्यज्यते।

अत्र कश्चनाह— वक्तृबोद्धव्यादिवैशिष्ट्यज्ञानमन्तराऽत्र व्यङ्ग्यार्थस्य प्रतीतिरेव नास्ति, कुलजाया उक्तावुक्तार्थाप्रतीते:, अतो वक्त्रादिवैशिष्ट्यापेक्षणाद् व्यङ्ग्यार्थस्यार्थशक्तिमूलत्वमिति, तन्न युक्तम्, पओहरसत्थरशब्दयोर्व्यङ्ग्यार्थप्रतीतावन्वयव्यतिरेकसत्त्वात्, पर्यायपरिवृत्त्यसहत्वादत्र वस्तुध्वने: शब्दशक्तिमूलत्वं वक्त्रादिवैशिष्ट्यानामार्थी व्यञ्जनायामावश्यकत्वमात्रम्, न तु शाब्द्यां सर्वथाऽनुपयोगीनि। अत

एवाभियुक्तप्रयुक्तात् ''सुरभिमांसं भक्षयति इति वाक्यान्न द्वितीयार्थप्रतीतिः। शाब्दीव्यञ्जना नियमेन वक्त्रादिवैशिष्ट्यं नापेक्षत इत्यन्यदेतत्।

न चात्र पओहरादिशब्दबोध्ययोर्द्वयोरर्थयोर्मिथः सम्बन्धाभावाद् वाक्यभेदापत्तिः, वाच्यव्यङ्ग्ययोरसम्बन्धे वाक्यस्यासम्बद्धार्थाभिधायकत्वापत्तिश्चेति वाच्यम्, व्यङ्ग्यार्थस्य ग्राम्यतापरिहाराय गोपनाय च वाच्यार्थेनाच्छदितस्यैव प्रतिपाद्यतया विवक्षितस्याच्छाद्याच्छादकभावसम्बन्धस्य सत्त्वेनादोषात्।

अत्र वाच्यव्यङ्ग्ययोर्नोपमानोपमेयभावः, व्यङ्ग्येन तिरस्कृतस्यैव वाच्यस्य प्रतीतेर्द्वयोः समप्राधान्य एवोपमानोपमेयभाव इति नात्रालङ्कारो व्यङ्ग्यः, किन्तु वस्त्वेव।

## अत्र पण्डितराजरीत्या प्राचीनमतोपपादनम्

पण्डितराजश्चात्र दीक्षितप्रभावितः प्रथमं प्राचीनमतं निरूप्य ''अन्ये त्वत्र प्रत्यवतिष्ठन्ते'' (र०ग०, द्वि०आ०) इत्यादिना दीक्षितमतमेवात्र विशदीकृत्य प्रौढ्या समर्थयामास। तथाऽपि व्यञ्जनां स्थापितवान्।

तत्र प्राचीनमतं द्विधोपपादितम्, तद्यथा— नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वाच्छब्दश्रवणानन्तरं प्रथमं सर्वेषामर्थानामुपस्थितिर्भवति, ततः शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्दिहानः श्रोता तात्पर्यनिर्णायकं प्रकरणादिकं पर्यालोच्य वक्तृतात्पर्यं निर्णयति। इत्थं जाते तात्पर्यनिर्णये पुनस्तात्पर्यज्ञानात्मकपदज्ञानजन्या तात्पर्यविषयीभूतैकार्थमात्रविषयकोपस्थितिः, ततोऽन्वयबोधः। तत्र यथा प्रथमं सकलानामर्थानामुपस्थितिर्जाता, तथा पुनः कथं नेति न शङ्क्यम्, प्रकरणादिज्ञानस्य प्रतिबन्धकत्वात्, प्रकरणज्ञानाधीनतात्पर्यनिर्णयस्य प्रतिबन्धकत्वाद् वा, अन्यथा नानार्थोपस्थितौ नानार्थविषयकशाब्दबोधोऽपि स्यात्।

उक्तञ्चात्र हरिणा ''शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'' (वा०प०) इति। अत्र ''अनवच्छेदे'' इत्यस्य तात्पर्यसन्देहे सति'' विशेषस्मृतिः'' इत्यस्य चैकार्थमात्रविषयकोपस्थितिरित्यर्थः।

परमस्मिन् व्याख्याने तात्पर्यनिर्णयानन्तरं पुनरेकार्थमात्रविषयकोपस्थितिरुपपादिता, तस्यां चापरार्थोपस्थितिप्रतिबन्धकल्पना च कृतेति गौरवं मनसिकृत्य पुनरन्यथा व्याचख्यौ। नानार्थशब्दजन्यनानार्थविषयकशाब्दबोधवारणाय तात्पर्यनिर्णयस्य

कारणत्वमवश्यं कल्पनीयम्। एवं प्रथमं नानार्थशब्दादनेकार्थोपस्थितावपि प्रकरणादिभिर्यत्र तात्पर्यनिर्णयः, तस्यैवान्वयबोधो जायते, नान्यस्येति।

इत्थमावृत्तस्य भोजनकाले परिहासार्थं श्यालकेन प्रयुक्तस्य "सुरभिमांसं भक्षयति" इति वाक्यस्य यो द्वितीयोऽर्थो विदग्धमनोमुकुरे प्रतिबिम्बते स कया वृत्त्या साध्यः, ऋते व्यक्तेः। उक्तञ्चात्र मम्मटभट्टैः–

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्।।** इति।
(का०प्र०, द्वि०उ०, का० १९)

## दीक्षितरीत्या तन्निराकरणम्

इत्थं प्राचीनमतं द्विधा व्याख्याय दीक्षितरीत्यैव स्वमतमुपन्यस्यन्नाह– यदुक्तम्, पुनरेकार्थमात्रविषयकोपस्थितिः शाब्दबोधायापेक्षिता" इति तदसारम्। नानार्थोपस्थितावपि प्रकरणादिनाऽवगततात्पर्येण विवक्षितार्थशाब्दबोधोपपत्तेः। संस्कारतदुद्बोधकयोः सत्त्वे स्मृतेः प्रतिबन्धस्योपपादनं सकलतन्त्रविरुद्धं च।

न च नानार्थस्थले नानार्थविषयकोपस्थितावेवायं प्रतिबध्यप्रतिबन्धकभावः कल्प्यते, नान्यत्रेति वाच्यम्, अनुभवविरुद्धत्वाद् निष्फलत्वाच्च। तथा हि "पयो रमणीयम्" इत्यादिवाक्यमाकर्णितवद्भिः प्रकरणज्ञैरप्रकरणज्ञा बोध्यन्ते, नूनमस्य पयःशब्दस्य दुग्धेऽर्थे वक्तुस्तात्पर्यम्, न तु जले। यदि प्रकरणादिकमप्राकरणिकमर्थं प्रतिबध्नीयात्, तदा जलरूपार्थस्यानुपस्थितत्वान्निषेधः कथं सङ्गच्छते, इति न हृदयङ्गमः प्रतिबध्यप्रतिबन्धकभावः।

यदप्युक्तम्— प्रकरणादिना तात्पर्यनिर्णये सति प्राकरणिकार्थस्य शाब्दबोधानन्तरं पुनरप्राकरणिकस्याप्यर्थस्य जायमानो बोधो व्यञ्जनाव्यापारसाध्य इति, तत्र पृच्छ्यते यत्— नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव? तत्र नाद्यः, सर्वत्र व्यञ्जनोल्लासेऽभिधया प्रस्तुतस्य व्यञ्जनयाऽप्रस्तुतस्य च सर्वत्र बोधे प्रसक्ते तात्पर्यज्ञानकारणतायाः कल्पनमेव व्यर्थं स्यात्। न चाभिधया बोधे तात्पर्यज्ञानस्य कारणत्वम्, व्यञ्जनया बोधस्तु तात्पर्यज्ञानं विनाऽपि जायत इति, तत्राभिधया बोधवारणाय तात्पर्यज्ञानस्य हेतुत्वकल्पनं युक्तमिति वाच्यम्, सर्वत्राप्राकरणिकार्थबोधस्वीकारे तस्याभिधाबोध्यत्वेऽपि दोषाभावात्।

यद्युच्यते— नानार्थशब्दात् सकलानामर्थानामुपस्थितावपि प्रकरणादिना यत्र तात्पर्यनिर्णयः, तस्यैवार्थस्यान्वयबोधः प्रथमं जायते, नान्यस्येति नियमरक्षणायाभिधाजन्यनानार्थकपदस्यार्थविषयकशाब्दबोधे तदर्थतात्पर्यज्ञानं

कारणमिष्यते, अन्यथा तात्पर्यविषयीभूतस्यार्थस्येवातात्पर्यविषयीभूतस्याऽप्यर्थस्य प्रथमं भानं स्यात्। पश्चादप्राकरणिकार्थबोधोऽप्यनुभवसिद्धः। अतस्तात्पर्यनिर्णयकार्यताऽवच्छेदककुक्षौ शक्तिजन्यत्वं निवेशनीयम्। एवं व्यञ्जनाजन्याप्राकरणिकार्थबोधे बाधा नास्तीति चेत्, न। "सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः" इत्यादिश्लेषकाव्य इव नानार्थस्थलेऽपि प्राकरणिकाप्राकरणिकयोर्बोधे बाधकाभावात्।

न च सोऽव्यादित्यत्रार्थद्वयेऽपि प्रकरणसाम्यात् तात्पर्यज्ञानमस्तीति युगपद् द्वयोरर्थयोर्बोधो जायते। सुरभिमांसमित्यादौ सुरभिशब्दस्य भोजनरूपप्रकरणेन सुगन्धिरूपार्थे एव तात्पर्यम्। अतोऽत्र न युगपदर्थद्वयबोधोपपत्तिरिति वाच्यम्। नानार्थस्थले सर्वत्र व्यञ्जनोल्लासस्य स्वीकारे तात्पर्यनिर्णयस्य शाब्दबोधहेतुतैवासिद्धा। अतो युगपदर्थद्वयबोधोऽनुपपन्न इति कथनमनुचितम्।

न चैवं तात्पर्यज्ञानस्य निरुपयोगित्वमिति वाच्यम्, नानार्थकस्य शब्दस्यार्थविशेषे प्रामाण्यनिर्णयाय तात्पर्यज्ञानस्योपयोगस्वीकारात्।

इत्थं नानार्थशब्दजशाब्दबुद्धौ तात्पर्यज्ञानस्य कारणतैव शिथिलीभूता। अतोऽप्रस्तुतार्थबोधोऽपि शक्त्यैवेति तत्सम्पादनाय व्यञ्जनास्वीकारोऽनुचित एव। न च नानार्थस्थले क्वचिदेव व्यञ्जनोल्लास इति वाच्यम्। तत् क्वाचित्कत्वनियामकहेतोरभावात्।

न च व्यङ्ग्यार्थविषयककवितात्पर्यस्यानेन पदेन वाक्येन वा व्यङ्ग्यार्थबोधो जायतामित्याकारकस्य वक्तृतात्पर्यस्य ज्ञानमेव हेतुरिति वाच्यम्, व्यञ्जनाजन्यबोधे तात्पर्यज्ञानकारणतायास्त्वयाऽनङ्गीकारात्। तथापि फलबलाद् व्यञ्जनाजन्यबोधे तात्पर्यज्ञानमङ्गीक्रियत इति चेत्, न, व्यतिरेकव्यभिचारात्।

तथा हि— "प्रससार शनैर्वायुर्विनाशे तन्वि ते तदा" (सा०द०, स०प०) इत्यादौ कवितात्पर्याभावेऽपि अपानवायुनिःसरणनायिकामरणरूपार्थप्रतीतिर्व्यञ्जनया सर्वानुभवसिद्धा। अत एवात्राश्लीलत्वदोषः।

ननु फलबलाच्छ्रोतुः शक्तिविशेषश्चमत्कारिण्येवाऽर्थे व्यञ्जनामुल्लासयति, नाचमत्कारिणीति सिद्धं व्यञ्जनोल्लासस्य क्वाचित्कत्वमिति चेत्, तर्हि श्रोतुः शक्तिविशेषो नियन्त्रितां शक्तिमेवोल्लासयतु, नानार्थस्थले व्यक्तिकल्पनानौचित्यात्।

स्वीकृतेऽपि व्यञ्जनोल्लासस्य क्वाचित्कत्वे नानार्थस्थले प्राकरणिकार्थबोधस्य व्यञ्जनया प्रतिपादनमयुक्तम्, यतो हि— "उल्लास्य कालकरवालमहाम्बुवाहम्" इत्यादिनानार्थस्थले येन प्रतिपत्रा द्वितीयेऽर्थे शक्तिर्न ज्ञाता, पूर्वं ज्ञाता, पश्चाद् विस्मृता वा, तस्य प्रतिपत्तुः सर्वथैव व्यञ्जनया द्वितीयार्थबोधो न जायते, परं तव मते तस्य द्वितीयार्थबोधोपपत्तिर्व्यञ्जनया दुर्वारा।

न च नानार्थशब्दस्य व्यञ्जना प्राकरणिकार्थबोधं प्रति तच्छब्दस्य तदर्थगतशक्तिज्ञानं कारणमिति वाच्यम्, "निःशेषच्युतचन्दनं स्तनतटम्" इत्यादावधमपदस्य रमणरूपेऽर्थे शक्तिग्रहाभावाद् रमणरूपार्थाऽभिव्यक्तेर्भावात्। सति वा अधमपदस्य रमणे शक्तिग्रहे शक्त्यैव रमणप्रतीतौ तत्र सर्वाभिमतस्य व्यञ्जनावृत्तिकल्पनस्य वैयर्थ्यापत्तेश्च।

न च नानार्थव्यञ्जनस्थले सुरभिमांसं भक्षयतीत्यादावेवैवंविधकार्यकारणभावः। न तु निःशेषेत्यादावेकार्थव्यञ्जकस्थले। तेन तत्र तच्छब्दस्य तदर्थगतशक्तिज्ञानरूपकारणाभावेऽपि व्यञ्जनोल्लासे क्षत्यभावः।

न च नानार्थस्थले व्यक्त्युल्लासहेतुभूतशक्तिग्रहस्य स्वीकारे तेनैव द्वितीयार्थबोधोऽपि स्यादिति वाच्यम्, संयोगादिभिः शक्तेर्नियन्त्रितत्वेन शक्तिग्रहस्योपयोगाभावात्, व्यक्तिकल्पनौचित्यादिति वाच्यम्। नूतनकार्यकारणभावकल्पने गौरवात्, नियन्त्रणस्य पूर्वमेव दूषितत्वेन तद्धेतोरेवेति न्यायविषयत्वाच्च। (द्वितीयार्थहेतुभूतव्यञ्जनोल्लासकारणेन शक्तिग्रहेणैव द्वितीयार्थबोधो भवतु व्यक्त्युल्लासकल्पनाया व्यर्थत्वाच्चेति भावः)।

ननु "तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः" इति सर्वसम्मतः सिद्धान्तः। अत एव "वह्निना सिञ्चति" इति वाक्यात् सेको वह्निकरणकत्ववानिति बोधो न जायते। एवं च यत्राप्राकरणिकोऽर्थो न बाधितः, तत्राभिधाबोध्य एव स्यात्। यत्र तु बाधितः, यथा– "जैमिनीयमलं धत्ते रसनायामयं द्विजः" इत्यादौ तु कथं शक्त्या बोधः स्याद्, बाधनिश्चयेन प्रतिबद्धत्वात्।

व्यञ्जनया तु बाधितस्याप्यर्थस्य बोधो भवति, अतस्तदर्थं व्यञ्जनाभ्युपेयैवेति चेद् मैवम्– "गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात्" इत्यस्य पद्यांशस्य वाच्यार्थ एव बाधित इति तदन्वयबोधोपपादनाय अनाहार्य्यत्वस्येव शाब्दान्यत्वस्यापि बाधनिश्चयप्रतिबध्यताऽवच्छेदकोटो निवेशाद् यथा बाधितस्यैकार्थस्थलीयान्वयबोध उपपाद्यते, तथा बाधितस्य नानार्थस्थलीयाप्रस्तुतार्थस्य वाच्यत्वस्वीकारेऽप्यन्वयबोधः समुपपादयितुं शक्यः।

अन्यथा— "गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात्" इत्यत्र कैतवापह्नुताविव "सौधानां नगरस्याऽस्य मिलन्त्यर्केण मौलयः" इत्यत्र सम्बन्धातिशयोक्ताविव सर्वेष्वलङ्कारेषु वाच्यार्थानां प्रायशो बाधिततया तदन्वयबोधायापि व्यञ्जना समाश्रयणीया स्यात्। न च केनापि समाश्रीयत इति। तस्माद् नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव।

## पण्डितराजस्याभिप्रायः

इत्थं पण्डितराजः प्राचीनाभिमतां शब्दशक्त्युद्भवां व्यञ्जनां निराकृत्य स्वाभिमतं प्रकाशयन् सङ्गृह्णाति—

**योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।**
**धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा।।**

(र०गं०, द्वि०आ०, नानार्थनि०)

योगरूढिस्थले व्यञ्जनां स्वीकरोत्युदाहरति च—

**अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।**
**तिष्ठन्ति चपला यत्र स कालः समुपागतः।।** इति।

(र०गं०, द्वि०आ०, नानार्थनि०)

अस्याभिधेयोऽर्थः– यत्र काले रमणीनां सौन्दर्यमपहृत्य विद्युतो मेघैः सहानिशं तिष्ठन्ति, स वर्षाकालः समुपागत इति।

अत्र यस्मिन् काले दुर्बलानां (सुरते तृप्तिकरणेऽसमर्थानाम्) धनमपहृत्य पुंश्चल्यो जलवाहकैः पुरुषैः सह रमन्ते, स प्रावृट्काल उपस्थित इति द्वितीयोऽप्यर्थः सहृदयैरनुभूयते।

अत्र द्वितीयोऽर्थोऽबलावारिवाहचपलाशब्दैरभिधया बोधयितुं न शक्यते, रूढिर्योगापहारिणीति नियमाद् रूढ्यर्थस्यैव प्रतीतेः। द्वितीयार्थप्रतीत्यभावे चमत्काराभावात् पद्यस्यास्य काव्यत्वमेव न स्यात्। केवलयोगशक्त्या द्वितीयोऽर्थो बोध्यत इत्यपि न शङ्क्यम्, योगरूढिस्थले रूढ्यर्थस्यैव प्रतीतेः। चपलाशब्दस्य योगशक्त्याऽपि पुंश्चलीरूपाऽर्थस्याऽनुपलम्भाच्च। अत एवंविधस्थले शब्दशक्त्युद्भवव्यञ्जनास्वीकार आवश्यक इति।

## अत्र दीक्षिताभिप्रायः

वृत्तिवार्तिके प्राचीनं (मम्मट)मतं प्रतिपाद्य दीक्षितः स्वाभिप्रायं प्रकटयति। तद्यथा "असावुदयमारूढः" इत्यादौ यथा प्राकरणिकेऽर्थे प्रकरणमभिधानियामकम्, तथैवाप्राकरणिकेऽपि राज-कर-मण्डलादिशब्दानां मिथोऽन्वययोग्यनृपति-तद्ग्राह्यधनदेशादिवाचकानां समभिव्याहार एवाभिधानियामकोऽस्ति।

अतः प्राकरणिकाप्राकरणिकरूपार्थद्वयेऽप्यभिधैव व्यापारः। परस्परान्वययोग्यार्थवाचकपदसमभिव्याहारोऽपि शब्दान्तरसन्निधिरूपोऽभिधा-नियामकोऽस्त्येव प्रकरणवदिति।

निश्चितार्थकपदसन्निधिरेव शब्दान्तरसन्निधिरिति वादिभिरपि नानार्थशब्देभ्योऽर्थान्तरप्रतीतेरनुभवसिद्धतया नियामकान्तरमवश्यमभ्युपेयम्।

यत्रैकमेव पदं नानार्थकं वर्तते, तस्य चेत् प्राकरणिकेऽप्राकरणिकेऽपि तात्पर्यं यथा—

**करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम्।**
**हरे! हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया।।**

(शि०पा०व०, प्र०स०३९ तमः श्लोकः)

इत्यत्र हरिपदेन सम्बोध्यः कृष्णः परं हिरण्याक्षप्रभृत्यसुरेषु गजत्वारोपात् श्लेषेण सिंहोऽपि विवक्षितः। तत्रापि समभिव्याहृतद्विपपदात् प्रतीतेन गजेन सह विरोधेन हरिपदस्याप्राकरणिके सिंहेऽर्थेऽप्यभिधा नियम्यते।

यत्रापि "यस्याननं योनिरुदारवाचाम्" इत्यादौ योनिशब्दस्या-श्लीलेऽर्थेऽभिधानियामकं किमपि प्रकरणादिकं नास्ति, तत्रापि तथा वुबुधिषाविषयार्थव्यापृतमपि मनः कदाचिद् तद्विषयं परिहीयाश्लीले पूतिमयेऽर्थे प्रवर्तते, तथैव प्रकरणादिनियन्त्रितोऽपि शब्दो विषयस्वभावादश्लीलेऽर्थेऽपि प्रवर्तत एवेति न क्वाप्यभिधाविषये व्यञ्जनाऽङ्गीकार्या (एवंविधस्थले सर्वत्राभिधैव वृत्तिर्न व्यक्तिः)।

एवं क्वचिद् योग्यान्वयार्थवाचकपदसमभिव्याहाररूपशब्दान्तरसन्निधिः क्वचिद् विरोधिता, क्वचिच्च विषयस्वभावः प्राकरणिकेऽप्रकारणिकेऽप्यर्थेऽ-भिधानियामकः। यद्येतादृशोऽभिधानियामकान् व्यक्तिवादिनो नाङ्गीकुर्यु-स्तदोक्तोदाहरणेषु व्यञ्जनयापि व्यङ्ग्यार्थावगतिर्न स्यात्। यतो हि सर्वत्राप्राकरणिकेऽर्थे व्यञ्जनास्वीकारे प्रकरणादिभिरभिधानियन्त्रणोक्तिरेवाफला स्यात्।

यथा इष्टानिष्टक्षेत्रगामिनो जलाशयजलस्येष्टक्षेत्रगामित्वव्यवस्थासिद्धये इष्टक्षेत्रगामिनीं कुल्यामेकां विधाय पुनरपरया कुल्यया जलस्यानिष्टक्षेत्रगामित्वापादनेऽपि कृते सतीष्टक्षेत्रगामित्वव्यवस्था मुधैव कृतां स्यात्, तथैव प्राकरणिकेऽर्थेऽभिधां प्रकरणेन नियन्त्रितां विधाय पुनर्व्यञ्जनयाऽप्रकारणिकार्थप्रतिपादने कृतेऽभिधानियन्त्रणमेव व्यर्थं स्यात्। अतो न सर्वत्राप्राकरणिकेऽर्थे व्यञ्जना, अपि तु यत्र चमत्काराधानायाप्राकरणिकेऽप्यर्थे कवेस्तात्पर्यम्, अश्लीलदोषो वा यत्र, तत्रैव

व्यञ्जना न सर्वत्रेति व्यवस्था सिद्धये पूर्वोदीरितानि अन्यानि वा नियामकान्यवश्यमभ्युपगन्तव्यानि, तैश्चाप्राकरणिकेऽप्यर्थेऽभिधाबोधनात्, तयैवार्थप्रतीतेस्तदर्थंव्यक्तिकल्पनाया अपार्थत्वात्, अभिधाव्यापारस्य दुर्वारत्वाच्च।

अपि च किमभिधा शक्तिरूपाऽस्ति। उत शक्यार्थप्रतिपादकत्वरूपशब्दव्यापाररूपा वा ? उभयरूपाऽपि साऽप्राकरणिकेऽर्थेऽस्त्येव।

अप्राकरणिकस्याप्यर्थस्य शब्दादेव प्रतीतिः। सा च शक्तिरूपाया व्यापाररूपाया वाऽभिधाया अभ्युपगमात्। शक्तिग्रहसहकारेणार्थप्रतिपादकत्वमभिधेति स्वीकारेऽप्यप्रकारणिकोऽर्थोऽगृहीतशक्तिकस्य न प्रतीयते, अतस्तत्राऽप्याभिधायाः सत्त्वात्।

एवं नानार्थस्थले प्रकरणबलेन प्राकारणिकस्यार्थस्य झटिति बोधे तद्व्यवधानेनार्थान्तरप्रतीतौ नाभिधावृत्तिः, अपि तु व्यक्तिरेवेति शङ्का नो कार्या, "तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा" इति लक्षणे कृतेऽपि शक्यार्थसम्बद्धे लक्ष्यार्थे शक्तिग्रहाभावादेवानतिप्रसक्तौ साक्षाद्विशेषणस्यानावश्यकत्वात्।

अपि च प्रतिपादनव्यवधानाभावरूपसाक्षात्त्वविशेषणे सति "येन ध्वस्तमनोभवेन" इत्यादौ शिवपक्षे स्फुटस्य मनोभवपदस्य सन्निधिरस्ति। मनोभवध्वंसकः शिव इति प्रसिद्धिरपि प्रचुरा, अतो झटिति तत्पक्षार्थबोधः। विष्णुपक्षे च येन अभवेन अनः ध्वस्तमित्यस्फुटस्य पदस्य सन्निधिः, शशिमच्छिरोहरः, अन्धकक्षयकर इत्यनयोरभीष्टेऽर्थे कविभिरप्रयुक्तत्वाद् अन्धकासुरविनाशकर इति प्रसिद्धमर्थमपहाय अन्धकवंश्यानां निवासकर इत्यर्थस्याप्रसिद्धतया निहितार्थत्वाच्चाप्रयुक्तनिहितार्थदोषसत्त्वेनाप्रसिद्धतया विलम्बेनार्थप्रतीतिरिति सर्वसम्मतेऽप्यभिधाविषये (श्लेषे) अभिधाया अभावप्रसक्तेः।

एवं श्लेषस्थले यत्राप्रस्तुतोऽर्थः प्रसिद्धतरः, प्रस्तुतश्च न प्रसिद्धतरः, तत्र प्रसिद्धिप्रचुरतयाऽप्रस्तुतार्थप्रतीतिरेव प्रथमं जायतेऽतोऽप्रस्तुतेऽभिधा। प्रस्तुते एव व्यवहितप्रतीतेर्व्यञ्जनेति साक्षात्त्वविशेषणेन वैपरीत्यापत्तिश्च। प्रस्तुतार्थस्यैव प्रकरणेन प्रथमं बोधो जायत इति वक्तुं नैव शक्यते, प्रसिद्धतरार्थस्यैव प्रथमं स्मृतेः।

अत्र द्व्यर्थस्यापि यत्राप्रसिद्धेऽर्थे प्रयोगस्तत्र निहितार्थदोष इति वृद्धैरुक्तत्वादर्थद्वयविवक्षास्थलेऽपि निहितार्थस्य प्रयोगो न सम्भवीति न शङ्क्यम्, श्लेषयमकादौ निहितार्थस्य वृद्धैर्दोषाभावत्वेनोपपादितत्वात्। "अन्धकक्षयकरः राजाहरति" इत्यादौ तथादर्शनात्।

तस्मात् शब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्तिभेद- प्रयोजकोऽस्ति। धर्मभेदाभावे साक्षात्त्वव्यवहितत्वभेदो न वृत्तिभेदप्रयोजक इति। अभिधालक्षणयोश्च प्रतिपाद्यप्रत्यासत्तिभेदेनैव भेदः। एकस्य शक्त्या प्रतीतेरपरस्य शक्यसम्बन्धेन प्रतीतेः। अतः प्रतिपाद्यप्रत्यासत्तिभेद एव वृत्तिभेदप्रयोजकः, न तु साक्षात्त्वम्।

साक्षाद्विशेषणे सति प्रसिद्धाऽप्रसिद्धार्थविषयकशब्दश्लेषस्थले द्वितीयार्थे प्रसिद्धार्थव्यवहितेऽप्रसिद्धे का वृत्तिः? एवं लक्षितलक्षणास्थले द्विरेफादिपदे प्रथमं लक्षणया रेफद्वयवद् भ्रमरपदस्य बोधेऽनन्तरं तद्बोध्यमधुकरस्य बोध इति तत्र व्यवहितत्वात् लक्षणातिरिक्ता का वृत्तिः? एवं व्यङ्ग्यस्थले (आर्थ्यां व्यञ्जनायाम्) यत्र व्यङ्ग्यार्थाद् व्यङ्ग्यार्थबोधः, तत्र प्रथमव्यङ्ग्यार्थेन द्वितीयस्य व्यवहितत्वाद् व्यञ्जनातिरिक्ता का वृत्तिः? इति साक्षात्त्वविशेषणमव्यवस्थापादकमप्रयोजकञ्च। अतस्तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधेत्येव लक्षणं युक्तम्। सा चाप्रकृतेऽप्यर्थे दुर्वारिति तदर्थं व्यक्त्यपेक्षा निष्फलैवेति।

स्वोक्तिं द्रढयितुं नैयायिकमतमुपन्यस्यति— नैयायिकास्तु (वृ०वा०, प्र०परि०उद्धृतम्) शब्दस्य योऽर्थोऽतिशयप्रसिद्धस्तस्यार्थस्योपस्थितिः प्रकरणाद्यभावेऽपि जायते। अप्रसिद्धस्यार्थस्य प्रकरणादिसत्त्वेऽप्यनुपस्थितिरिति प्रकरणादिकं नाभिधानियामकम्, अपि तु लिङ्गविधया तात्पर्यग्राहकम्। अत एव हरिरस्तीति वाक्यश्रवणाद् हरिशब्दाद् अर्यमानिल-वायु-चन्द्रादयोऽर्थाः प्रतीयन्त एव, परं वक्तुः क्व तात्पर्यमिति नावगम्यत इति निगदन्ति। तेषां रीत्या प्रकरणादिना प्राकरणिकेऽर्थेऽभिधानियम्यत इति वक्तुं न शक्यते। तस्मात् प्रस्तुतेऽप्रस्तुते चार्थेऽभिधैव वृत्तिः।

**मम्मटोक्तिमंशतः समर्थयति-**

प्राचीनाः (मम्मटादयः) यदप्रस्तुतेऽर्थे शब्दशक्तिमूलव्यञ्जनामभिदधति, तत् प्रस्तुताप्रस्तुतयोरर्थयोः प्रतीयमाने उपमालङ्कारे, न त्वप्रस्तुतेऽर्थेपि।

**आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य च स्थितमुदग्रविशालशृङ्गम्।**
**मूर्ध्निखलस्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते नगेशम्।।**

(शि०पा०व०, चतुर्थस०, १९ तमः श्लोकः)

इत्यादौ तैरपि शब्दशक्तिमूलाऽलङ्कारध्वनिरेव प्रतिपादितत्वात्।

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्" (पाणिनिकृतजाम्बवतीजयकाव्याद् ध्वन्यालोकादावुद्धृतम्) इति

विशेषणसाधारण्यमूलकसमासोक्त्यलङ्कारोदाहरणे रागादिशब्दानामप्रस्तुतेऽप्यर्थेऽभिधैव वृत्तिः श्लेषव्यवहारेण स्फुटमुक्तत्वाच्च।

न चैवं शब्दशक्तिमूलवस्तुध्वनिर्लुप्त एव। यतो हि अलङ्काररहिते वस्तुमात्रे प्रस्तुतेऽर्थे एव वस्तुध्वनिसम्भवात्। तत्र च भवताऽभिधाऽङ्गीकारादिति शङ्क्यम्, अप्रस्तुतस्यार्थस्याभिधया बोधेऽपि तन्मूलानभिधेयवस्तुव्यङ्ग्ये वस्तुध्वनिस्वीकारात्। यथा ''शनिरशनिश्च तमुच्चैर्निहन्ति यस्मै नरेन्द्र कुप्यसि त्वम्'' इत्यादावशनिशब्देन प्रस्तुतवस्तुरूपार्थादन्यस्मिन्नप्रस्तुते शनिविरूद्धरूपेऽप्यर्थेऽभिधयैव वेद्ये ''विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत'' इति योऽर्थः प्रतीयते स व्यञ्जनावेद्य एवेत्यस्ति शब्दशक्तिमूलो वस्तुध्वनिः।

## मम्मटोक्तिमंशतो निराकरोति

यत्तु–

**भ्रमिमरतिमलसहृदयता प्रलयं मूर्च्छां तमः शरीरसादम्।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्।।**

इत्यत्र मम्मटाचार्येणोक्तं यदत्र विषपदेन हालाहलं व्यङ्ग्यं, वाच्यस्य ''जलद एव भुजग'' इति रूपकस्य सिद्धिकृदिति (का०प्र०, ५ म०उ०) गुणीभूतव्यङ्ग्यमिति, तत् प्रौढिवादितामात्रम्। वस्तुतस्तत्राऽप्यभिधैव।

न चैवं शनिरशनिश्चेत्यादिपद्ये शनिपदात् प्रस्तुताप्रस्तुतोभयाऽर्थेऽभिधया वेद्ये सत्यनन्तरमनभिधेये ''विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत'' इत्यर्थे व्यञ्जनास्वीकारेऽर्थशक्तिमूल एव वस्तुध्वनिः स्यात्, न तु शब्दशक्तिमूल इति न शङ्क्यम्, शब्दपर्यायपरिवृत्त्यसहत्वेन तस्य शब्दशक्त्युद्भवत्वादिति।

## काव्यदर्पणकारमतम्

राजचूडामणिदीक्षितश्च दीक्षितमतमक्षरशो विलिख्य निराचकार। तद्यथा— नानार्थपदवाच्यैकार्थसंसर्ग्यर्थान्तरवाचकनानार्थपदसमभिव्यहाररूपशब्दान्तरसन्निधिरप्राकरणिकेऽप्यर्थेऽभिधां नियच्छतीत्यप्राकरणिकोऽप्यर्थोऽभिधयैव वेद्य इति यदुक्तं दीक्षितेन तदयुक्तम्, यतो हि— नियतार्थपदसमभिव्याहार एव शब्दान्तरसन्निधिः, न तूक्तरूप इति तत्र शब्दान्तरसन्निधिरेव नास्ति। अस्तु वा भवदभिमतरूप एव शब्दान्तरसन्निधिः, तथापि प्रस्तुताऽप्रस्तुतार्थद्वयसाधारणः स कथमप्रस्तुतेऽर्थेऽ भिधां नियमयति। प्रकरणेन च प्रस्तुतेऽर्थे एवाभिधाया नियमनान्नाभिधयाऽप्रस्तुतार्थप्रतीतिसम्भवः।

न च "असावुदयमारूढ:" इत्यादावर्थद्वयप्रतीतेरनुभवसिद्ध-तयाऽर्थद्वयानुकूलानेकार्थ-पदसमभिव्याहाररूपशब्दान्तरसन्निधिरेव तत्राभिधेयार्थप्रतिपादने प्रयोजक इति वाच्यम्, अभिधाया: प्रस्तुतार्थे एव प्रकरणेन नियन्त्रितत्वात्, तस्य शब्दान्तरसन्निधेर्व्यञ्जनासहकारितयैव प्रयोजकत्वस्वीकृते:।

नन्वेवं यत्र "अन्धकद्विरदध्वंसी देयात् पञ्चानन: श्रियम्" (का०द०, द्वि०उ०) इत्यादौ द्विरदपदेन प्रतीतस्य गजस्य विरोधेन पञ्चाननपदस्य सिंहरूपेऽप्रस्तुतेऽर्थेऽप्यभिधा नियम्यते, तत्र का गति:? तत्राप्यभिधानियामकान्तराऽपेक्षया प्रकरणस्य बलवत्त्वेन प्रकरणविरोधे सति नियामकान्तरेणाभिधाया नियमनाऽसम्भवात्।

अत एव यमलार्जुनवृक्षभङ्गप्रकरणे- "कृष्णार्जुनालोकनजातविस्मया:" इत्यत्रार्जुनपदस्य पृथापुत्रे पदार्थस्मृतिप्रयोजकयो: प्रसिद्धिप्राचुर्यसाहचर्य्ययो: सत्त्वेऽपि प्रकरणाद् वृक्षविशेषस्यैव स्मृतिर्जायते।

अत्र प्रकरणेन प्रस्तुतेऽर्थे नियन्त्रितायामभिधायां व्यञ्जनयापि कथमप्रस्तुतार्थस्मृतिरिति न शङ्क्या, प्रकरणेन केवलाभिधैव नियम्यते, न व्यञ्जनाऽपि। अतो व्यञ्जनयाऽप्रस्तुतार्थस्मृतौ बाधकाभावात्।

न च प्रकरणस्याभिधानियामकत्वकल्पनं नानार्थशब्दस्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे सति विशेषस्मृतिव्यवस्थार्थं नादृष्टार्थम्। यद्यर्थविशेषोपस्थितौ सत्यां पुनर्व्यञ्जनयाऽर्थान्तरोपस्थिति: स्यात्, तदा नियामककल्पनमेव व्यर्थमिति वाच्यम्। यत्रैकस्यैवार्थस्य बोधाय नानार्थक: शब्द: प्रयुक्त:, यथा सैन्धवमानयेत्यादि:, तत्र प्रकरणेन प्रस्तुतेऽर्थेऽभिधाया नियमनादर्थान्तरस्य प्रतिबन्धकत्वकल्पनेन सफलत्वात्। यत्राऽर्थान्तरेऽपि तात्पर्यम्, तत्र सामान्यतोऽभिधानियामकत्वेन क्लृप्तेन प्रकरणेनाभिधाया प्रस्तुतेऽर्थे नियन्त्रणे कृतेऽपि पुनरनुभवपथमवतरन्त्या अर्थान्तरप्रतीतेर्व्यञ्जनां विनाऽसम्भवात्, तत्कल्पनाया आवश्यकत्वात्।

यच्चोक्तम्— शब्दान्तरसन्निध्यादेर्विशेषस्मृतिहेतुत्वाऽनङ्गीकारे "सैन्धवमानय" इत्येकार्थपरनानार्थस्थले व्यञ्जनयाऽपि नार्थान्तरप्रतीति:। "असावुदयमारूढ:" इत्येकार्थपरकनानार्थस्थले तु व्यञ्जनयाऽर्थान्तर-प्रतीतिरिति व्यवस्था न स्याद् अविशेषात्।

अत एकार्थपरकनानार्थस्थले शब्दान्तरसन्निध्यादेरभावान्नार्थान्तर-प्रतीतिरनेकार्थ–परनानार्थस्थले तु शब्दान्तरसान्निध्यादे: सत्त्वेनार्थान्तरप्रतीतिरिति शब्दान्तरसन्निध्यादीनां व्यञ्जनाया नियामकता व्यक्तिवादिभिरप्यास्थेया। तद्वरमभिधानियामकत्वकल्पनमेव तेषामिति, तन्न।

एकार्थपरनानार्थस्थले प्रकरणस्याभिधानियामकता क्लृप्ताऽतोऽनेकार्थपरनानार्थस्थलेऽपि प्रकरणमभिधामवश्यं नियंस्यतीति कल्पनं युक्तम्, परं शब्दान्तरसन्निध्यादिर्व्यञ्जनां सहकरोतीति कल्पनाऽप्रामाणिकी। एवमश्लीलस्थले व्यञ्जनयैवाश्लीलार्थप्रतीतिसम्भवे प्रकरणस्याभिधानियामकत्वे सङ्कोचस्य कल्पनमयुक्तम्।

यदप्युक्तम्— ''तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा'' सा चाप्रस्तुतार्थप्रतिपादनेऽप्यस्त्येवेति तदपि न, यतो हि तद्विषयकशक्तिग्रहस्य तत्प्रतिपादने किं साक्षादपेक्षा, उत परम्परया? आहोस्वित् साक्षात्परम्परोदासीनतयाऽपेक्षामात्रम्? तत्र नाद्य: तद्विषयकशक्तिग्रहस्या-प्रस्तुतार्थप्रतिपादने साक्षादपेक्षाऽभावात्। न च तद्विषयकशक्तिग्रहस्यापेक्षाया अभावेऽगृहीतशक्तिकस्यापि पुंसो व्यञ्जनयाऽर्थान्तरप्रतीति: स्यादिति वाच्यम्, प्रकरणेनाभिधाया नियन्त्रणस्थले एवार्थान्तरस्मृतौ व्यञ्जनाया उन्मेषात्। यस्यार्थान्तरे शक्तिग्रहो नास्ति, तस्याऽर्थान्तरस्मृतेरेवाभावेन तत्र प्रकरणस्याभिधानियामकत्वाप्रसक्त्या व्यञ्जनाया अनुन्मेषात्।

न द्वितीय:, घटादिपदस्य घटाद्यर्थप्रतिपादने तद्विषयकशक्तिग्रहस्य साक्षादेवापेक्षितत्वात्।

नापि तृतीय:, छत्रिणो यान्तीत्यत्र लक्षणावृत्या छत्र्यच्छत्रिसाधारणतया छत्रिप्रतिपादनेऽप्यभिधाप्रसङ्गात्।

न च तद्विषयकशक्तिग्रहमपेक्ष्य शक्यतावच्छेदकप्रकारेण तत्प्रतिपादनमभिधा। छत्रिणो यान्तीत्यत्र छत्र्यच्छत्राद्युभयसाधारणैकसार्थगन्तृत्वेनैव लक्षणया छत्रिप्रतीति:, न तु छत्रित्वेनेति नाभिधाप्रसङ्ग इति वाच्यम्, प्राचीनानां मते गङ्गायां घोष इत्यत्र गङ्गापदेन गङ्गात्वेनैव तीरप्रतीते: स्वीकारादत्रापि छत्रित्वेनैव छत्रिप्रतीते:।

यदि चैकसार्थगन्तृत्वेनैव छत्रिप्रतीति: स्वीक्रियते, तथाप्यवच्छेदकत्व–प्रकारत्वयोर्बहुपदार्थघटितत्वेन शक्यताऽवच्छेदकप्रकारेणेति विशेषणापेक्षया ''साक्षात्त्वविशेषणस्यैव'' लघुत्वात्।

यदि च छत्रिणो यान्तीत्यत्राभिधया छत्रिप्रतीति:, लक्षणया त्वच्छत्रिमात्रप्रतीतिरिति जहल्लक्षणा। अजहल्लक्षणा तु नास्त्येवेति मतम्, तदा ''सैन्धवमानय'' इत्याद्येकार्थपरनानार्थस्थले लाघवेन नानार्थपदत्वावच्छेदेनैव प्रकरणादे: प्रकृतार्थेऽभिधामात्रनियमनप्रयोजकत्वकल्पनात्, अप्रकृतार्थे व्यञ्जनाया एवावश्यं वाच्यत्वेन व्यञ्जनायामतिव्याप्तिनिरासाय ''तद्विषयकशक्तिग्रहं साक्षादपेक्ष्य तत्प्रतिपादनमभिधा इत्यवश्यंवाच्यत्वात् तद्विषयकशक्तिग्रहस्य

साक्षादपेक्ष्यत्वं च, तदर्थस्मृत्यनुकूलसिद्ध्यर्थमनपेक्ष्यत्वे सति तदर्थस्मृत्यर्थमपेक्ष्यत्वम्''।

ततश्च ''छत्रिणो यान्ति'' इत्यत्र लक्षणया छत्र्यच्छत्रि-स्मृत्यनुकूलच्छत्रिमात्रस्मृतिसिद्ध्यर्थमेव, तद्विषयकशक्तिग्रहस्यापेक्षितत्वान् नाभिधा।

अनेकार्थपरनानार्थस्थलेऽप्यप्रस्तुतार्थविषयकशक्तिग्रहस्याप्रस्तुतार्थस्मृतिप्रसक्त्या प्रस्तुतार्थे प्रकरणेनाभिधानियमन एवोपयोगित्वेन तदर्थस्मृतिहेतु-व्यञ्जनोन्मेषानुकूलाभिधानियमनसिद्ध्यर्थमेवापेक्ष्यतया न साक्षादपेक्ष्यत्वमिति न तत्राप्यभिधावकाशः। एवं साक्षात्त्वविशेषणेऽपि ''यो गङ्गां समदीधरत्'' इत्यत्र श्रीकृष्णपक्षे अगम् (पर्वतम्) गाम् (पृथिवीं) इति पदभङ्गश्लेषेण गोशब्दस्य भूमिरूपेऽर्थे प्रचुरप्रसिद्धेरभावाद् विलम्बेनार्थप्रतीतावपि, तत्र तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमपेक्षितत्वाद् नाभिधाया अभावः। तथा च प्रकृताप्रकृतोभयपरेऽप्यप्रकृतेप्रसिद्धिप्राचुर्यात् झटित्यर्थप्रतीतावपि न प्रकृतार्थे व्यञ्जनापत्तिः। तत्रापि तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेवापेक्षितत्वात्।

वस्तुतो यस्य शब्दस्य प्रकृतार्थे न प्रचुरा प्रसिद्धिः, तस्य शब्दस्य प्रयोगे निहितार्थदोषो भवति। अत एतादृशः शब्दः काव्येषु न प्रयोक्तव्यः। यद्यपि श्लेषयमकादिषु न निहितार्थदोषः, तथाऽप्यप्रस्तुतार्थे प्रसिद्धिरहितस्य पदस्याप्रयोग एव। अत एव प्रस्तुतार्थे यस्य शब्दस्य न प्रसिद्धिः, तस्य यमकादिष्वपि क्लिष्टत्वदोषः सर्वजनप्रसिद्धः।

यदप्युक्तं प्राचीनैः प्रस्तुताप्रस्तुतार्थयोः प्रतीयमाने उपमाद्यलङ्कारेऽवश्यं व्यञ्जना आश्रयणीयेति कृत्वा, तत्र शब्दशक्तिमूलाव्यञ्जना स्वीकृता, न त्वप्रस्तुतार्थेऽपि व्यञ्जनाया अस्तित्वप्रतिपादनायेति, तदपि न युक्तम्। ''भ्रमिमरतिमलसहृदयताम्'' इत्यादिपद्ये विषशब्देन हालाहलं व्यङ्ग्यं जलदस्य भुजगत्वरूपणस्य वाच्यस्य सिद्धिं करोतीति काव्यप्रकाशे (५/१२६ ध्वन्यालोके द्वि०उ० २१ तमा का०वृ०) कण्ठत एवोक्तेरप्रस्तुतेऽर्थेऽपि व्यञ्जनास्वीकारात्। ''उपोढरागेण विलोलतारकम्'' इत्यादिसमासोक्तौ श्लेषव्यवहारोऽपि रागादिशब्दानामनेकार्थकत्वाभिप्रायेण न त्वप्रस्तुताऽर्थेऽप्यभिधेत्यभिप्रायेण।

न चैवं शनिरशनिश्चेत्यत्राशनिशब्दस्य प्रस्तुताऽर्थो वज्रः, तस्मादन्योऽप्रस्तुतोऽर्थः शनिविरुद्धस्तस्य व्यञ्जनया प्रतीतिस्वीकारे तस्यैव शब्दशक्त्युद्भववस्तुध्वनेरुदाहरणत्वेन ''विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत'' इति प्रशंसनीयस्य प्रभावातिशयप्रतीतिपर्यन्तमनुधावनं प्राचीनानां व्यर्थं

स्यादिति चेत्, न, तस्याऽपि व्यङ्ग्यस्यार्थपर्यालोचनालभ्यत्वेऽपि प्रस्तुताऽप्रस्तुतार्थसाधारणशब्दसापेक्षतया शब्दशक्त्युद्भवत्वं नार्थशक्तिमूलकत्वमिति प्रतिपादनाभिप्रायेण तत्पर्यन्तानुधावनस्य युक्तत्वादिति।

इत्थमनेनानेकशः क्लिष्टकल्पनया दीक्षितमतं निराकृतं यत् तत् प्राचीनानां समर्थनायैव प्रतिभाति। (काव्यदर्पण २/१०१-७)

## अत्र ध्वनिकारमतम्

अत्र ध्वनिसम्प्रदायप्रवर्तकध्वनिकारिकाकारस्यालोककारस्य च मतमुपादीयते। स च शब्दशक्त्युद्भवध्वनिं निरूपयन्नाह—

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।**
**यस्मिन्नयुक्तः शब्देन शब्दशक्त्युद्भवो हि सः।।**

(ध्वन्यालोक २/२१)

आनन्दवर्धनाचार्यश्च व्याचख्यौ- यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते, स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम्। वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेष इति।

एवमलङ्कारो न वस्तुमात्रमिति कथनेन वस्तुरूपार्थद्वये प्रतिभासमाने श्लेष-निरूपणेन च ज्ञायते यत् तावत्प्रस्तुतार्थेऽप्यभिधामेव स्वीकुरुत इति। अपि च—

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमःशरीरसादम्।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्।।**

(ध्व०लो०, द्वि०उ०, पृ० २३७)

इत्यत्र विषशब्दस्य जलहालाहलरूपार्थौ वाच्यावेव। यतो ह्युक्तमानन्दवर्धनाचार्येण— "अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते" (तत्रैव, पृ० २३८) इति।

## अत्राभिनवगुप्तपादाचार्यमतम्

लोचनेऽपि व्याख्यातं यत् "भुजगशब्दार्थपर्यालोचनबलादेव विषशब्दो जलमभिधायाऽपि न विरन्तुमुत्सहते, अपि तु द्वितीयमर्थं हालाहललक्षणमाह तदभिधानेन विनाऽभिधाया एवासमाप्तत्वात्" इति।

इत्थमानन्दवर्धनाभिनवगुप्तप्रभृत्याचार्याणां मतेऽप्रस्तुतोऽर्थो वाच्य एवेति। एभिः प्रभावित एवाप्पय्यदीक्षितोऽप्रस्तुतेऽर्थेऽभिधामाहेति युक्तमेव। अत्राभिनवगुप्तपादाचार्याश्चतुर्णां मतानामुपादानं कृतवन्तस्तद्यथा— (ध्व०, लोचने २४१-२४३पृ०) ध्व०लो०लोचनबालप्रियादिव्यञ्जनासहिते।

येन पुंसा यस्य शब्दस्यार्थान्तरेऽपि पूर्वमभिधा गृहीतं तस्यैव पुंसस्तस्मादेव शब्दात् संयोगादिना प्राकरणिकेऽर्थे नियन्त्रितायामभिधायां प्राकरणिकार्थबोधानन्तरमप्राकणिकार्थबोधो व्यञ्जनव्यापारादेव जायते, इति प्रथमम्।

सा शब्दस्यार्थान्तरप्रतिपादिकाऽप्यभिधैव। परञ्चार्थसामर्थ्यसहकारिता–मवलम्ब्यार्थान्तरं बोधयति, अतः सहकारिभेदात् सा व्यञ्जनव्यापाररूपोच्यते, इति द्वितीयम्।

शब्दश्लेषे शब्दभेदोऽस्त्येव। अर्थश्लेषेऽपि "शक्तिभेदाच्छब्दभेदः" इति दर्शने द्वितीयः शब्दस्तत्रानीयते। स च द्वितीयः शब्दो यत्र द्वावर्थौ प्राकरणिकौ तत्र त्वभिधया नीयते। यथा— "क" इतो धावति, किं गुणविशिष्टश्चेति द्वयोः प्रश्नयोरुत्तरप्रदानायोक्तम्— "श्वेतो धावति" इति वाक्यघटकं श्वेतपदम्। यत्र चैकोऽर्थः प्राकरणिकोऽपरोऽर्थोऽप्राकरणिकः, तत्र प्राकरणिकेऽर्थेऽभिधाया नियमनादप्राकरणिकार्थबोधनाय द्वितीयः शब्दो व्यञ्जनव्यापारादेवानीयते। तत्राप्रस्तुतोऽर्थो ध्वननव्यापारानीतद्वितीयशब्दबलात् प्रतिपन्नोऽपि ध्वननव्यापारमूलत्वाद् व्यङ्ग्य एवेति तृतीयम्।

अनेकार्थस्य शब्दस्य प्रकरणज्ञानाधीनतात्पर्यज्ञानेन प्राकरणिकेऽर्थेऽभिधाया नियन्त्रणादप्राकरणिकार्थस्य बोधे तात्पर्यज्ञानं प्रतिबन्धकमस्ति। तस्य प्रतिबन्धकस्य द्वितीयव्याख्यानोक्तार्थसामर्थ्येन निवृत्तिः क्रियते। अतोऽप्रस्तुतार्थबोधनोऽप्यभिधेव क्षमा। अभिधया बोधनाच्च द्वितीयोऽप्यर्थो वाच्य एवेति जाते, द्वितीयार्थे शब्दस्यासम्बद्धार्थाभिधायित्ववारणाय यो द्वयोरर्थयोः सादृश्याख्यसम्बन्धोऽभेदारोपो वा प्रतीयते स शब्दादेव। वाचकशब्दाभावेऽपीति ध्वननव्यापारादेव। अतोऽलङ्कारध्वनिरेव शब्दशक्तिमूलो न वस्तुध्वनिरिति तुरीयम्।

अत्रानन्दवर्धनाभिनवगुप्ताप्पयदीक्षितप्रभृतयश्चतुर्थमतानुयायिनो लक्ष्यन्ते। पञ्चत्रिंशद्विधध्वनिभेदेषु शब्दशक्त्युद्भवस्यालङ्काररूपस्यैकविधस्यैव गणितत्वात्। (लोचने (ध्व०लो०, द्वि०उ०२१ तमकारिकाया व्याख्याने)। अन्ये च मम्मटरुय्यक–जयरथ–राजचूडामणिदीक्षितप्रभृतयः प्रथममतानुयायिनो द्वितीयेऽर्थे व्यञ्जनां स्वीकुर्वन्ति।

परमप्पयदीक्षितो मम्मटप्रभावितोऽप्यस्ति, अतः शब्दशक्त्युद्भववस्तुध्वनिमपि स्वीकरोति, परं नानार्थस्थले द्वितीयेऽर्थे व्यञ्जनां नाङ्गीकरोति। मम्मटविरोधपरिहाराय मम्मटाभिप्रायं क्वचित् स्वमतानुकूलं

प्रकाशयति, क्वचित्प्रौढवादितामुपपादयति। कथयति चायं विशेषः वृद्धैः प्रस्फुटं न प्रतिपादित इति।

**विमर्शः**

अत्र पण्डितराजेन "व्यञ्जनया प्राकरणिकार्थबोधं प्रति तच्छब्दस्य तदर्थगतशक्तिज्ञानं कारणमिति कार्यकारणभावनिराकरणाय यदुक्तम्, "निःशेषच्युत" इत्यादावधमपदस्य रमणे शक्तिग्रहाभावाद् रमणव्यक्त्यभापत्तेरिति तदयुक्तम्, नानार्थस्थले येन पुंसा प्रस्तुतेऽर्थेऽप्यभिधा ज्ञाता, तस्यैव प्रस्तुतेऽर्थेऽभिधाया नियन्त्रणादप्रस्तुतस्य व्यञ्जनया बोधात्। अत एव शाब्दीव्यञ्जनाया अभिधामूलकत्वं मम्मटेनोक्तम्— "अभिधामूलं त्वाह" (का०प्र०, द्वि०उ०) इत्यादिना, अन्यैरपि ध्वनिसम्प्रदायाचार्यैस्तथा स्वीकृतम्। निःशेषेत्यादि तु आर्थ्या व्यञ्जनाया उदाहरणम्, तत्र व्यङ्ग्यार्थेऽभिधाज्ञानस्यापेक्षितत्वात्।

अपि च यत् पृष्टं भवता, यद् नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव? तन्मयाऽपि पृच्छ्यते यद् योगरूढिस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव? सर्वत्रैवेति चेद् रूढिर्योगापहारिणीति नियमस्यैव व्यर्थत्वापत्तेः। पङ्कजाक्षीत्यादौ पङ्कजपदस्य योगार्थानवभासाच्च। क्वचिदेवेति चेद् नियामकं किम्? चमत्कार एव नियामक इति चेत्, प्राचीनमतेऽपि तथा वक्तुं शक्यत्वात्, तन्निरासप्रयासस्यैव व्यर्थत्वादिति।

इत्थं पर्यालोचनेन ज्ञायते यत् पण्डितराजो दीक्षितमतेनात्र सुतरां प्रभावितः, तद्रीत्या प्राचीनमतं निराकृत्यापि प्राचीनेषु श्रद्धावशात् तदभिमतं शब्दशक्त्युद्भवध्वनिं योगरूढिस्थले समर्थयति। अत एवोक्तम्— एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जकत्वमपि न दुष्यतीति। (र०गं०, द्वि०आ०, नानार्थनिरू०)

**अभिधानियामकत्वे तदुदाहरणे च मतभेदः**

तत्र मम्मटाचार्यो नानार्थस्थलेऽभिधानियामकानाह—

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**
**सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**

(का०प्र० २/उद्धृतम् भ०ह०का०)

ततश्च साहचर्यस्योदाहरणं- "रामलक्ष्मणौ" इत्याह।

अयं भावः-

**रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे।**
**राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्।।**

इति विश्वकोषाद् रामशब्दो नानार्थकः। एवं लक्ष्मणशब्दोऽपि सारसे, दुर्योधनपुत्रे, दशरथापत्ये च प्रसिद्ध इत्यनेकार्थकः। रामलक्ष्मणावित्यत्र रामसाहचर्याद् लक्ष्मणशब्दस्य दाशरथौ शक्तिर्नियम्यते न सारसादौ। लक्ष्मणसाहचर्याच्च रामशब्दस्य दाशरथौ शक्तिर्नियम्यते न भार्गवादौ। अत्र रामशब्दस्य शक्तौ नियन्त्रितायां तत्साहचर्याल्लक्ष्मणशब्दस्य शक्तिनियमनं लक्ष्मणशब्दस्य च शक्तौ नियन्त्रितायां रामशब्दस्य शक्तिनियमनमिति परस्पराश्रयो न शङ्क्यः, उभयोः साहचर्येणैकदैव दाशरथावभिधानियमनात्। साहचर्यं च "एककालदेशावस्थायित्वम्" इति वामनीकारः। "एकस्मिन् कार्ये परस्परापेक्षित्वम्" इति पण्डितराजः। साहचर्यं सादृश्यमिति नागेशः। सदृशयोरेव प्रायेण सहचरणदर्शनात्। (शब्दयोरपि सदृशार्थयोरेव सहप्रयोग इत्युत्सर्गाच्च)।

**"साहचर्यं स्ववाच्यैकवस्तुना सहचारिता"।**

स्ववाच्यभूतेषु वस्तुष्वेकेन वस्तुना पदार्थान्तरस्य प्रायशः सहचारित्वं साहचर्यमिति राजचूडामणिदीक्षितः। केचन टीकाकाराः लक्ष्मणशब्दमेकार्थं स्वीकृत्य तत्साहचर्येण रामशब्दस्य दाशरथावभिधानियमनं स्वीकुर्वन्ति।

अत्र पण्डितराजः— एकस्मिन् कार्ये परस्परापेक्षित्वं साहचर्यं निरूप्य "रामलक्ष्मणौ" इत्युदाहृत्य चाशशङ्के। परस्परापेक्षित्वरूपं साहचर्यं कस्मिंश्चित् कार्ये विवक्षितं चेद् जलाहरणरूपकार्ये घटस्यापि साहचर्यात् "रामघटा"वित्यत्र घटसाहचर्यस्यापि रामपदस्याभिधानियामकतापत्तिः स्यात्। सर्वेषु कार्येषु विवक्षितं चेद् लक्ष्मणस्यापि तदभावाद् बहूनां कार्याणामेकाकिना रामेण सम्पादितत्वात् लक्ष्मणसाहचर्यमपि अभिधां नियन्तुमक्षमः स्यात्। उभयविधसाहचर्यस्वीकारेऽपि "रामायोध्ये" "रघुरामौ" इत्यादिष्वभिधाया अनियमनाच्च। (रघोरसत्वादयोध्यायाश्च जडत्वात्)।

न च नानार्थपदसमभिव्याहृतपदार्थस्य पदार्थान्तरस्य च प्रसिद्धः सम्बन्धः साहचर्यम्। स च सम्बन्धः रामलक्ष्मणावित्यत्रैकजन्यत्वरूपः, सीतारामावित्यत्र दाम्पत्यरूपः, रामदशरथावित्यत्र जन्यजनकभावरूपः, रामहनुमन्तावित्यत्र स्वामिभृत्यभावरूपः, "रामायोध्ये" इत्यत्र स्वस्वामिभावरूप इत्यनेकविधः। अतः सर्वत्र साहचर्यमभिधां नियच्छतीति

वाच्यम्, अनेकविधसम्बन्धस्वीकारे चक्रादिसम्बन्धेऽपि (संयोगसम्बन्धेऽपि) विशेषाभावात् "सशङ्खचक्रो हरिः" इत्यत्रापि साहचर्यस्यैव नियामकतापत्तेः संयोगसाहचर्ययोर्विषयविभागाभावात्।

न च यत्र संयोगसम्बन्धस्तत्र संयोगोऽभिधां नियच्छति। यत्र च तदतिरिक्तः सम्बन्धस्तत्र साहचर्यमिति द्वयोर्विषयविभागोऽस्त्येवेति वाच्यम्, केवलं संयोगसम्बन्धस्यैव पृथक्कारे विनिगमकाभावात्। न च यत्र संयोगसम्बन्धः शब्दत उपात्तो यथा "सशङ्खचक्रो हरिरित्यादौ तत्र संयोगोऽभिधाया नियामकः। यत्र तु सम्बन्धो न शब्दोपात्तोऽपि तु सम्बन्धिमात्रं शब्दोपात्तं यथा रामलक्ष्मणावित्यादौ तत्र साहचर्यमभिधानियामकमिति वाच्यम्।" "रामलक्ष्मणयो" रेकत्र स्थितयोः सलक्ष्मणो राम इत्यत्र संयोगस्य शब्दोपात्तत्वे मिथोऽसंश्लिष्टतया संयोगगुणस्याप्रतीत्या साहचर्यस्यैवोदाहरणताप्रसक्तौ "सशङ्खचक्र" इत्यादीनामपि साहचर्योदाहरणतायाः समुचितत्वात्।

अत्रोच्यते— कारिकायां संयोगशब्दः सम्बन्धसामान्यपरः, स च यत्र शब्दत उपात्तस्तत्र संयोगोऽभिधां नियच्छति; यत्र सम्बन्धिमात्रं शब्दत उपात्तं न सम्बन्धस्तत्र साहचर्यमिति प्राचामाशयात्। एवं "सगाण्डीवोऽर्जुनः" इत्यत्र सहार्थक 'स' शब्दस्योपात्तत्वेन संयोग एवाभिधां नियन्त्रयति। गाण्डीवार्जुनावित्यत्र सम्बन्धानुक्तत्वेन सम्बन्धिन एवोपात्तत्वेन साहचर्यमेवाभिधां नियच्छतीति प्रतिपाद्य प्राचीनानामाशयादिति यदुक्तं ते न ज्ञायते पण्डितराजोऽत्र न सम्मत इति। वस्तुतः 'सलक्ष्मणो रामः' इत्यस्य किं समाधानं संयोगस्य शब्दोपात्तत्वेऽपि संयोगगुणस्याप्रतीतेः।

विरोधितोदाहरणे यद्यपि पण्डितराजोऽप्पयदीक्षितोक्तं दूषणं निराकृत्य मम्मटं समर्थयाञ्चक्रे तथाप्यापाततो मम्मटाचार्यैरुक्तस्य "रामार्जुनगतिस्तयोः" इति विरोधितोदाहरणस्य खण्डनं प्रतीयते। "तस्मात् प्राचीनोदाहरणमिव त्वदुक्तमुदाहरणमप्यशुद्धमेवेति तदुक्तेः (र०गं०, २, पृ० ४९) अर्थाद् यथा "रामार्जुनगतिस्तयो"रिति (वस्तुतः "रामार्जुनाविति पण्डितराजेन पूर्वं तथैवोक्तेः) मम्मटाचार्योक्तं लक्षणमशुद्धं तथैव "रामरावणयोरिवे"ति त्वदुक्तम् (अप्पयदीक्षितोक्तम्) उदाहरणमपि न युक्तम्, रामलक्ष्मणावितिवत् साहचर्यस्यैवोदाहरणतापत्तेरिति।

अयं भाव अप्पय्यदीक्षितो वृत्तिवार्तिकस्य प्रथमपरिच्छेदे संयोगादीन् निरूप्य विरोधिताया अभिधानियामकत्वे "रामरावणयोरिवे"त्युदाहृतवान्। तत्र रावणशब्दस्यैकार्थकत्वेन रावणेन सह वध्यघातकभावविरोधादनैकार्थस्य

रामशब्दस्य रामचन्द्रे (राघवे) अभिधा नियम्यते। मम्मटाचार्योक्ते उदाहरणे ''रामार्जुनगतिस्तयो''रित्यत्र तु उभयपदमनेकार्थकम्। अतो रामपदस्य जामदग्न्येऽभिधानियमने सति स्मृततद्विरोधेनार्जुनपदस्य कार्तवीर्ये अभिधा नियमनम्। अर्जुनपदस्य च कार्तवीर्येऽभिधानियमने सति तद्विरोधानुसन्धानेन रामपदस्य रामचन्द्रेऽभिधानियमनमित्यन्योन्याश्रयापत्तेः। अत एकतरस्य निश्चितार्थकत्वे (एकार्थकत्वे) एव स्मृततद्विरोधेन नानार्थकस्याभिधानियमनमिति मदुक्तमुदाहरणमेव युक्तमित्यप्याह दीक्षितः।

तत्र पण्डितराजो दीक्षितं खण्डयन्नाह— अन्यतरपदस्य व्यवस्थितार्थकत्वे ''रामलक्ष्मणाविव रामरावणयोरिव'' इत्यपि साहचर्यस्यैवोदाहरणं स्यात्। अत्र लक्ष्मणसाहचर्यं रामस्य प्रसिद्धं न रावणसाहचर्यमिति वक्तुं न शक्यम्, यथा पितृभ्रातृजायापत्यभृत्यनगरीणां सम्बन्धः प्रसिद्धस्तथैव रिपोः सम्बन्धस्यापि लोके प्रसिद्धत्वात्। शत्रुसम्बन्धस्य प्रसिद्धेऽपि यदि साहचर्यं न नियामकं, तस्य विरोधिता नियामकं चेत् मित्रत्वादेरपि पृथग्गणनापत्तेः। अतो यथा मम्मटोक्तमुदाहरणमयुक्तं तथैव त्वदुदाहरणमपि। अनया उक्त्या प्रतीयते यत् पण्डितराजः मम्मटभट्टोक्तमपि उदाहरणमशुद्धमेव मनुते। परं दीक्षितेन निरूपितां ''रामार्जुनगतिस्तयो''रित्यत्र शब्दान्तरसन्निधेरुदाहरणतां निराकुर्वन्नाह — शब्दान्तरसन्निधेः दीक्षितोक्ते उदाहरणे ''निषधं पश्य भूभृतम्, नागो दानेन राजते'' इत्यादौ यावदभिधाया नियमनं न स्यात्तावदन्वयबोध एव न जायते ''रामार्जुनगतिस्तयो''रित्यस्य तु रामार्जुनवद् गतिः पराक्रमशालित्वमित्यर्थान्तरकरणेऽपि अन्वयबोधान् महति वैलक्षण्येऽस्य शब्दान्तरसन्निधेरुदाहरणात्वायोगाद् इति। इत्थं निराकृत्य मम्मटाचार्यं समर्थयाञ्चक्रे। तयोः कयोश्चित् प्रसिद्धविरोधयो रामार्जुनगतिः रामार्जुनसदृशी गतिः आचरणमिति तदर्थवर्णने प्रकरणवशात्प्रतीतेन विरोधेन युगपदेव भार्गवकार्तवीर्ययोरभिधाया नियमनस्योपपत्तेरिति।

वस्तुतः पण्डितराजेन पूर्वं यदुक्तं ''रामर्जुनावि''ति प्राञ्च उदाहरणं वदन्ति तदयुक्तम्, काव्यप्रकाशस्य प्राय उपलब्धेषु संस्करणेषु ''रामार्जुनगतिस्तयोः'' इत्युदाहरणस्यैव सत्त्वात्प्राचीनटीकाकृद्भिस्तथैव व्याख्यातत्वाच्च। मन्ये पण्डितराजोऽप्पयदीक्षितप्रदत्तस्य तादृशदूषणस्यानुरूपेण तादृशपाठमचीक्लृपत्। अनन्तरं तद्दूषणं निराकर्तुं शुद्धं पाठं निर्दिदेशेति।

## शब्दस्यान्यस्य सन्निधिः

पण्डितराजः शब्दान्तरसन्निधिश्चानेकार्थकपदस्यैकार्थमात्र-प्रतियोगिकसम्बन्धविशिष्टार्थान्तराभिधायकपदसमभिव्याहार इति। उदाहरणं च—

"करेण राजते नागः" इति। अत्र करपदं किरणशुण्डादण्डपाणिवाचकमनेकार्थकम्। नागपदं च सर्पगजवाचकमनेकार्थम्। अत्र करपदस्य शुण्डातिरिक्तार्थस्वीकारे नागपदस्य च गजातिरिक्तार्थस्वीकारे च मिथः सम्बन्धासम्भवेन वाक्यार्थबोध एव न सम्भवति। अतः करपदस्य शुण्डारूपैकार्थमात्रप्रतियोगिकसमवाय-सम्बन्धसम्बन्धिनो गजरूपस्यार्थाऽन्तरस्याभिधायकस्य नागपदस्य समभिव्याहार इति शब्दान्तरसन्निधिरेकदैव करनागपदयोः क्रमशः शुण्डादण्डे गजरूपेऽर्थे चाभिधां नियमयति। अतो नान्योऽन्याश्रयः। अर्थान्तरस्य ग्रहणे शाब्दबोधाभावप्रसक्तेः। इति लक्षणसङ्गतिपूर्वकमुदाहृत्य पण्डितराज आह— "देवस्य पुरारातेः" इति काव्यप्रकाशकृदुदाहरणे देवपदात् सुरत्वेन रूपेण सुरस्य भूपत्वेन रूपेण च भूपस्योपस्थितिः। पुरारातिपदाच्च नगरारित्वेन रूपेण कस्यचिन्नगरस्य शत्रोः राज्ञः, असुरविशेषारित्वेन रूपेण त्रिपुरासुरवैरिणः शिवस्य चोपस्थितिरित्युभयोः पदयोरनेकार्थकत्वात् द्वयोरर्थयोः स्वीकारेऽपि अन्वयोपपत्तौ (त्रिपुरारेः शिवस्य शत्रुनगरारेः राज्ञः इत्युभयोः) एकार्थमात्रप्रतियोगिकसम्बन्ध्यर्थान्तराभिधायक-पदसमभिव्याहाराभावादत्र कथमभिधाया नियमनम् ?

न च पुरारातिपदं योगरूढम्, "रूढेर्योगापहारितया" शिवरूपस्यैवार्थस्योपस्थितेः देवपदस्यैकार्थ(सुररूपार्थ)मात्रप्रतियोगिकसम्बन्ध-वदर्थाभिधायकपदसमभिव्याहाराद् देवपदस्याभिधानियामकता सिद्धेति वाच्यम्। पुरारातिपदं योगरूढमित्यत्र प्रमाणाभावात्। यदि देवस्य त्रिपुरारातेरिति पाठः स्वीक्रियते तदापि नेदं शब्दान्तरसन्निधेरुदाहरणम्, अपि तु लिङ्गोदाहरणं स्यात्। यतो हि लिङ्गन्नाम नानार्थपदस्य, शक्यान्तरावृत्तित्वे सत्येकशक्यवृत्तिः साक्षाद् शब्दवेद्यो धर्म इति तच्चेह सङ्घटते त्रिपुरारातित्वरूपधर्मः देवपदशक्यान्तरे राजनि अविद्यमानः एकशक्ये देवे विद्यमानः साक्षात् त्रिपुरारातिपदवेद्यश्चेत्येवं लिङ्गोदाहरणं न शब्दान्तरसन्निधेरिति। यदि लिङ्गमेकपदस्यार्थः, यथा– "कुपितो मकरध्वजः" इत्यादौ कुपितपदार्थः कोपादिः यः पदार्थान्तरेणानन्वित एव नानार्थपदस्य प्रकृतशक्यस्य (कामदेवरूपस्य) धर्मतां शक्यान्तर (समुद्ररूप) व्यावृत्ततां च भजते। एवं च "पदार्थान्तरेणानन्विते सति शक्यान्तरावृत्तित्वे च सति प्रकृतिशक्यवृत्तिरेकपदार्थः लिङ्गम्" नियतार्थकशब्दसामानाधिकरण्यं शब्दान्तरसन्निधिरित्युच्यते, चेत् "देवस्य त्रिपुरारातेः" इत्युदाहरणमपि शब्दान्तरसन्निधेः स्यादिति पण्डितराजः। (र०गं०, २/पृ० ५७–६०)।

परमत्र पण्डितराजस्याभिमतिर्न प्रतीयते। "यतो हि पण्डितराजः शब्दान्तरसन्निधेरुदाहरणमाह— "करेण राजते नागः" इति। तत्र

करनागयोरुभयोरपि पदयोरनियतार्थकतया नियतार्थकशब्दसामानाधिकरण्याभावात् शब्दान्तरसन्निधेरभावात्। अत एव पण्डितराजः "अर्थस्य लिङ्गाद् भेदं" पूर्वं निरूप्य "लिङ्गं त्वेकपदार्थः कोपादिः अनन्वित एव यः पदार्थान्तरेण प्रकृतशक्यधर्मतां शक्यान्तरव्यावृत्ततां च भजते, उक्तधर्मस्तु न तथेत्यपि केचित्" इति केचिदित्यनेनारुचिराह।

अत एवाग्रे काव्यप्रकाशटीकाकारं खण्डयन्नाह। यत् टीकाकारैरुक्तं शब्दस्याव्यभिचरितस्य (नियतार्थकस्य) सन्निधिः सामानाधिकरण्यमिति। तदयुक्तम्, "करेण राजते नागः" इत्यादावव्याप्त्यापत्तेः। यदि च नियामकान्तरमन्विष्यते तदा गौरवं स्यात् "कुपितो मकरध्वजः" इति मम्मटोक्ते लिङ्गोदाहरणेऽतिव्याप्तेश्चेति।

**विमर्शः**

वस्तुतः पण्डितराजो देवस्य त्रिपुरारातेरिति पाठेऽपि शब्दान्तरसन्निधेरुदाहरणं निराकरोति। लिङ्गोदाहरणतां संस्थाप्य न तु शब्दान्तरसन्निध्युदाहरणत्वमिति वदन्तीत्युक्तेः। अत्र वदन्ति इति क्रियाया कर्तृतया अप्पयदीक्षितमहाभागा विवक्षितास्तदभिप्रायमेव प्रकटयति पण्डितराजः, न तु स्वाभिप्रायम्। स्वयं तु यथाकथञ्चिन्मम्मटं समर्थयन्नेव लक्ष्यते। परं टीकाकारमव्यभिचरितस्य शब्दस्य सामानाधिकरण्यमिति वादिनं निराकरोति, न तु मम्मटम्। अत एव "कोपस्त्वेकपदार्थः" इत्यादि प्राचामाशये तु न दोष इत्यभिदधे।

परमप्पयदीक्षितरीत्या निराकरोति। दीक्षितश्च वृत्तिवार्तिके प्रथमपरिच्छेदे— यत्तु प्राचीनाः नियतार्थकशब्दसामानाधिकरण्यं शब्दान्तरसन्निधिरिति निर्वर्ण्य "देवस्य त्रिपुराराते:" इत्यत्र त्रिपुरारातिपदस्य नियतार्थकत्वात् देवशब्दस्य शङ्करेऽभिधानियमनमाहुस्तदयुक्तम्। समभिव्याहृतशब्दस्य नियतार्थकत्वे लिङ्गेनैव तन्नियमनात्। अन्यथा लिङ्गोदाहरणेऽपि "कुपितो भूभृदि"त्यादौ कुपित इति नियतार्थकशब्दसामानाधिकरण्यात् शब्दान्तरसन्निधेरेव नियामकतापत्तेः। न च यत्र सामानाधिकरण्यं "देवस्य त्रिपुराराते"रित्यादौ तत्र शब्दान्तरसन्निधिरभिधां नियमयति। यत्र च वैयधिकरण्यं भूभृतः कोप इत्यादौ, तत्र लिङ्गमिति भेदसत्त्वे न दोष इति वाच्यम्। अस्य भेदकथनस्य परिभाषामात्रत्वात्, उभयत्र शब्दप्रतिपादितलिङ्गादेरेव नियामकत्वसम्भवात्। "व्यालो दानेन राजते" इत्यत्र व्यालपदस्य सर्पदुष्टगजवाचकत्वेन दानपदस्य मदजलवितरणार्थकत्वेन चोभयोः पदयोरनेकार्थकत्वे वैयधिकरण्ये च सत्यपि परस्परसमभिव्याहारेण

दुष्टगजमदजलरूपार्थयोरभिधानियमनस्य सर्वानुभवसिद्धत्वेनास्यावश्य-सङ्ग्राह्यत्वात्तस्यासङ्ग्रहेण लक्षणोपपादनस्यात्यन्तायुक्ततत्वाच्च। तस्मान् मदुक्तैव शब्दान्तरसन्निधेः प्रक्रिया आदरणीयेत्याह।

अत्र काव्यदर्पणकारो दीक्षितं निराकृत्य प्राचीनान् समर्थयति।

**सामानाधिकरण्यं यन्नियतार्थपदेन तत्।**
**शब्दान्तरस्य सान्निध्यं देवोऽव्यात्त्रिपुराहितः।।**

(का०द० २/५४काव्यवृत्तौ)

इति परिष्कृत्योदाहृत्य च दीक्षितमतमनूद्य निराचक्रे। तथा हि— भवता नियतार्थकशब्दसामानाधिकरण्यं शब्दान्तरसन्निधिरिति न स्वीक्रियते। लिङ्गो-दाहरणेऽतिव्याप्तेः। किन्तु नानार्थकपदवाच्यैकार्थमात्रसम्बन्ध्यर्थान्तराभिधायका-नियतार्थकपदसमभिव्याहारः शब्दान्तरसन्निधेः भवदभिमतमुदाहरणं ''निषधं पश्य भूभृतम्'' इति। तत्र देशविशेषपर्वतविशेषवाचकनिषधपदस्य पर्वतवाचि भूभृत्पदसमभिव्याहारेण पर्वतविशेषेऽभिधा नियम्यते। भूभृत्पदस्य च पर्वतविशेषराजवाचकस्य च निषधपदसन्निधानात् पर्वतेऽभिधा नियम्यते। अत्र निषधपदस्याभिधानियन्त्रणे सति भूभृत्पदस्याभिधानियमनम्। भूभृत्पदस्याभिधानियमने सति निषधपदस्येत्यन्योन्याश्रयो न शङ्क्यः। अत्र समभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनाय नापेक्षते, अपि तु स्वार्थेन गृहीतसम्बन्धकेऽर्थे व्युत्पन्नस्य शब्दस्य समभिव्याहारमात्रम्। यथा सम्बन्धिदर्शनात् सम्बन्ध्यन्तरस्मृतिस्थले गृहीतसम्बन्धस्य वस्तुनो दर्शनमात्रं सम्बन्ध्यन्तरस्मरणायापेक्षते न तु तद्दर्शनानन्तरं तत्सम्बन्धस्मरणमपि नान्योन्याश्रयस्तथेहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीतस्वस्वार्थसंसर्गक-पदार्थव्युत्पन्नभूभृन्निषधपदसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादन-स्यानपेक्षितत्वादन्योन्याश्रयाभावादिति भवतां मतम्।

परं नानार्थपदवाच्यैकार्थसम्बन्ध्यर्थान्तरवाचकानियतार्थक-पदसमभिव्याहारः शब्दान्तरसन्निधिरिति स्वीकारे ''निषधं पश्य भूभृतम्'' इति वाक्यघटकनिषधभूभृत्पदयोः कस्मिन्नप्यर्थेऽभिधानियमिता न स्यात्। यतो हि निषधपदवाच्यजनपदविशेषसम्बन्धिनि राजन्यपि भूभृत्पदस्याभिधाया नियमनसम्भवात्। निषधं भूभृतमिति पदयोः समानविभक्तिकयोः पर्वतविशेषपर्वतसामान्यरूपवाच्यार्थयोरभेदान्वयः सामानाधिकरण्यस्य फलम्, जनपदविशेषसम्बन्धिभूपरूपार्थस्वीकारेऽभेदान्वयाभावात्, सामानाधिकरण्य-निर्देशोऽनुपपन्नः स्यादिति शब्दान्तरसन्निहिता भूभृत्पदसन्निधानेन निषधपदस्य पर्वतविशेषेऽभिधाया नियमनमिति वाच्यम्।

एवं सत्यौचित्यस्येदमुदाहरणं स्यान्न तु शब्दान्तरसन्निधेरिति। न चात्रौचित्यान्निर्वाहेऽपि "व्यालो दानेन राजते" इत्यत्र व्यालपदस्य सर्परूपे वाच्यार्थेऽपि "दानखण्डने" इत्यस्यस्माद्धातोर्निष्पन्नस्य दानपदस्य खण्डनार्थस्वीकारेऽपि औचित्यनिर्वाहात्। शब्दान्तरसन्निधिनैव "दुष्टो गजो मदजलेन राजते" इत्यर्थबोधादिति वाच्यम्। व्यालपदस्याभिधानियमनात्पूर्वं दानपदाभिधानियमनम्, एवं दानपदस्याभिधानियमनात् प्राक् न व्यालपदस्येति अन्योन्याश्रयापत्तेः।

न च तदर्थसम्बन्ध्यर्थान्तरे गृहीतशक्तिकपदमेव तदर्थस्मृतौ हेतुरिति वाच्यम्। "गङ्गायां घोषः" इत्यत्रापि तीररूपार्थसम्बन्धिप्रवाहवाचकगङ्गापदात् प्रवाहस्मृतिं विनैव तीरस्मृत्यापत्तेः। एवं हस्तिपदाद् गजस्मृतिं विनैव हस्तिपकस्मरणापत्तेश्च। न चेत्थं सम्बन्धिदर्शनात् सम्बन्ध्यन्तरस्मृतिस्थलेऽपि तत्सम्बन्धित्वज्ञानं सम्बन्ध्यन्तरस्मृतिसमयेऽप्यपेक्षितं स्यादिति वाच्यम्। परस्परसम्बन्धिस्मृतौ तदपेक्षायामपि साक्षात्सम्बन्धिस्मृतौ न तदपेक्षेति कार्यानुरोधेन कल्पनात्। अत एव पदेन शक्यस्मृतौ न शक्तिस्मृत्यपेक्षा। लक्ष्यस्मृतौ तु लक्ष्यस्य शक्यसम्बन्धज्ञानापेक्षा च दृश्यते। तस्मान्नानार्थकोभयपदस्थलेषु औचित्यादेवाभिधानियमनम्।

अतो देवस्य त्रिपुराराते: (देवोऽव्यात्त्रिपुराहितः) इत्याद्येव शब्दान्तरसन्निधेरुदाहरणम्। न चैकपदस्य नियतार्थत्वे तत्प्रतिपादितलिङ्गेनैव तन्नियमनमिति वाच्यम्। तद्‌गतगुणक्रिययोरेव लिङ्गत्वेन विवक्षितत्वात्। न च तद्‌गतासाधारणधर्ममात्रस्यैव लिङ्गत्वमपि विवक्ष्यतामिति वाच्यम्। स्वतन्त्रेच्छानां प्राचां नियोगपर्यनुयोगानर्हत्वात्। अन्यथा तदर्थसम्बन्धिमात्रस्य लिङ्गत्वमवधार्य संयोगसाहचर्यादीनामपि लिङ्गान्तर्भावपर्यनुयोगस्य दुष्परिहरणीयत्वादिति।

वस्तुतः प्राचीनाः शाब्दबोधविषयभूतो धर्मः लिङ्गम्; एकपदस्यार्थश्च लिङ्गम्। यथा— "कुपितो मकरध्वजः" इत्यत्र कोपाश्रयाभिन्नः काम इति शाब्दबोधस्य विषयः कोपः लिङ्गम्। कोपश्च कुपितपदार्थ इति सिद्धमेकपदार्थत्वम्, शाब्दत्वञ्च लिङ्गत्वमित्यन्यथा लिङ्गसामर्थ्ययोर्भेदो न स्यात्। कोकिलमदजनकतायाः मधावेव स्वीकारे तु मधोः (वसन्तस्य) असाधारणधर्मतया लिङ्गत्वमेवात्र स्यात्। अत एव पण्डितराजेन "शाब्दत्वाशाब्दत्वाभ्यामेकानेकपदार्थत्वाभ्यां वा विशेषस्तु स्यात्" इत्युक्तम्।

## शब्दशक्तिमूलालङ्कारध्वनौ मतभेदः

तत्र भवान् मम्मटाचार्योऽभिधानियामकान् संयोगादीन् निरूप्य शाब्दीं व्यञ्जनां च निरूपयन्नाह—

एवं संयोगादिनाऽर्थान्तरं निवार्य प्रकृतार्थबोधनेऽपि नानार्थकस्य शब्दस्य क्वचित् श्लिष्टशब्दविन्यासवति वक्तृबोद्धव्यादिवैशिष्ट्यात् प्रतिभाशालिनां यदर्थाऽन्तरप्रतीतिस्तत्र नाभिधा तां प्रतीतिं जनयितुं समर्था। प्रकरणादिना प्राकरणिकेऽर्थे तन्नियमनात्। मुख्यार्थबाधमुख्यार्थयोग-रूढिप्रयोजनान्यतररूपहेत्वभावाच्च न लक्षणा, अर्थान्तरेऽपि कवेस्तात्पर्यमस्तीति चेत् तात्पर्यग्राहकप्रमाणाभावात् तात्पर्यानुपपत्याऽपि लक्षणा वक्तुं न शक्यते, अपि तु तत्र व्यञ्जनमेव व्यापारः। यथा—

**भद्रात्मनो दुरधिरोहतनोर्विशाल–**
**वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य।**
**यस्यानुपप्लुतगतेः परवारणस्य**
**दानाम्बुसेकसुभगः सततं करोऽभूत्।।** इति।

(का०प्र०, २/१२)

पद्यमिदं कस्यचिद् राज्ञो वर्णने उपात्तम्, अर्थाद् यस्य राज्ञः करः (पाणिः) सततं दानसम्बन्धिजलस्य सेकेन शोभनोऽभूत्। राज्ञः विशेषणं भद्रात्मनः इत्यादिशोभनान्तःकरणस्य शोभनस्वरूपस्य वाऽनभिभवनीयशरीरस्य महाकुलोत्पन्नस्य महाकुले ख्यातस्य वा विशालवंशोन्नतिकारिणो वा बाणसङ्ग्रहकारिणः बाणविद्यायां दृढाभ्यासशालिनो वा अबाधितगतेः शत्रुनिवारकस्येति। अप्रस्तुतगजपक्षे च यस्योत्कृष्टगजस्य करः शुण्डादण्डो निरन्तरं मदजलसेकसुन्दरोऽभूत्। कीदृशस्य गजस्य, भद्रजातीयस्य (भद्रमन्द्रमृगाद्यष्टविधगजयोनिवर्णनात्) दुःखेनाधिरोह्यशरीरस्य विशालवेणुवदुन्नतेः विशालपृष्ठदण्डोन्नतिशीलस्य वा कृतभ्रमरसङ्ग्रहस्य धीरगमनस्येति। अत्र प्रकरणेन राजनि राजाऽन्वययोग्ये चार्थेऽभिधायां नियन्त्रितायामपि सहृदयजन(प्रतिभाबलात्)मनःप्रकाशमानगजस्य तदन्वययोग्यरूपार्थस्य च या प्रतीतिः सा व्यञ्जनयैवेति। तात्पर्यविषयीभूतोऽप्यर्थस्तात्पर्यग्राहकप्रकरणाद्यभावाद् व्यञ्जनावृत्तिवेद्य एव। अत्र शब्दस्यार्थान्तराभिधायकत्वप्रसक्तिः, मिथोऽसम्बद्धार्थद्वयबोधने वाक्यभेदापत्तिरपुष्टार्थतादोषश्चेति दोषद्वयपरिहाराय नृपगजयोरुपमानोपमेयभावः कल्प्यते। नृपः गज इवेत्युपमाऽत्र व्यङ्ग्या। यद्यप्यत्र मम्मटेनोपमालङ्कारव्यङ्ग्य इति शब्दतो नोक्तं तथापि–

**''उल्लास्य कालकरवालमहाम्बुवाहं**
**देवेन येन जरठोर्जितगर्जितेन।**
**निर्वापितः सकल एव रणे रिपूणां**
**धाराजलैस्त्रिजगति ज्वलितः प्रतापः।।**

अस्मिन् पद्ये प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभाव: कल्पनीय इत्यत्रोपमाऽलङ्कारो व्यङ्ग्य इति स्पष्टमुक्तम्।

पण्डितराजश्च शब्दशक्तिमूलालङ्कारध्वनिम्–

**करतलनिर्गलदविरलदानजलोल्लासितावनीवलय:।**
**धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम्।।**

इत्युदाहृत्य प्रथमं प्राचीनसरणिमनुसरन्नाह यदत्र राज्ञ: प्रकृतत्वात् प्रकरणेन राजनि तदन्वययोग्ये चार्थे कर-दान-धनद-सार्वभौमशब्दानां क्रमश:पाणिवितरण–कुबेर–सर्वभूमीश्वररूपार्थेऽभिधायां नियन्त्रितायां शब्दशक्तिमूलकध्वननेन प्रतीयमानस्याप्रस्तुतस्य गजरूपार्थान्तरस्याप्रासङ्गिकत्वं मा प्रसाङ्क्षीदिति प्रकृताप्रकृतयोरुपमानोपमेयभाव: प्रधानवाक्यार्थरूपेण कल्प्यते इत्युपमालङ्कारध्वनिरिति। अनन्तरमुपपादयाञ्चक्रे यथा श्लिष्टविशेषणायां समासोक्तौ—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्।।**

इत्यादौ व्यङ्ग्यस्याप्रकृतनायकनायिकाव्यवहारस्य प्रकृतधर्मिणोर्निशा–शशिनोरारोप्यमाणस्य प्रकृतार्थोपस्कारकतया यथा गुणीभूतव्यङ्ग्यत्वमेवमत्रापि (करतलेत्यादिपद्येऽपि) गुणीभूतव्यङ्ग्यत्वमुचितमिति। न च समासोक्तौ व्यङ्ग्योऽर्थ: प्रकृतार्थमुपस्करोति, उपमा च प्रकृतार्थोपस्कारिका न भवतीति कथं तस्या गुणीभूतत्वमिति वक्तुं शक्यम्।

"उल्लास्य कालकरवालमहाम्बुवाहम्" "भद्रात्मनो दुरधिरोहतनो:" इत्यादि प्राचां पद्ये करतलेत्यादिपद्ये च व्यङ्ग्योपमा। प्रकृतस्य राज्ञ: प्रकर्षस्य सकलसहृदयहृदयसिद्धत्वात्। अनुभवापलापे समासोक्तौ, अपि न प्रकृतोपस्कारकतेति वक्तुं सुवचत्वात्।

ननु समासोक्तौ उपोढरागेणेत्यादौ व्यवहारी चन्द्र: शशीति नियतार्थकशब्देनोपात्तौ न नानार्थकशब्देन। करतलनिर्गलदित्याद्युपमालङ्कार-ध्वनिस्थले तु व्यवहारी नृपोऽनेकार्थक(नानार्थक)सार्वभौमशब्देनोपात्त इत्यस्ति द्वयोर्विशेष इत्युच्यते चेत्? किमनेन, प्रस्तुतस्य व्यवहारिणो नृपस्यानेकार्थकशब्दप्रतिपादकतामात्रेणाप्रस्तुतगजरूपधर्मिनिरूपिताया उपमाया उपस्कारकत्वस्य निवारणाऽसम्भवात्। अतोऽत्र गुणीभूतव्यङ्ग्यत्वं दुष्परिहरणीयमेव।

न चोपमादयोऽलङ्कारा: स्वभावतो रमणीया: सन्ति, रमणीयताऽभावे उपमादीनामलङ्कारत्वमेव न स्यादिति "गौरिव गवय:", "तस्थस्थमिपान्तान्तन्ता"

इत्यादाविवेति, स्वभावतो सुन्दराणामुपमादीनां कवेः काव्यनिर्माणे उद्देश्यभूतत्वाच्च वस्तुमात्ररूपप्रकृतार्थे गुणीभावोऽसम्भवः। यथा—

**निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले।**
**दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः।।**

इत्यादौ वस्तुमात्रेणाभिव्यक्तस्य विरोधालङ्कारस्य वस्तुमात्रे न गुणीभावत्वं तथैव। तदुक्तं ध्वनिकारेण—

**''व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्''।।**

(ध्व०, द्वि०उ०, २९का०)

इत्युद्धृतं च काव्यप्रकाशे पञ्चमोल्लासे गुणीभूतव्यङ्ग्यभेदनिरूपणावसरे। समासोक्तौ तु तदवयवस्याप्रकृतव्यवहारस्यालङ्कारत्वाभावात् प्रकृतवस्तुन्युपस्कारकत्वं युक्तमिति वाच्यम्। ''उल्लासस्य कालकरवाले''त्यादौ करतलनिर्गलदि''त्यादौ च व्यङ्ग्योपमायाः प्रकृतार्थोपस्कारकत्वस्यानुभवसिद्धतयाऽपराङ्गरूपगुणीभूतव्यङ्ग्यताया दुरपह्नत्वात्। बाधकयुक्तौ दृढायामन्यसाम्यप्रदर्शनेन किम्? ''बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यतामि''ति न्यायेनोक्तयुक्तेः शिथिलत्वाद् दृष्टान्तस्थलेऽपि व्यङ्ग्यालङ्कारस्य गुणीभूतत्वमेवेति भावात्।

यद्येवमुच्यते— उपमानमुपमेयं साधारणो धर्म इति हि उपमाशरीरम्, न तु ततः पृथक्। तद्भिनोपमाया एवानिष्पत्तेः। इत्थमुपमेयस्य सादृश्यांशेनोपस्कारेऽपि उपमाया नापराङ्गगुणीभूतत्वमुपमेयस्यापरत्वाभावात्। यथा समासोक्तौ अप्रकृतव्यवहारेण प्रकृतार्थोपस्कारेऽपि प्रकृताप्रकृतघटिततत्वात् समासोक्तेर्नापराङ्गता, तद्वदिति। तथाऽपि समासोक्तेर्यथा गुणीभूतव्यङ्ग्यत्वं तथैवाऽस्यापि प्रभेदस्य स्यात्। स्याद् वा ''करतलनिर्गलदित्यादिवत् समासोक्तेरपि ध्वनित्वमिति।

अत्र नागेशः— अलङ्कारा उद्दीपनतया रसाद्युपयोगिनो भवन्ति। आलम्बनापेक्षयोद्दीपनेऽधिकचमत्कारित्वमिति सकलसहृदयानुभवसिद्धम्। ''करतलनिर्गलदित्यादिपद्ये वाच्यो विशेषणविशिष्टः सार्वभौमो राजा आलम्बनविभाव एव। तदपेक्षयाऽधिकचमत्कारित्वाद् व्यङ्ग्योपमाया ध्वनित्वं निष्प्रत्यूहम्, रसभावाद्यपेक्षया व्यङ्ग्योपमाया गुणीभूतत्वन्त्विष्टमेव। समासोक्तौ तु—

''आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीम्'' इत्यादौ प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपमन्तरा'' वाक्यार्थ एवानिष्पन्नोऽतस्तत्र व्यङ्ग्यस्याप्रस्तुतव्यवहारस्य गुणीभूतत्वं सुस्पष्टमेव। यत्र समासोक्तौ

व्यङ्ग्यस्याप्रस्तुतव्यवहारस्य रसाद्युपकारकतया वाच्यातिशायित्वं तत्र समासोक्तिध्वनिरस्तु नाम। न च ''करतलेत्यादि''पद्ये उपमाकृतोत्कर्षमादाय ध्वनित्वमस्तु अलङ्कारध्वनिरिति कथमिति वाच्यम्। अलङ्कार कृतोत्कर्षध्वनावेवालङ्कारध्वनिरिति व्यवहार इति। (गुरुमर्मप्रकाशे, पृ.१९९/२००)

किञ्च यदुच्यते उल्लास्येत्यादौ उपमा व्यङ्ग्या तन्नोचितम्, यतो हि- श्लेषस्थले एकपदोपात्तयोः द्वयोरर्थयोः श्लेषमूलकमभेदाध्यवसानं सर्वैरालङ्कारिकैः उक्तं सहृदयानुभवसिद्धञ्च। तत्र (द्वयोरर्थयोरभेदाध्यवसाने) एकपदोपात्तत्वमेव बीजम्। यतो हि— एकपदोपात्तोऽनेकोप्यर्थोऽभिन्नतयैव भासते इति।

एवञ्च ''उल्लास्य कालकरवाल'', ''भद्रात्मनो दुरधिरोहतनोः'', ''करतलनिर्गलद्'' इत्यादिषु प्रस्तुताप्रस्तुतयोर्द्वयोरर्थयोरेकपदो-पात्ततयाऽभेदाध्यवसानस्यैव युक्तत्वेनाभेदस्यैव व्यङ्ग्यत्वं युक्तं नोपमाया इति। न च श्लेषस्थलापेक्षयाऽलङ्कारध्वनौ वैलक्षण्यमस्ति तथा हि श्लेषस्थले द्वयोरर्थयोरभिधावेद्यत्वम्, वाच्यत्वम्।

यतो हि तत्र प्रकरणादीनामभिधानियामकानामभावाद् द्वावप्यर्थौ अभिधा युगपदेव बोधयति। अत एवैककालता द्वयोरर्थयोरस्ति। अलङ्कारध्वनिस्थले तु एकस्य वाच्यत्वमपरस्य व्यङ्ग्यत्वं भिन्नकालत्वञ्चेति भेदादिति वाच्यम्। अस्य भेदस्याकिञ्चित्करत्वात्। एकपदोपात्तत्वप्रयुक्ताभेदाध्यवसानस्य परित्यागानौचित्यात्। व्यङ्ग्यताया भिन्नकालतायाश्चाभेदप्रतिपत्तौ बाधकाभावात्। एतावता कश्चन काव्यप्रकाशटीकाकारः रूपकमपि सादृश्यमन्तरा न प्रस्फुटति अतो रूपकज्ञानं उपमाज्ञानाधीनमिति प्रथमोपस्थिताया उपमाया स्वीकार एव उचित इति यदाह तदपि नादरणीयमुक्तयुक्तेरिति दिक्।

अत्र ध्वनिप्रतिष्ठापक आनन्दवर्धनाचार्यस्तु उपमालङ्कृतिध्वनिमेव स्वीकरोति। यदाह शब्दशक्तिमूलध्वनिमुदाहरन्'' ''अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः'' इति।

**''उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।**
**पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्।।** इति।

एवं-

> **दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः**
> **पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्निसंहारभाजः।**
> **दीप्तांशो दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो**
> **गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु।।**

इत्यादिषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिक-प्राकरणिकार्थयोरुपमानोपमेयभावः कल्पितव्यः "सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः"। (इति ध्वनिकृदुक्तेः)

तदनुसारी मम्मटोऽपि "उपमानोपमेयभावः कल्पनीयः" इत्याह। परं पण्डितराजो रूपकालङ्कारध्वनिं निरूपयामास, तदपि न सर्वथा नवीनोद्भावनम्, अपि तु लोचनेऽभिनवगुप्तपादाचार्याः विषयेऽस्मिन् चतुर्णां मतानामुपपादनं कृतवन्तस्तत्र चतुर्थे मते "इतरे तु रीत्या प्रतिपादनावसरे सहृदयैरसंवेद्यमानमेव वाक्यस्यासम्बद्धार्थाभिधायकत्ववारणाय प्राकरणिकार्थेन साकमप्राकरणिकार्थस्याभेदारोप उक्तः।

"प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव" इत्युक्तेः रूपणा, अभेदारोप इति बालप्रियाकारः। काव्यप्रकाशटीकाकाराश्च— उल्लास्येत्यादिपद्ये प्राकरणिकाप्राकरणिकयोरर्थयोः प्रतीतिस्तु सर्वानुभवसिद्धा। तत्राप्राकरणिकार्थप्रतीतौ वाक्येऽसम्बद्धार्थाभिधायकत्वदोषपरिहाराय तयो-(प्रस्तुताप्रस्तुतयोः)रर्थयोः सम्बन्धकल्पनायामभेदाध्यवसानमूलकं रूपकं सादृश्यमात्रमूलकोपमा वा कल्प्येति मीमांसायां सादृश्यमात्रमूलिकाया उपमाया प्रथमोपस्थितत्वात्, उपमैव कल्प्या, रूपकं तु उपमाज्ञानाधीनं सादृश्यप्रतीत्यनन्तरमेवाभेदारोपसम्भवादिति व्याचक्षते।

## विमर्शः

वस्तुतः पण्डितराजोऽपि रूपके सादृश्यज्ञानमपेक्षते। अत एव रूपक-मुपमानपदस्य उपमानप्रतियोगिकसादृश्ये लक्षणेति प्राचीनमतं समर्थयन्नाह— (र०गं०, २/१७७पृ०)

यन्नव्यैरुच्यते" विषयविषयिणोः सामानाधिकरण्येन समभिव्याहारबलान् नामार्थयोरभेदेनैवाभेदोपपत्तौ रूपके लक्षणा व्यर्थेति तत्रोच्यते यत्—

साधारणधर्माऽनवभासदशायां यथोपमा न निष्पद्यते तथैव रूपकमपीति सकलसहृदयसिद्धम्। अत एव "भारतं नाकमण्डलम्, "नगरं विधुमण्डलम्" इति वाक्यश्रवणानन्तरं नामार्थयोरभेदान्वयबोधे सत्यपि रूपकालङ्कारः सहृदयहृदये तावन्न स्फुरति यावत् सुपर्वालङ्कृतम्" "सकलकलम्" इति साधर्म्यबोधकपदे क्रमशः पूर्वोक्ते वाक्ये न श्रूयेते। प्रसिद्धरूपकोदाहरणे "मुखं चन्द्रः" इत्यादावपि साधर्म्यमपेक्षितं परं तत्र प्रसिद्धतया साधारणो धर्मः स्ववाचकपदश्रुतिं नियमतो नापेक्षते। अप्रसिद्धस्थले तु रूपकनिष्पत्तये साधर्म्यवाचकपदं नियमतोऽपेक्षितं वर्तते। अतः साधारणधर्मवत्त्वरूपसादृश्यं यदि लक्षणया न ज्ञातं स्यात्तदा तत्र रूपकमपि पर्यवसितं न स्यात्, चमत्कारोऽपि न स्यादिति।

इत्थं पर्यालोचनेन ज्ञायते रूपकनिष्पत्तये सादृश्यमूलकमभेदारोपाध्यवसानमपेक्षितम्, उपमायां केवलं सादृश्यमिति "उल्लास्ये"त्यादौ प्रथमोपस्थितत्वात् सादृश्यमूलकमुपमाऽन्तरङ्गत्वाद्युक्ता तन्मूलमभेदाध्यवसानं बहिरङ्गमिति बहिरङ्गत्वात् न रूपकमिति प्राचीनानामाशयः।

नव्यास्तु रूपके सादृश्यलक्षणां विनैवाभेदारोपरूपरूपकं स्वीकुर्वन्ति, तेषां मते सादृश्यं नापेक्षितम्, अतो रूपकं ते स्वीकुर्वन्ति। अप्पयदीक्षितो वृत्तिवार्तिके रूपके प्राचीनोपपादितां सादृश्यलक्षणां बहुशो निराकृतवान्। यद्यपि नागेशोऽपि "रूपके नास्ति लक्षणा" इति प्रतीकमुपादाय लक्षणां न्यषेधीत्, तथापि स रूपके सादृश्यज्ञानस्योपयोगितां स्वीकरोति यदवोचत् "सादृश्यज्ञानरूपदोषस्योत्तेजकत्वादि"ति। एवं रूपके सादृश्यज्ञानापेक्षामुपपादयतां प्राचां मते "उल्लास्येत्यादावन्तरङ्गत्वादुपमाऽलङ्कारध्वनिरेव युक्तः। सादृश्यज्ञाननिरपेक्षतया भेदस्वीकर्तृणां नव्यानां (अप्पयदीक्षितादीनां) मते रूपकमपि युक्तं परं पण्डितराजेन तु स्वयं प्राचीनमतं समर्थितम्। अतस्तन्मते तु रूपकालङ्कारध्वनिस्तु बहिरङ्ग एवेति प्राचीनमतमेव युक्तम्। अन्येऽप्यालङ्कारिकाः रूपके लक्षणावादिनोऽप्यत्रानुकूला इति।

## विरोधाभासालङ्कारध्वनिविषये मतभेदः

मम्मटाचार्यो विरोधं लक्षयाञ्चक्रे— वस्तुतोऽविरोधेऽपि द्वयोर्वस्तुनोर्विरोधप्रतिभोत्पत्तिप्रयोजकरूपेण यत् प्रतिपादनं स विरोधः। अर्थाद् विरुद्धार्थप्रतिपादकस्य पदादेरर्थान्तरपरत्वादिना वस्तुतो विरोधाभावेऽपि आपाततो विरोधप्रतीतिर्विरोधाभासालङ्कार इति।

स च विरोधो दशधा। जाति-गुण-क्रिया-द्रव्यरूपेषु पदार्थेषु जातेः क्वचित् जात्या विरोधः क्वचिद् गुणेन, क्वचिद् क्रियया क्वचिद् द्रव्येनेति चत्वारो भेदाः। एवं गुणस्य गुणेन, क्रियया द्रव्येण च विरोधे त्रयो भेदाः। क्रियायाश्च क्रियया, द्रव्येण च विरोधाद् द्वौ भेदौ। द्रव्यस्य द्रव्येण विरोधे एको भेद इति सङ्कलनया दशभेदाः सम्भवन्ति।

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद् वचः।**
**जातिश्चतुर्भिजात्याद्यैर्विरुद्धा स्याद् गुणैस्त्रिभिः।।**
**क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश।।**

(का०प्र०, द०उ० ११०, ११०-१/२, पृ० ६६४ वामनी टीका)

तत्र जातेर्जात्याविरोधमुदाजहार—

**अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशिः।**
**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते।।** इति।

काचित् सखी स्वसख्या वृत्तान्तं तन्नायकं निवेदयति। हे सुभग! अस्या मृगदृशः दैववशात् तव वियोगरूपवज्रपाते सति नूतननलिनी किसलयं मृणालवलयं चन्दनं, चन्द्रादिश्च दावाग्नेः राशिर्भवतीत्यर्थः। अत्र नलिन्यादिशब्दानां जातिवाचकानां नलिनीत्वादिजातिरर्थ इति नलिनीत्वकिसलयत्वादिजातीनां दवदहनत्वजात्या सह विरोधः। स च नलिन्यादीनां विरहोद्दीपकतया तत्र दवदहनत्वमुपचारादिति परिहारादाभासरूप इति विरोधाभासोऽलङ्कार इति।

पण्डितराजो विरोधालङ्कारध्वनिम्—

**''रवि कुलप्रीतीमावहन्त्यपि नरविकुलप्रीतिमावहति।**

अवारितप्रवाहाऽपि सुवारितप्रवाहेत्यादियमुनावर्णनविषयकं गद्यमुदाहृतवान्। तत्र रविकुलानुरागं धारयन्ती रविकुलानुरागं न धारयतीति विरोध आपाततः प्रतीयते, वस्तुतः नराणां वीनां (पक्षिणां) च कुलस्य (समूहस्य) प्रीतिमावहतीति प्राकरणिकार्थो विवक्षितोऽतोऽभिधया पूर्वसिद्ध इति, तस्मिन् पूर्वोक्तार्थस्याप्रस्तुतस्याभिधामूलव्यञ्जनया प्रतीतेर्विरोधाभासो व्यङ्ग्यः। यदि तु रविकुलप्रीतिमावहन्त्यपि न रविकुलप्रीतिमावहतीति पाठं कृत्वाऽपिरन्तर्भाव्यते तदा विरोधोऽपिना उक्तः। विरोधश्च रविकुलप्रीतिं नावहतीत्यर्थं विनाऽनुपपन्नः सन् तमर्थमाक्षिपतीति द्वितीयार्थो न व्यङ्ग्य इति।

''निपाता द्योतकाः'' इति नयेऽपि ''अपिना'' निपातेन विरोधः स्फुटं द्योत्यतेऽतो स वाच्यकल्पः सम्पद्यते तदाक्षिप्तो द्वितीयार्थोऽपि स्फुटत्वाद्

वाच्यकल्प एवेति न विरोधालङ्कारध्वनिरिति। इत्थं यत्रापि शब्दोपात्तस्तत्र वाच्यो विरोधाभासोऽपि शब्दाभावे व्यङ्ग्य इति निष्पन्नम्। एवं—

**अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशिः।**
**सुभगकुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते।।**

(का०प्र०, १०/४८२)

इति काव्यप्रकाशकृदुक्ते वाच्यविरोधालङ्कारोदाहरणे कथं विरोधो वाच्यो वाचकस्याभावात्। न चान्विताभिधानवादिमते संसर्गेऽपि शक्तिः संसर्गश्चात्र निपातातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धस्याव्युत्पन्नतया सामानाधिकरण्यात् विरोधविशिष्टाभेदः इति तस्य (संसर्गस्य) वाच्यत्वात् विरोधोऽपि वाच्य एवेति वाच्यम्। विरोधाभेदयोः परस्परविरोधिनोः पदार्थयोः मिश्रणेन एककालावच्छेदेन एकसंसर्गत्वानुपपत्तेः। न च भेदाभेदघटिततादात्म्यवन् मिथो विरुद्धयोरपि संसर्गसिद्धः इति वाच्यम्। नामार्थयोरभेदस्यैव संसर्गत्वात् विरोधविशिष्टस्य संसर्गत्वे मानाभावात्। न चात्र सर्वानुभवसिद्धा या विरोधप्रतीते-र्विरोधस्यावाच्यत्वादनुपपन्नत्वात् विरोधविशिष्टाभेदसंगर्गेऽर्थापत्तिरेव मान-मिति वाच्यम्। मृणालवलयादिदवदहनराशिरिति बोधे जाते मृणालवलयादि न दवदहनराशिरिति बाधे संवृत्ते दवदहनराशिपदस्य सादृश्यसम्बन्धेन गौणलाक्षणिकतया मृणालवलयादि दवदहनसदृश इति बोधे पर्यवसाने सति विरोधांशस्याभानाद् इत्याशङ्क्य पण्डितराजः समर्थयति यत्–मम्मटभट्टानां विरोधोदाहरणतायामेव तात्पर्यं, विरोधस्य व्यङ्ग्यत्वेऽपि विरोधोदाहरणतायाः सत्त्वात् न काऽप्यनुपपत्तिः।

वाच्यविरोधोदाहरणतायामपिरन्तर्भाव्य इति। (केषाञ्चिन्मते विरोधस्य व्यङ्ग्यत्वेऽपि विरोधिनोर्वाच्यतामात्रेण विरोधाभासस्य वाच्यालङ्कारत्वव्यपदेशादत्र वाच्यविरोधाभास एव। यथा समासोक्त्यादीनां प्रकृताप्रकृतघटितत्वात्, अप्रकृतव्यवहारांशस्य व्यङ्ग्यत्वेऽपि प्रकृतांशस्य वाच्यत्वेन वाच्यालङ्कार व्यपदेश इति।

अत्र पण्डितराजः केचिदित्युक्त्या स्वाभिमतं न सूचयति तस्याभिप्रायो यत् समासोक्त्यादिषु गत्यन्तराभावेन तथा स्वीकारेऽपि विरोधाभासे पूर्वोक्तरीत्योपपादनेऽपि क्लिष्टकल्पनाया व्यर्थत्वादिति।

**विमर्शः**

वस्तुतोऽत्र पण्डितराजः सम्यगालोचयति यतो हि मम्मटाचार्यो वाच्यविरोधाभासालङ्कारं, अभिनवनलिनीत्यादिपद्येनोदाजहार। परं विरोधवाचकं द्योतकं वा "अपी"त्यादिकमपि शब्दं नोपाददे। विरोधवाचकशब्दाभावेऽपि

विरोधप्रतीतौ विरोधस्य व्यङ्ग्यत्वमेव सर्वसम्मतम्। अत एव ध्वनिकार आनन्दवर्धनः (द्वि०उ०, २१ कारि०उदाहरणे २४५पृ०) आह— यत्र हि साक्षात् शब्दावेदितो विरोधालङ्कारस्तत्र हि श्लिष्टोक्तौ वाच्यालङ्कारस्य विरोधस्य श्लेषस्य वा विषयत्वम्। यथा तत्रैव "समवाय इव विरोधिनां पदार्थानाम्। तथा हि— "सन्निहितबालान्धकाराऽपि भास्वन्मूर्तिः" इत्यादौ।

अयं भावः— यत्र साक्षात् "अपी" त्यादिशब्देन द्योतितो विरोधस्तत्र तु विरोधालङ्कारो वाच्यो यथा— "सन्निहितबालान्धकारापि भास्वन्मूर्तिः" इत्यादौ भास्वतः सूर्यस्य मूर्तिः, सन्निहितोऽभिनवान्धकारो यत्र, एतादृशी सूर्यमूर्तिरिति विरोधः, सूर्यमूर्तिपार्श्वे प्रत्यग्रतमसः स्थितेरभावात्। स च विरोधः "अपिना वेदितो वाच्यः, परिहारश्च सन्निहितो बालेषु केशेषु, अन्धकारः कार्ष्ण्यमस्या एवं भूताऽपि प्रकाशमानमूर्तिरिति परिहारात्।

अत्रापि शब्देनावेदितो विरोधो द्वितीयमर्थमाक्षिपति, इति वाच्यो विरोधाभास इति। परं "यत्र मातङ्गगामिन्यः- शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः। पद्मरागिण्यश्च धवलद्विजशुचिवदनामदिरामोदिश्वसनाश्च प्रमदाः"।। (हर्षचरिते स्थाणीश्वरजनपदवर्णने)

अत्र शीलवत्यो मातङ्गान् (शबरान् चाण्डालान्) गच्छन्तीति गन्तुं शीलं यासां ता इति विरोधः। मातङ्गवद् गच्छन्तीति परिहारः। अत्र विरोधावेदकशब्दाभावात्। (साक्षात् शब्देन विरोधस्याप्रकाशितत्वात्) न वाच्यो विरोधोऽपि तु व्यङ्ग्य एव। न चात्र मातङ्गगामिन्यः शीलवत्यश्चेति धर्मद्वयवाचकान्ते चकारस्य विरोधद्योतकत्वमिति वाच्यम्। चकारस्य समुच्चयार्थकत्वात्। यद्येवमाग्रहः समुच्चयार्थकत्वे चकारस्य प्रतिधर्मान्ते सर्वधर्मान्ते वा पाठः स्यात्।

अत्र तु न तथाऽतो विरोधद्योतक एवेति चेत् तदेदमुदाहरणं ग्राह्यम्—

**"सर्वैकशरणमक्षयमधीशं धियामीशं हरिं कृष्णम्।**
**चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्।।**

अत्र सर्वेषामेकशंरणं गृहं यः स अक्षयः (गृहरहितः) अगृहः कथमिति विरोधः सर्वेषामेकरक्षिता अविनाशीत्यादिरीत्या परिहारः। अत्र विरोधावेदकस्य शब्दस्याभावाद् विरोधो व्यङ्ग्य एव। एवं पर्यालोचनेन ज्ञायते यत्र विरोधावेदकाः शब्दाः सन्ति तत्रैव विरोधो वाच्यो, यत्र तु विरोधावेदकशब्दाभावेऽपि विरोधप्रतीतिस्तत्र व्यङ्ग्य एव। अत्र अभिनवनलिनीत्यादिपद्ये न वाच्यो विरोध इति युक्तमाह पण्डितराजः।

**व्यतिरेकध्वनिविषये मतभेदः**

व्यतिरेकध्वनिविषये तु पण्डितराजमम्मटभट्टयोः विरोधो न लक्ष्यते प्रत्युत स्वोक्तौ प्रमाणतया मम्मटोक्तिमुपन्यस्यति, तथा हि—

**''कृष्णपक्षाधिकरुचिः सदासम्पूर्णमण्डलः।**
**भूपोऽयं निष्कलङ्कात्मा मोदते वसुधातले''।।**

(रसगङ्गाधरे, २/८५)

अस्य प्रकृतोऽर्थः कृष्णे भगवति अधिका प्रीतिर्यस्य, सद्भिरापूर्णराष्ट्रं यस्य निर्मलात्मा अयं वर्णनीयो राजा वसुधातले मोदत इति वर्णनीयराज्ञः उपयोगितयाऽभिधया प्रथमं प्रतीतिपथमवतीर्णे सति द्वितीयोऽर्थः, कृष्णे पक्षेऽधिककान्तिमान्, सदा सम्पूर्णबिम्बः कलङ्करहितोऽयं राजा वसुधातले मोदत इति द्वितीयोऽप्रकृतोऽर्थो वैधर्म्यात्मा व्यङ्ग्यः। अर्थात् प्रसिद्धश्चन्द्रः कृष्णपक्षे क्षीणकान्तिर्भवति, क्षीणत्वात् न्यूनाधिकबिम्बः। कलङ्करहितः, आकाशे च मोदतेऽयं विलक्षणो राजा कृष्णपक्षे विशदकान्तिः, सम्पूर्णमण्डलः कलङ्करहितो वसुधातले मोदत इति प्रसिद्धोपमानचन्द्रापेक्षया राज्ञ आधिक्यवर्णनाद् व्यतिरेकालङ्कारः। स चाप्रकृतार्थस्य व्यङ्ग्यत्वाद् व्यङ्ग्य एव। अत्र व्यतिरेकोऽयं कविनिष्ठराजविषयकरतिभावस्याङ्गतया गुणीभूत इति न शङ्क्यम्।

वक्तुरुदासीनत्वेनास्य पद्यस्य तत्त्वार्थकथनमात्रे तात्पर्यात्। वक्तृनिष्ठरतेरप्रकाशकत्वात् (अव्यञ्जकत्वात्) वाच्यार्थापेक्षया प्रधानीभूतस्यार्थस्य व्यङ्ग्यान्तरमादाय गुणीभूतत्वेऽपि ध्वनिव्यपदेशात्। प्राचीनैरेवमेव स्वीकाराच्च। तथापि—

**निरुपादानसम्भारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने।।**

अत्रोपमानं प्रसिद्धचित्रकारस्तदपेक्षयाभिव्यक्तस्य शूलिनि व्यतिरेकस्य (व्यङ्ग्यस्य), कविनिष्ठशिवविषयरतिभावस्याङ्गतया गुणीभूतत्वाद् व्यतिरेकालङ्कारध्वन्युदाहरणतया प्राचीनैरुक्तम्, असङ्गतं स्यादिति तदुक्तेः।

अत्र उद्द्योतकारोऽप्येमेव ब्रूते— अत्र व्यङ्ग्यस्य व्यतिरेकाऽलङ्कारध्वनेः कविनिष्ठशिवविषयकरतिभावे गुणीभावाद् गुणीभूतत्वं न शङ्क्यम्। वाच्यापेक्षया तस्य प्राधान्याद् ध्वनित्वाक्षतेः। (का०प्र०, ४उ०अ०, ध्व०५७)

**''वाच्यापेक्षया प्राधान्यमात्रेण तद् ध्वनित्वाक्षतेः''। इति तदुक्तेः।**

(उद्द्योते, पृ०१३७)

## शब्दशक्तिमूलवस्तुध्वन्युदाहरणे मतभेदविमर्शः

वस्तुतोऽत्रापि मम्मटभट्टान्मतभेदो नास्ति, प्रत्युत टीकाकारतो मतभेदो दृश्यते। तथा हि पण्डितराजः–

शब्दशक्तिमूलवस्तुध्वनिम्–

**''राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम्।**
**बाले! वारय पान्थस्य वासदानविधानतः।।**

इत्यादिना उदाहृत्यात्र काव्यप्रकाशं समीक्षमाणो बभाषे यत् प्रकाशकृत्—

**''शनिरशनिश्च तमुच्चैर्निहन्ति यस्मै नरेन्द्र कुप्यसि त्वम्।**
**यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च''।।**

इति वस्तुध्वनिमुदाहृत्य'' अत्र विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुतः'', इति ध्वन्यते, इत्युक्तम्। तच्च टीकाकारैः द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं ''हननं भानं चं'' इति व्याख्यातम्, तदसङ्गतम्। यतो हि— शन्यशनयोर्हननक्रियायाः कर्तृत्वसम्बन्धेऽपि, भाति क्रियायाः कर्तुः स इति पदार्थस्य विशेषणत्वेनोपात्तयोरुदारानुदारयोरथवा ''स'' इत्युद्दिश्य भानक्रियाविधानात् तत्पदार्थो विशेष्यस्तद् विशेषणं विधेयरूपो देवदत्तादिस्तस्य विशेषणत्वेनोपात्तयोरुदारानुदारयोः साक्षाद्भानक्रियायां कर्तृत्वेन सम्बन्धाभावात्— ''उदारानुदारौ भानरूपमेकं कार्यं कुरुत'' इति ग्रन्थोऽसङ्गत एव।

अतः प्रकाशकृतोक्तं विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुतः'' इत्यादि व्यङ्ग्यं पूर्वार्धविषयकमेव। उत्तरार्धे तु उदारानुदारयोः भानक्रियायां कर्तृत्वादन्वयाभावात् न वस्तुध्वनिरपि तु तत्रोपात्तश्चकारः समुच्चयार्थक इति, तेन स इति पदेन वाच्यः तत्पदार्थ उदारोऽनुदारश्चेति विरोधालङ्कारो व्यङ्ग्यः। चकारस्याप्यर्थकत्वे तु तदाक्षेपाद् – विरोधप्रतीतेर्विरोधाऽलङ्कारो वाच्य एव।

परिहारस्तु अनुगता दारा यस्येति अनुगतदार इत्यर्थेन ज्ञेय इति।

तत्पदवाच्यो भानक्रियायाः यः कर्त्ता स एव उदारोऽनुदारश्चेति भानक्रियाकर्तरि उदारानुदारयोरभेदसम्बन्धेनान्वये सति तयोरपि कर्तृत्वादुत्तरार्धेऽपि वस्तुरूपस्य ''उदारानुदारौ भानरूपमेकं कार्यं कुरुतः'' इति ध्वनेः सम्भव इति चेत्, सत्यम्। परं पूर्वोत्तरयोरुभयोरपि दलयोः विरोधालङ्कारशबलित एव वस्तुध्वनिः। पूर्वार्द्धे शन्यशन्योर्विभिन्नपदार्थयोः सत्त्वादेकधर्मिकविरुद्धनिर्देशाभावेन कथं विरोध इति न शङ्क्यम्। शन्यशनिविरोधस्य विभिन्नाधिकरणतयाऽलङ्कारत्वाऽभावेऽपि विरोधिनः शत्रोर्विरोध्यन्तरस्य भिन्नत्वात् शत्रुत्वाऽसम्भवात् तमिति पदवाच्ये एकस्मिन्

शन्यशनिकर्तृकहननक्रियायाः कर्मताऽयोगात्, तथोपपादनात्— विरोधालङ्कारस्यास्फुटत्वात्। अशनिशब्दे नञो विरुद्धार्थकत्वे शन्यशन्यो-र्विरोधस्य वाच्यतया न विरोधध्वनिरिति नापादनीयम्। शन्यशनिविरोधस्य वाच्यत्वेऽपि तत्कर्तृकहननक्रियाया एकस्यैव कर्मतामूलविरोधस्य व्यङ्ग्यत्वात्। व्यङ्ग्यविरोधपरिहारस्तु राज्ञोऽप्रतिहताज्ञत्वज्ञानादिति ज्ञेयम्। उत्तरार्द्धे उदारार्धे उदारत्वानुदारत्वयोर्धर्मयोरेकवृत्तिताऽसम्भवात्तथोपपादनाद् विरोधस्य स्फुटत्वादिति। एवं च केवलं वस्तुध्वनिमुपदर्शयन् प्रकाशकारोऽप्यसङ्गत एवेति।

परं मिथो विरुद्धयोरपि एकशत्रुसम्भवात् न हननक्रियाकर्मतायां विरोध इति दिक्।

अत एव प्रदीपकारः पूर्वार्द्धे शन्यशन्योः सामानाधिकरण्याभावाद् विरोधं परिहरतीति।

## अर्थशक्तिमूलध्वन्युदाहरणे मतभेदः

अर्थशक्तिमूलध्वन्युदाहरणप्रसङ्गे पण्डितराजः काव्यप्रकाशकृतः स्वतःसम्भविना वस्तुना वस्तुध्वनेरुदाहरणं पर्यालोचयति— तत्र प्रकाशकृद्भिः।

**''अरससिरोमणिधुत्ताणं अग्गिमो पुत्तिं धणसमिद्धिमओ।**
**इअ भणि एण ण अङ्गीपफुल्लविलोअणा जा आ''।।**

अस्य संस्कृतम्—

**''अलसशिरोमणिर्धूतानामग्रिमः पुत्रि धनसमृद्धिमयः।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता''।।**

(का०प्र०, च०उ०, सू०४श्लो०सं०६०)

इत्युदाहृत्योक्तम्– ''अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यत इति। तत्र पण्डितराजो जिज्ञासते यत् ''अरससिरोमणि'' इत्यादिपद्यप्रतिपादितेन केन वस्तुना इदं वस्तु व्यज्यते। अरसशिरोमणित्वादिकान्तविशेषणैर्व्यज्यते, इति चेत्, तेषां वक्त्री धात्री वृद्धा स्त्री वर्तते अतस्तवैव (नायिकाया एव) उपभोगयोग्य इति व्यङ्ग्यस्वरूपं स्यात् न ममैवेति। यदि स्वयं कामिनी ''अरसशिरोमणि'' इत्यादिविशेषणानि, वदति तदा ममैवोपभोगयोग्य इति व्यङ्ग्योऽर्थः स्यात्। न च कामिनीविशेषणेन परिफुल्लविलोचनेत्यनेनेदं वस्तु व्यज्यत इति शङ्क्यम्। परिफुल्लविलोचनत्वं हर्षाख्यव्यभिचारिणोऽनुभावोऽतो हर्षभावध्वनेर्व्यञ्जकताऽस्य युक्ता। ममैवोपभोगयोग्यत्वं च हर्षस्य विभावः (कारणम्) हर्षश्च कार्यम् (अनुभावः)। अनुभावेन भावव्यञ्जनमेव युक्तं न

विभावव्यञ्जनम्। अपि च परिफुल्लविलोचनत्वं पुत्रागमनधनप्राप्त्यादिनाऽपि सम्भवति। अतः केवलं परिफुल्लविलोचनत्वं ममैवोपभोगयोग्य इति व्यङ्ग्यव्यञ्जने न क्षममनैकान्तिकत्वात्। इत्याशङ्क्य समादधति– सत्यमित्यादिना।

मन्ये केवलस्य प्रफुल्लविलोचनत्वस्य मदुपभोगयोग्यत्वस्याभिव्यक्तौ सामर्थ्यं नास्ति। यतो हि प्रफुल्लविलोचनत्वस्य हर्षानुभावस्य पुत्रागमनधनागमादिनाऽपि सम्भवात्, तथापि पद्येऽस्मिन् इति भणितेनेत्युक्तम्। अतः प्रतीयते यद् अरससिरोमणित्वादिकान्तविशेषणश्रवणानन्तरमेव सा प्रफुल्लविलोचना जाता। एवं अरससिरोमणित्वादि-कान्तविशेषणश्रवणविशिष्टप्रफुल्लविलोचनत्वेन प्रथमं "ममैवोपभोगयोग्य" इति विभावोऽभिव्यज्यते, तत्र तस्य सामर्थ्यात् (अव्यभिचारित्वात्)। इत्थमभिव्यक्तं विभावं द्वारीकृत्य हर्षाख्यव्यभिचारिणोऽभिव्यक्तिः, अतो हर्षाभिव्यक्तौ द्वारीभूतं ममैवोपभोगयोग्य इति विभावाभिव्यक्तिमादाय (आन्तरालिकव्यङ्ग्यमादाय) मम्मटोक्तिः सङ्गच्छते।

न चैवं प्रथमं ममैवोपभोगयोग्य इति वस्तुध्वनिस्ततस्तं द्वारीकृत्य हर्षभावध्वनिरिति स्वीकारो युक्तः। भावध्वनेः संलक्ष्यक्रमत्वापत्तेः

**"रसभावतदाभासभावशान्त्यादिरक्रमः"।**

(का०प्र०, च०उ०, २६का०)

**"ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः।"**

(ध्व०द्वि०उ०३ का०)

इति सिद्धान्तविरोधात्। क्वचिद्रसभावादीनां संल्लक्ष्यक्रमत्वस्य प्रथमानने सिद्धान्तितत्वात्तद्दोषस्योद्धारात्।

वस्तुतः शङ्केयं केवलं शिष्यबुद्धिवैशद्यार्थमेवोत्थाप्य समाहिता। मम्मटस्य तत्रैव तात्पर्यात्, अत्र सहृदया एव प्रमाणम्। तथा हि—

विवाहप्रसङ्गे यौवनाक्रान्तकुमारीं प्रति, उपमातुः उक्तिरियम्। हे पुत्रि! वरोऽयमलसानां शिरोमणिः धूर्तानां चाग्रिमः प्रचुरधनसमृद्धश्च इत्याकर्ण्य सा कुमारी प्रफुल्लविलोचनाऽभूत्। अलसशिरोमणित्वेन प्रवासे नायिकान्तरगृहे वा कदापि गन्तुमस्य सम्भावनैव नास्ति, धूर्ताग्रगण्यत्वेन सम्भोगेष्वतृप्तः, धनसमृद्धि-तया सुखी चायमिति निश्चितवत्याः हर्षकार्येण प्रफुल्लविलोचनत्वेन वस्तुना अन्यासामयमनाकर्षणीयो ममैवोपभोगयोग्य इति वस्तु व्यज्यते।

अत्रोद्योतकारो नागेशोऽपि (ममैवेति नाविदग्धायाः) एवमेवाह यत् सामाजिकेषु कुमार्याः ममैवोपभोगयोग्य इति ज्ञानम्।

अरसशिरोमणित्वादिविशेषणश्रवणविशिष्टेन प्रफुल्लनयनत्वेन वस्तुना स्वहेतुभूतहर्षाभिव्यक्तिद्वारेण हर्षस्यापि करणभूतत्वादिति।

**विमर्शः**

प्रफुल्लविलोचनत्वं तु हर्षभावस्यानुभावोऽतो हर्षः साक्षादभिव्यज्यते। परं विशेषणश्रवणविशिष्टप्रफुल्लविलोचनत्वेन ममैवोपभोगयोग्य इति वस्तु ध्वन्यते। अत्र वस्तुध्वनेरेव प्राधान्यात्। काव्यदर्पणादीनामत्रैवाभिप्रायः। (का०द०, च०उ० २८८पृष्ठे) गोकुलनाथोऽपि (का०प्र०च०उ० विवरणे १८३पृष्ठे) आह— आलस्येनाप्रवासित्वम्, धनसमृद्ध्या नाकुलत्वम्, ताभ्यां चोपभोग्यत्वम्, धूर्ततयाऽविदग्धाभिरप्रलोभनीयत्वम्, तेन मदितरयोषिदनुपभोग्यत्वं कुमार्या व्यज्यत इति पूर्वार्धमात्रं ध्वनेरुदाहरणम्। सामाजिकस्य पूर्वार्धोत्तरार्धाभ्यां ममैवोपभोगयोग्य इति मतिस्वरूपं यद् व्यङ्ग्यं तत् प्रफुल्लविलोचनत्वे वाच्ये गुणीभूतमिति न ध्वनेर्विषय इति।

**वस्तुनालङ्कारध्वनौ मतभेदः**

स्वतःसम्भविना वस्तुनाऽलङ्कारध्वनिम्—

> **''मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः**
> **स्वर्यातेन सुधाऽप्यधायि कतिधा रम्भाधरः खण्डितः।**
> **तत्त्वं ब्रूहि मदीयजीव! भवता भूयो भवे भ्राम्यता**
> **कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः।।**
>
> (रसगङ्गाधरे, द्वि०आ०, पृ०९८)

इत्यादिनोदाहृत्य पण्डितराजः अत्र मदीयजीवेति सम्बोध्यः निष्कृष्टो जीवः (शरीरान्तःकरणाद्यनवच्छिन्न आत्मा) सम्बोधकश्च मम पद-बोध्योऽन्तःकरणावच्छिन्न आत्मा प्रश्नश्चानेकशः संसारे संसरता भवता ''कृष्णे''ति द्वयोरक्षरयोर्यो मधुरिमोद्गारः स क्वचिल्लक्षित इति वस्तुरूपो वाच्योऽर्थो व्यञ्जकः। अत्रानेकजन्मवृत्तान्तप्रत्यक्षीकरणकारणं योगसिद्धिविशेषः स चोपमेयं, तच्च भगवन्नामोपमानेन निगीर्णमिति साध्यवसानलक्षणामूलमतिशयोक्तिरलङ्कारोऽत्र व्यज्यत इति निरूप्य स्वकीयमुदाहरणं पुनः विवेच।

अत्र प्रश्नस्तु नानाजन्मवृत्तान्तविषयकः स च ज्ञातारं प्रत्येव सम्भवति नानाजन्मवृत्तान्तानभिज्ञं स्वजीवं'' प्रति प्रष्टुमयोग्यत्वादनुपपन्नः। एवं च प्रश्नोऽन्यथाऽनुपपत्त्या भगवन्नामयोगसिद्धिविशेषयोस्तादात्म्याध्यवसान-

रूपामतिशयोक्तिमवश्यमाक्षिपति, इत्यतिशयोक्तिरर्थापत्तिलभ्यो न व्यञ्जनालभ्य इति। न चार्थापत्तेर्नैयायिकादिभिरस्वीकारात् प्रमाणान्तराभावात्।

अन्येषां मतेऽनुमानान्तर्भूताऽपि साहित्यिकानां मते सा व्यञ्जना, एवेति ध्वनिरेवातिशयोक्तिरिति वाच्यम्। तादृशातिशयोक्तेः वाच्यस्य प्रश्नरूपार्थस्योपपादकतया वाच्यसिद्ध्यङ्गगुणीभूतत्वादिति विविच्य मम्मटोदाहरणेऽपि—

**''तदप्राप्तिमहादुःखविलीनाऽशेषपातका ।**
**तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा''।।**
**''चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणीम्।**
**निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका''।।**

(का०प्र०, च०उ० ८०-८१श्लोक) इति।

एषा शङ्का समानेत्याह— तथा हि श्रीमदानन्दकन्दस्य व्रजेन्द्रनन्दनस्य महारासे सर्वा गोप्यः समागमन्, परं अन्या काचनैका गोपिका पित्रादिभिर्निरुद्धा गन्तुमशक्ता भगवतोऽप्राप्तिजन्यमहादुःखानुभवाद् विलीनाशेषपातका श्रीकृष्णचिन्ता-(ध्यान)-जन्यविपुलाह्लादेन नष्टपुण्यचया जगदुत्पादकं परब्रह्मस्वरूपिणं श्रीकृष्णचन्द्रं चिन्तयन्ती निरुच्छ्वासतया प्राणोत्क्रमणं विनैव ''नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्ते'' इति श्रुतेः मुक्तिं गतेत्यर्थः। अत्र वाच्ययोः श्रीकृष्णवियोगजन्यमहादुःखतच्चिन्तनजन्यविपुलाह्लादयो-रनेकसहस्रजन्मोपभोग्यदुष्कृतसुकृतफलतादात्म्येनाध्यवसितयोः प्रतीतिः, इत्यतिशयोक्तिद्वयमशेषचयपदप्राधान्येन व्यज्यते। (अयं भावः— जन्म सहस्रैरुपभोग्यानि सुकृतदुष्कृतफलानि कयाचिद् गोपकन्यया श्रीकृष्णवियोगजन्यदुःखतच्चिन्तनजन्याह्लादाभ्यामनुभूतानि'' इत्यर्थोऽवगम्यते। तत्र दुष्कृतसुकृतफलराशितादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते।)

अत्र पण्डितराजो विचिकित्सते- अत्राभिधया वर्णितं श्रीकृष्णवियोगजन्य-दुःखस्याशेषपापनाशकत्वं, तथा श्रीकृष्णचिन्तनजन्याह्लादस्य पुण्यपुञ्जनाशकत्वं तावन्न सङ्गच्छते यावद् दुष्कृतसुकृतफलराशितादात्म्येन तौ नाध्यवसितौ स्याताम्। अर्थात् कृष्णाप्राप्तिजन्यमहादुःखेन सह नानाजन्मोपभोग्यदुष्कृत-राशेस्तथा कृष्णचिन्तनजन्याह्लादेन सहानेकजन्मोपभोग्यसुकृतराशेस्ताद्-रूप्यमाक्षिप्यते। अन्यथा तत्तद्दुःखानां स्वस्वफलोपहितपापपुण्यनाशकत्वं धर्मशास्त्रादौ वर्णितम्। श्रीकृष्णवियोगजन्यदुःखचिन्तनजन्यसुखयो-रनेकजन्मोपार्जितदुष्कृतसुकृतनाशकत्वमसम्भवम्। तादात्म्याध्यवसाये तु

उपपद्यते। अतोऽत्रातिशयोक्तिद्वयमर्थापत्तिलभ्यं न व्यङ्ग्यम्, व्यङ्ग्यत्वे वा वाच्यार्थस्योपपादकतया गुणीभूतमिति। यद्यपि वस्तुमात्रेणाभिव्यक्तोऽलङ्कारो गुणीभूततां न भजते इत्येष ध्वनिसिद्धान्तः तथा हि प्राह ध्वनिकारः—

**व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्''।।**

(ध्व०लो०, द्वि०द०, २९ का०)

एवमत्र वस्तुमात्रेणाभिव्यक्तस्यातिशयोक्तिद्वयस्य न गुणीभूतत्वं सिद्धान्तविरोधात्, इति उक्तिर्न युक्ता वाच्यसिद्ध्यङ्गत्वहेतुक-गुणीभूतत्वोपपादकयुक्तिरूपबाधे दृढे सति सिद्धान्तमात्रेणास्यातिशयोक्तिद्वयस्य ध्वनित्वोपपादनमसम्भवमिति। एवमाशङ्क्य समादधाति, सत्यम्— तदेव व्यङ्ग्यं वाच्यसिद्ध्यङ्गतामाप्नोति यस्य प्रतिपत्तिमन्तरा वाच्यं सर्वथाऽनुपन्नं स्यात्, यत्र तु प्रकारान्तरेणापि वाच्यस्योपपत्तिर्जायते तत्र व्यङ्ग्यं न वाच्यसिद्ध्यङ्गम्। अन्यथा—

''निःशेषच्युतचन्दनम्'' इत्यादौ वाच्यस्याधमत्वस्यासिद्धतया व्यङ्ग्यस्य दूतीसम्भोगस्य तदुपपादकतया गुणीभूतव्यङ्ग्यत्वापत्तेः। इत्थं समाधाय स्वकीयमुदाहरणं समर्थयति— अत्र भगवन्नामयोगसिद्धिविशेषयो-स्तादात्म्याध्यवसायमन्तरापि भगवन्नामोच्चारणमहाात्म्यादुपलब्धसार्वज्ञ्यबुद्ध्याऽपि प्रश्नस्योपपत्तेरत्रातिशयोक्तेर्न गुणीभूतत्वम्, भगवन्नामोच्चारणमाहात्म्यस्याचिन्त्यमहत्त्वं पुराणादावुपवर्णितमिति। तुल्यन्यायान्मम्मटोक्तोदाहरणेऽप्येष समाधिः भगवति श्रीकृष्णे रतेस्तच्चिन्तनस्य चाचिन्त्यमाहात्म्यादेव (अर्थाद् भगवति क्षणिकापि रतिस्तूलराशिं वह्निरिव पापराशिं शमयति। परमानन्दमयस्य भगवतश्चिन्तने यादृशाह्लादस्तथा नानेकजन्मकृतसुकृतराशितो लब्धुं शक्य इति)। अशेषपापपुण्यपुञ्जनाशकत्वोपपत्तेः। परञ्चाग्रे ''मृद्वीके''त्यादि, उदाहरणेनासन्तुष्यता पण्डितराजेन अथवा मास्तु प्रागुक्तमुदाहरणम्'' इत्यादिवदता द्वितीयमुदाहरणमुपन्यस्तम्। ''न मनागपि राहुरोधशङ्केत्यादि। इत्थं तुल्यन्यायान्मम्मटोदाहरणेप्यसन्तोष एव प्रतिभाति।

अत्र नागेशः पूर्वोक्तां शङ्कामुत्थाप्य समादधते (उद्द्योते), तथा हि—

ननु धर्मशास्त्रादौ तत्तत् पापपुण्यादीनां स्वस्वफलभोगनाश्यत्वमुक्तन्तर्हि वियोगदुःखतच्चिन्तासुखाभ्यां कथमशेषपापपुण्यनाश इत्यस्यानुपपत्तेः वियोगदुःखतच्चिन्ताह्लादयोरशेषदुष्कृतसुकृतफलराशितादात्म्याध्यवसायेनैव

परिहार इत्यतिशयोक्तिद्वयं वाच्यसिद्ध्यङ्गमिति चेत्, न। भगवतो महात्म्यातिशयेनापि अशेषपापपुण्यनाशस्योपपत्तेरिति।

(का०प्र०, ४/१५९ पृ०)

## विमर्श

वस्तुतस्तु वाच्यापेक्षया व्यङ्ग्यस्यानतिशयित्वे एव गुणीभूतत्वमत्र तु व्यङ्ग्यस्य भगवद्विषयकरत्युत्कर्षप्रयोजकतया वाच्यादतिशयित्वेन गुणीभूतव्यङ्ग्यतायाः अप्रसक्तेः। अत एव प्रभाकरः आह वाच्यसिद्ध्यङ्गत्वं गुणीभावनियतं नास्ति, वाच्यातिशयित्वे गुणीभूतस्याऽसम्भवादित्याह—तस्मान्मम्मटोदाहरणं युक्तमेव।



# अथ पञ्चमोऽध्यायः
# अलङ्कारविमर्शात्मकः

## अथालङ्कारनिरूपणम्

कवनकलाकुशलानां कवीनां कृतिषु रमणीलावण्योपमविलक्षण-कमनीयताया उत्कर्षाधायकानामलङ्काराणां किं तावत् स्वरूपमिति जिज्ञासा स्वभावत उदेति, तत्र मम्मटाचार्यः—

**''उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥**

(का०प्र०, ८/८८)

एतन्निष्कर्षभूतं परिष्कृतं लक्षणमुक्तं प्रदीपकारादिभिः ''रसोपकारकत्वे सति तदवृत्तित्वं, तथात्वे सति रसव्यभिचरितत्वम्, अनियमेन रसोपकारकत्वं चेति। रसोपकारकत्वं शब्दार्थान्यतरोपकारद्वारेण विवक्षितम्। (का०प्र०, प्रदीपे, ८/३८६पृ०)

तत्र विचार्यते— रसोपकारत्वे सति रसावृत्तित्वमिति लक्षणं कामिन्यामतिव्याप्तम्, कामिनी हि आलम्बनत्वेन शृङ्गाररसोपकारिका। बाह्यवस्तुत्वाद् रसावृत्तिता च तस्याः। एवं रसोपकारकत्वे सति रसव्यभिचरितत्वमिति कमलेऽतिव्याप्तम्, कमलं हि उद्दीपनविभावत्वेन रसोपकारकमपि जडे जलादौ स्थित्या रसव्यभिचारि। यथा धूमोपकारकोऽपि वह्निः धूमाभाववत्ययःपिण्डे विद्यमानो धूमव्यभिचारी तद्वत्। अनियमेन रसोपकारकत्वं च कलशेऽतिव्याप्तम्। कलशः कदाचित् कुचस्मारकत्वेन रसोपकारकः कदाचिन्नेति तत्रानियमेन रसोपकारकता सिद्धा। अतस्तद्वारणाय शब्दार्थान्यतरोपस्कारद्वारेणेत्युक्तम्, कामिनीकमलकलशादयः शब्दाः स्वयं न कामिन्यादीन् शब्दान् न वा अर्थान् विभूषयन्ति। यद्यपि शब्दार्थोपस्कारद्वारेण रसोपकारकत्वाङ्गीकारे उपस्कृता अर्था एव रसोपकारकाः सन्ति। शब्दार्थोपस्कारका अलङ्कारास्त्वन्यथासिद्धाः कुलालपित्रादिवद् भवन्तीति वक्तुं शक्यते। तथापि नालङ्कारा अन्यथा सिद्धा। यतो हि ते रसस्याङ्गभूतान् शब्दार्थानलङ्कृत्याङ्गिनं विभूषयन्ति। अङ्गाङ्गिनोरयुतसिद्धत्वात्।

पण्डितराजः— यद्यपि, अलङ्काराणां सामान्यलक्षणं क्वापि नावोचत् तथाप्यलङ्कारनिरूपणोपक्रमे ''अथाऽस्य प्रागभिहितस्वरूपस्य काव्यात्मनो

व्यङ्ग्यस्य रमणीयताधायका अलङ्कारा निरूप्यन्ते'' इति तदुक्त्या प्रतीयते यदलङ्कारसामान्यलक्षणम्'' व्यङ्ग्यस्य रमणीयताप्रयोजकाः अलङ्काराः'' इति समस्ति। (रसगङ्गाधर २/१९४पृ०)

तथाह नागेशः— ''तत् सामान्यलक्षणमाह— ''व्यङ्ग्यरमणीयतेत्यादि''। (गुरुमर्मप्रकाशिका, २४८पृ०)

अपि च प्रायः पण्डितराजोऽभिधत्ते वाक्यार्थोपस्कारकत्वं प्रायः सर्वेष्वलङ्कारलक्षणेषु प्रदेयम्।

एवं रमणीयतेत्यस्य चमत्कारिणी, (र०गं०, २/५५८ तथा ५९१पृ०)

कविप्रतिभा निवर्तितेत्यर्थः। एवं कविप्रतिभानिवर्तिमुख्यवाक्यार्थोपस्कारक-सुन्दरशब्दार्थधर्मत्वमलङ्कारत्वं निष्पन्नम्। एवं च मम्मटमते एवास्य लक्षणस्य पर्यवसानम्। जयदेवोऽप्येवमाह—

**शब्दार्थयोः प्रसिद्धा वा कवेः प्रौढिवशेन वा।**
**हारादिवदलङ्कारः सन्निवेशमनोहरः।।** इति।

(च०लो० ५/१)

विश्वनाथेनोक्तं लक्षणं तु प्रकाशानुरूपमेव प्रकाशते, तथा हि—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्''।।**

(सा०द० १०/१)

अलङ्कारचन्द्रिकाकारस्तु ''रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्य-तरनिष्ठा या विषयितासम्बन्धाऽवच्छिन्ना चमत्कृतिजनकताऽवच्छेदकता-तदवच्छेदकत्वमलङ्कारत्वम्। स्वाभिव्यञ्जकत्वसम्बन्धेन शब्दार्थवृत्तीनां रसभावादीनां वारणाय रसादिभिन्नेति, व्यङ्ग्योपमाद्यलङ्कारध्वनिवारणाय व्यङ्ग्यभिन्नत्वे इति। अनुप्रासादिविशिष्टशब्दज्ञानमुपमादिविशिष्टार्थज्ञानं च चमत्कारजनकम्, जनकता तयोः जनकताया अवच्छेदकः अनुप्रासादिविशिष्टः शब्दः उपमादिविशिष्टोऽर्थश्चावच्छेदकता तयोः तदवच्छेदकत्वम्, अनुप्रासादित्वमुपमादित्वं चालङ्कारत्वम्। शब्दार्थौ च विषयिता सम्बन्धेन ज्ञाने जनकता च स्वरूपसम्बन्धेन ज्ञाने एवमवच्छेद्याऽवच्छेदकयोः सामानाधिकरण्यं निष्पन्नम्। इत्थं च समवायसम्बन्धावच्छिन्नचमत्कारत्वावच्छिन्न-चमत्कारनिष्ठजन्यतानिरूपिता या विषयितासम्बन्धावच्छिन्ना अनुप्रासादिविशिष्टशब्दज्ञानोपमादिविशिष्टार्थज्ञाननिष्ठास्वरूपसम्बन्धाऽवच्छिन्ना चमत्कृतिजनकता तदवच्छेदकताऽनुप्रासविशिष्टशब्दोपमादिविशिष्टार्थयो-

स्तदवच्छेदकत्वं अनुप्रासादित्वम्, उपमादित्वञ्चालङ्कारत्वमिति लक्षणसमन्वयः।

एवं मम्मटाचार्यमते शब्दालङ्काराः, अर्थालङ्काराः, उभयालङ्काराश्चेति त्रयो भेदाः।

१. शब्दालङ्काराः षट्, अर्थालङ्काराः एकषष्टिः उभयालङ्कारस्तु एक एवेति सङ्कलनया अष्टषष्टिरिति। मम्मटो दण्डिनं रुद्रटं चानुसरति। तत्र कियतामलङ्काराणामलङ्कारान्तरेष्वन्तर्भावमपरेषां च निरासं करोति। वस्तुतोऽलङ्कारा अनन्ता सन्ति। तथाह दण्डी—

**ते चाद्यापि विकल्प्यन्ते कस्तान् कात्स्न्येन वक्ष्यति।**

(काव्यादर्शः, २/१)

आनन्दवर्धनोऽपि—

''**वाग्विकल्पानामानन्त्यात्**''। वाग्विकल्पाश्चालङ्कारा इति।

(ध्वन्या० १/२५)

महाकविर्माघोऽपि—

''**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता**''।

(शिशु०, २/७२)

वाङ्मयस्य अनन्ता विचित्रता, वैचित्र्यं चालङ्कार इति।

पण्डितराजस्तु शब्दालङ्कारान्न निबबन्ध। सप्तत्यर्थालङ्कारान्निरूपयामास। अयं चन्द्रालोकमनुसरति। परमस्य ग्रन्थः उत्तरालङ्कारपर्यन्तमेवोपलभ्यते। अयमलङ्काराणां विभागं रुय्यकानुसारं कृतवान्। तत्र सादृश्यमूलकालङ्काराः द्वाविंशतिः, विशेषणविच्छित्तिमूलकाः चत्वारः, गम्यत्वविच्छित्तिमूलकाः त्रयः, वाक्यन्यायमूलकाः अष्टौ, लोकन्यायमूलकाः षोडश, विरोधमूलका एकादश, शृङ्खलामूलास्त्रयः, तर्कणामूलकास्त्रयः। एवमेतानलङ्कारान् सप्रभेदानतीव सूक्ष्मया प्रतिभया निबबन्ध ग्रन्थकारस्तेषां समेषां विवेचनं तु स्वतन्त्रालङ्कारविषयेऽनुसन्धित्सुभिः कर्तव्यमत्र तु यत्र यत्र मम्मटभट्टेन सह मतभेदास्त एव विमृश्यन्ते तत्र च प्रायः पण्डितराजक्रम एवाङ्गीकृतः।

## उपमालङ्कारः

दोषगुणनिरूपणानन्तरं क्रमप्राप्तानलङ्कारान् निरूपयितुकामः शब्दार्थयोः शब्दस्य प्राधान्यादौ शब्दालङ्कारान् निरूप्यार्थालङ्कारान् निरूपयितुमुपश्रयमाणस्तेषूपमाया इतरालङ्कारापेक्षया

स्फुटविभावाद्युत्कर्षकतया, उपमेयोपमाऽनन्वयप्रतीप–स्मरण–रूपक–सन्देह–भ्रान्तिमदुल्लेखापह्नुत्युत्प्रेक्षाऽतिशयोक्तितुल्ययोगिता–दीपक–प्रतिवस्तूपमा–दृष्टान्त–निदर्शना–व्यतिरेक-सहोक्ति–श्लेषाप्रस्तुतप्रशंसाद्यनेकालङ्काराणां मूलभूतत्वात् प्राधान्याद्, भरतादिभिः प्राथम्येन निरूपितत्वाच्चादावुपमां लक्षयति मम्मटाचार्यः—

**"साधर्म्यमुपमा भेदे"**। (का०प्र०, १०/सू०१२५)

इत्यत्र साधर्म्यपदेऽनुस्यूतस्य समानधर्मरूपस्य प्रतियोगिनोऽनुयोगिनौ कावित्याकाङ्क्षां समाधातुं स्वयमभिदधे यत् "उपमानोपमेययोरेव समानेन धर्मेण सम्बन्धो भवति, न कार्यकारणादिकयोरत आक्षेपादेव तयोर्लाभ इति।

न च "कारणगुणाः कार्यगुणानारभन्ते" इति न्यायात् कार्ये कारणगुणानुसारी गुण इति व्यवहारात् कार्यकारणादिकयोरपि साधर्म्यस्वीकारात् न तु कार्यकारणादिकयोः साधर्म्यमित्युक्तिरसङ्गतैवेति चेन्न, तत्र कविप्रतिभानिवर्तितत्वस्याभावादलङ्कारत्वाभावात्। यत्र तु कविप्रतिभानिवर्तितत्वं तत्र त्वलङ्कारत्वमेव यथा—

**"पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव"**।

इत्यादौ। अपि च "अर्थालङ्कारानाह" इति (दशमोल्लासारम्भे) प्रतिज्ञातमतो लक्षणं निष्पन्नं यत्– "अलङ्कारत्वे सति उपमानोपमेययोः समानेन धर्मेण सम्बन्धः उपमेति"। एवमनन्वये—

**न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।**
**यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः।।**

इत्यादावतिव्याप्तिमाशङ्क्य भेदग्रहणमनन्वयवारणायेत्युक्तम्। अनन्वये उपमानोपमेययोः भेदाभावान्नातिव्याप्तिः।

न चानन्वये एकस्यैव धर्मस्य सत्त्वात् सजातीयताविरहेण साधर्म्याभावात् कथमतिव्याप्तिरिति वाच्यम्, काल्पनिकभेदस्वीकारात्। (यथोपमानोपमेययोः काल्पनिकभेदस्तथैव धर्मेऽपि स्वीकारात्) एवमुपमानोपमेययोश्चतुर्धा भेद अभिव्यज्यते। उपात्तः, अनुपात्तः, आरोपितः, तिरोहितश्चेति। तत्रोपात्ते भेदे उपमा। यथा– "कमलमिव मुखं मनोज्ञमेतत्" इति। अनुपात्ते भेदे उपमालङ्कारध्वनिर्यथा—

**"भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य।**
**यस्यानुपप्लवगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्।।**

आरोपितभेदेऽनन्वयः। यथा— "नितम्बिनी सैव नितम्बिनीव" इत्यादौ। तिरोहितभेदे रूपकं यथा— "मुखं चन्द्रः" इत्यादौ।

अत्र प्रदीपकारः— उपमानोपमेययोर्भेदस्याक्षेपादेव लाभे सिद्धे "भेदे" ग्रहणमयुक्तमेव। अभेदे सादृश्यात्मकं साधर्म्यं नोपपद्यते इत्याशङ्क्य समादधे। अत्र साधर्म्यपदमारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरं वर्तते। अतः आरोपितसाधर्म्यमूलकेऽनन्वयालङ्कारेऽस्यातिव्याप्तिनिरासाय भेदे ग्रहणस्यावश्यकत्वात्।

नागेशश्च (तत्रैवोद्द्योते)– आरोपितेति प्रतीकमादायाह (आरोपितसाधर्म्ये उपमास्वीकारे एव— "त्वयि कोपो ममाभाति सुधांशाविव पावकः" इत्यादौ उपमासिद्धिः। अत्र सुधांशाधिकरणकमनलमुपमानं तच्चात्यन्तमसम्भवि। सादृश्यस्य लोकसिद्धत्वाभावे कविः स्वेच्छया खण्डशः पदार्थोपस्थितिं स्वीकृत्य चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यमुपपादयति। कल्पितस्यापि भावनोपनीतकान्तेव चमत्कारित्वात्।) अनन्वये आहार्यारोपितभेदेनापाततः सादृश्यप्रतीतिः। अतस्तत्रोपमाऽतिप्रसक्तिवारणाय "भेदे" इति पदमावश्यकम्। पर्यन्ते तु तस्य बाधप्रतिसन्धानेन द्वितीयसदृशव्यवच्छेदः फलतीत्यन्यत्।

तत्रभवान् पण्डितराजः– काव्यात्मनो व्यङ्ग्यस्य रमणीयता प्रयोजकानलङ्कारान् निरूपयन् तावदुपमां लक्षयति—

**"सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः"।**

अत्र सुन्दरपदार्थः सौन्दर्यविशिष्टः, सौन्दर्यं च चमत्कृत्याधायकत्वम्। चमत्कृतिरानन्दविशेषः, तत्र सहृदयानां हृदयमेव प्रमाणम्। अनन्वयालङ्कारे "गगनं गगनाकारम्" इत्यादावाकारपदेनोपात्तमपि सादृश्यं न सुन्दरम्, तस्य द्वितीयसादृश्यनिषेधे तात्पर्यात्। न तु सादृश्यप्रतिपादने। स्वस्य स्वस्मिन् सादृश्यस्यानन्वयादेव" अनन्वयमिति—अन्वितार्थकं नाम। तत्र सादृश्यमेवाप्रतिष्ठितम्, चमत्कारस्य चर्चा तु दूरेऽपास्ता। एवं व्यतिरेकालङ्कारे "तवाननस्य तुलनां दधातु जलजं कथम्" इत्यादौ सादृश्यस्य निषेध एव चमत्कारी, तत्र प्रतियोगितया निरूपितमपि सादृश्यं न चमत्कारीति न तयोरुपमालक्षणप्रसक्तिः।

एवमभेदप्रधानेषु रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु भेदप्रधानेषु दृष्टान्तप्रतिवस्तूपमा–दीपक–तुल्ययोगितादिषु ते तेऽलङ्कारा एव चमत्कारिणः, तेषां रूपकादीनां दृष्टान्तादीनां च निष्पादकतयाऽवस्थितमपि सादृश्यं न

चमत्कारीति न तत्र तत्रोपमाऽलङ्कारप्रसक्तिः। प्रतीप उपमेयोपमायां च सादृश्यं चमत्कारि, अतस्ते अपि उपमाभेदभूते एव।

इत्थमुपमां निरूप्य मम्मटोक्तमुपमालक्षणं निराकरोति– "साधर्म्यमुपमा भेदे" इति काव्यप्रकाशकृदुपमालक्षणं भवेन्नाम यथा कथञ्चिद् युक्तं परं नातीव रमणीयम्। यतो हि तस्यायमभिप्रायः— उपमानोपमेययोः भेदे सति साधर्म्यं = सादृश्यमुपमेति। अस्य व्यतिरेकेऽतिव्याप्तेः। व्यतिरेकेऽपि उपमानोपमेययोर्भेदस्य सादृश्यस्य चोपलब्धेः। न च भेदे सति पर्यवसितं सादृश्यमुपमेति तस्याभिप्रायः, व्यतिरेके तु सादृश्यस्य निषेधे एव पर्यवसानात् नातिव्याप्तिरिति वाच्यम्, एवं सत्यनन्वयेऽपि सादृश्यस्य निषेधे एव पर्यवसानात् "पर्यवसितसादृश्याभावादेवातिप्रसक्त्यभावात्तत्रातिव्याप्तिवारणाय लक्षणोपात्तं "भेदे" इति पदं व्यर्थमेव स्यात्। अत्र "भेदे" इति विशेषणं पर्यवसितसादृश्ये तात्पर्यग्राहकमिति स्वीकारेऽपि न निस्तारः। यतो हि काव्यालङ्कारनिरूपणप्रस्तावे निरूपितं लक्षणमिदं लौकिकीमलौकिकीं प्रधानां वाच्यां व्यङ्ग्यां सर्वविधामुपमां व्याप्नोतीत्यनौचित्यात्। अतः सुन्दरं वाक्यार्थोपस्कारकमिति विशेषणद्वयं लक्षणेऽवश्यं निवेशनीयं स्यादिति।

## मतभेदः

"साधर्म्यमुपमेति" मम्मटः, "सादृश्यमुपमेति"– पण्डितराजः। मम्मटलक्षणे न्यूनता सर्वविधोपमायामतिव्याप्तिश्च।

## विमर्शः

समानः धर्मः ययोस्तौ सधर्माणौ तयोर्भावः साधर्म्यम्। साधर्म्यं चोपमानोपमेयानुयोगिकः साधारणधर्मप्रतियोगिकः सम्बन्धविशेषः। सादृश्यं चोपमानप्रतियोगिकः उपमेयानुयोगिकः सम्बन्ध इति साधर्म्यसादृश्ययोर्भेदः।

अपि च— "अयमेतत्सदृशः" इत्युक्त्या अनयोः केन धर्मेण सादृश्यमिति जिज्ञासोदेति। सादृश्यप्रयोजकं साधर्म्यमिति स्फुटो भेदः। तथापि उपमायां नैयायिकाभिमतं सादृश्यं भेदघटितम्, रूपके च भेदाघटितं सादृश्यं मीमांसकाभिमतमतिरिक्तपदार्थभूत इति पण्डितराजोऽपि स्वीकरोति (र०गं०, द्वि०आ०, लक्षणानिरूपणे)।

नैयाकिकाश्च "तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्" इति सादृश्यलक्षणं स्वीकृत्य सादृश्यस्यातिरिक्तपदार्थतां निराचक्रुः। तच्च सादृश्यं साधारणधर्मरूपमेवेति साधर्म्यमुपमा, सादृश्यमुपमेति वा स्वीकारे न कापि विप्रतिपत्तिरिति। भेदे सति सादृश्यमुपमेति स्वीकारे व्यतिरेकेऽतिव्याप्तिराशङ्किता

पण्डितेन्द्रेण, तन्न रोचते विद्वद्भ्यः। यतो हि व्यतिरेकं लक्षयता मम्मटेनोक्तं यत्—

**"उपमानाद्यदन्यस्य व्यतिरेकः स एव सः"।** इति।

अर्थादुपमानापेक्षया उपमेयस्य यो विशेषेणातिरेकः आधिक्यमुत्कर्ष इति यावत्, स विशेषेणातिरेक एव व्यतिरेकालङ्कार इति। तत्र व्यतिरेके वैधर्म्यस्यैव वर्णनाद् भवेन्नाम पर्यन्ते सादृश्ये पर्यवसानं परं तत्र मूलमुपमेयोत्कर्षवर्णनमेवातो न तत्रोपमाप्रसक्तिः। अनन्वयेऽतिप्रसक्तिरस्ति सा "भेदे" ग्रहणेन वारिता। अवशिष्यते एक आक्षेपो यत् लौकिकालौकिकप्रधानव्यङ्ग्यादिसर्वविधायामतिव्याप्तिरूपः स वारणीयः– तत्र "भेदे सति सादृश्यमुपमेति" स्वीकारे लौकिके "गोरिव गवयः" इत्यादावतिव्याप्तिः स्यादुपमालङ्कारस्य स वारणीयस्तावत्। तत्रार्थालङ्कारानाह इति प्रतिज्ञया लब्धम् "अलङ्कारत्वे सति उपमानोपमेययोः साधर्म्यमुपमेति"। अलङ्कारत्वं च मम्मटरीत्या–

(१) रसोपकारकत्वे सति तदवृत्तित्वम्।
(२) रसोपकारकत्वे सति रसानियतस्थितिकत्वम्।
(३) अनियमेन रसोपकारकत्वम्।

इति त्रितयं फलितम्। तत्र सति रसे तदुत्कर्षकाः, रसाभावे उक्तिवैचित्र्यमात्रपर्यवसायिनोऽलङ्काराः। उक्तिः काव्यं, तस्य वैचित्र्यं शब्दानां सुश्रवत्वं बन्धकौशलादि च। अर्थानां मनोहारितेति च। अन्यत्र च तल्लक्षणम्— "सौन्दर्यमलङ्कारः" (वामनः, का०सू०।)इति। कुत्रचिच्च "रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्"। इति। एवं सर्वत्र चमत्कारजनक एवालङ्कारः। एवं सर्वत्रोक्तिवैचित्र्यस्येवालङ्कारत्वे "गोरिव गवयः" इत्यादावुपमा सत्त्वेऽपि नास्त्युपमालङ्कृतिरिति।

अलौकिकीमुपमां "त्वयि कोपो ममाभाति सुधांशाविव पावकः" इत्यादौ भवन्तोऽप्यङ्गीकुर्वन्ति। वाच्यायामुपमाऽलङ्कारत्वमिष्टमेव। प्राधानायाम्–

**स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः।**
**शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः।।**

इत्याद्युपमायां मुख्यवाक्यार्थत्वेन प्रधानभूतायाम् (अनलङ्कारभूतायाम्) अर्थादत्रोपमाशरीरघटकादुपमानोपमेयसाधारणधर्मवाचकशब्दातिरिक्तादन्यस्य वाक्यार्थस्याभावादनुपस्कारकतयाऽनलङ्कारभूतेयमुपमेति। तत्राति-व्याप्तेरयुक्तमिदं लक्षणमिति वक्तुं न शक्यते व्यङ्ग्यस्य शृङ्गाररसस्योपमाया

उपस्कारकत्वात्। व्यङ्ग्यायाम् ''उल्लास्य कालकरवालमहाम्बुवाहम्'' ''भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः'' इत्यादौ व्यङ्ग्योपमया प्रकृतस्य राज्ञः परिपोषस्य सर्वैः स्वीकारात्।

अत एव भवताऽपि ''करतलनिर्गलदविरले''त्यादिपद्ये प्रधानवाक्यार्थतयोपमालङ्कारध्वनेः समासोक्तिरिव गुणीभूतत्वमाशङ्क्योक्तम्। न चैवमुपमा प्रकृतार्थोपस्कारिका न भवतीति शक्यं वक्तुम्। ''उल्लास्य कालकरवालमहाम्बुवाहम्'' भद्रात्मनो दुरधिरोहतनोः'' इत्यादौ प्राचीनानां पद्ये ''करतल'' इत्यादिना प्रागुदाहृतपद्ये च व्यङ्ग्योपमया प्रकृतस्य राज्ञः प्रकर्षस्य सकलानुभवसिद्धत्वात्। अन्यत्र

**अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि।**
**भूमण्डलमिदं मूढ! केन वा विनिभालितम्।**

इति चन्द्रकिरणैः सन्तप्तस्य वियोगिनश्चन्द्रं प्रत्युक्तौ मत्प्रियायाः कदापि गृहाद्बहिरनिर्गताया अत एव त्वयाप्यदृष्टाया आननं त्वत्सदृशमस्ति'' इति प्रतीयमानोपमा मूढपदेन ध्वन्यमानाया वक्तृगतचन्द्रविषयिकाया असूयाया उपस्कारिकेत्यलङ्कारः। ''नहि व्यङ्ग्यत्वालङ्कारत्वयोरस्ति कश्चिद् विरोधः'' इति दीक्षितोक्तमव्यङ्ग्यत्वविशेषणं खण्डयता भवतैवोक्तम्। (र०ग०, २/२८४-८५) एवञ्च मम्मटोक्तं लक्षणमदुष्टमेवेति।

## उपमाभेदनिरूपणम्

सा उपमा द्विधा— पूर्णा लुप्ता च। तत्रोपमानोपमेयसाधारणधर्मवाचकशब्दा उपमायाः शरीराणि। सर्वेषामुपादाने पूर्णा। तेष्वेकस्य द्वयोस्त्रयाणां वाऽनुपादाने लुप्ता। (अत्र सर्वत्र वाचकपदं लक्षकं द्योतकं च सङ्गृह्णाति)। तत्र पूर्णा पुनः द्विविधा – श्रौती, आर्थीति भेदात्। यथेवादिशब्दप्रयोगे साधारणधर्मसम्बन्धरूपं साधर्म्यं वाच्यम्। सादृश्यप्रतीतिरार्थी। तुल्यसदृशादिपदानां सादृश्यवति शक्तानां प्रयोगे सादृश्यं वाच्यम्। साधर्म्यञ्चार्थम्। अतो यथेवादिशब्दानां ''तत्र तस्येवेति'' सूत्रेण विहितस्य वतेश्चोपादाने श्रौती। तुल्यसदृशादीनां तुल्यार्थे ''तेन तुल्यं क्रिया चेद्वतिः'' इति विहितस्य वतेश्चोपादाने आर्थी।

द्विविधापीयं वाक्यगा समासगा तद्धितगेति षड्विधा पूर्णा। लुप्ता तु एकोनविंशतिधा। तत्र धर्मलुप्तायाः पूर्णावदेव भेदाः। परं धर्मलुप्ता श्रौती तद्धितगा न भवति, यतो हि ''तत्र तस्येव'' इत्येनेन षष्ठ्यन्तात् सप्तम्यन्ताद्वोपमानपदात् इवार्थे विहिता वतिः साधारणधर्मे एवान्वेतीति तत्र नित्यसाकाङ्क्षो धर्मलोपे नोपपद्यते। अतः पञ्चविधा। उपमानलुप्ता

द्विविधा—वाक्यगता समासगता च। वाचकलुप्ता षड्विधासमास–कर्मक्यच्–आधारक्यच्–कर्तृक्यङ्–कर्मोपपदे णमुल् कर्त्रुपपदेऽणमुल्सु दर्शनात्। एवमेकैकलुप्ता त्रयोदशविधा। द्विलुप्तायां धर्मवाचकलुप्ता द्विविधा—क्विप्गता समासगता च। धर्मोपमानलुप्ता द्विधा– समासगा वाक्यगा च। धर्मोपमेयलुप्ता एकविधा क्यज्गता। त्रिलुप्तायां धर्मोपमानवाचकलुप्ता एकविधा समासगतेति। एवमेकोनविंशतिर्लुप्ता:। पूर्णाभि: सह सङ्कलनेन पञ्चविंशति: भेदा उपमाया इति।

पण्डितराजो मम्मटरीत्यैतान् भेदान्निरूप्यान्यानपि सप्तभेदान् निर्दिदेश। वाचकलुप्तायां णिनि प्रत्यये ''कोकिलालापिनी'' इत्यत्र, कनो लुपि कृते ''चञ्चा पुरुष सोऽयमि''त्यत्र, आचारक्विपि'' ''शरद्राकामृगाङ्कति'' इत्यत्र दर्शनात् त्रयो भेदा अन्येऽपि ज्ञेया:। उपमानलुप्ता इवार्थे छप्रत्ययेऽपि दृश्यते

**यच्चोराणामस्य च समागमो यच्च तैर्बधोऽस्य कृत:।**
**उपनतमेतदकस्मादासीत्तत्काकतालीयम् ।।**

(र०गं०, २/२४२पृ०)

इत्यत्र। अत्र वृत्तौ काकशब्दो (लक्षणया) काकागमनं, तालशब्दश्च तालपतनं बोधयत:। काक इव ताल इवेतीवार्थे ''समासाच्च तद्विषयात्'' (पा०सू० ५/३/१०६) इति ज्ञापकात् समासे काकतालमित्यस्य काकतालसमागमसदृशश्चोराणामस्य च समागम इत्यर्थ:। पुन: काकतालमिवेति विग्रहे इवार्थे ''समासाच्च तद्विषयात्'' इति छप्रत्यये ''काकतालीयम्'' इति तालपतनजन्यकाकवधसदृशश्चोरकर्तृको देवदत्तवध इत्यर्थ:। अत्र प्रत्ययार्थोपमायां तालपतनजन्यकाकवधस्योपमानस्यानुपादानाद् उपमानलुप्ता। धर्मोपमानलुप्ताप्रत्ययार्थेऽपि दृश्यते, ''उपनतमेतदकस्मात्'' इति तृतीयपदरहिते यच्चोराणामित्यादिपद्ये। वाचकधर्मलुप्ता: कनो लोपे दृश्यते, ''चञ्चा पुरुष: सोऽयमित्यादौ। इमे उद्भाविता भेदा अतीवोपयुक्ता: सन्तीत्युद्भावनीया:।

एवं द्वात्रिंशद्विधाऽप्युपमा वस्त्वलङ्काररसरूपत्रिविधव्यङ्ग्यानामथ च वस्त्वलङ्काररूपवाच्यार्थयोर्वा उपस्कारिका भवति। एवं पञ्चविंशतिभेदवादिनां मते पुन: पञ्चविधतायां सपादशतं भेदा:, द्वात्रिंशद्भेदवादिनां मते षष्ठ्युत्तरं शतं भेदा: सन्ति।

इतो अन्येऽपि भेदा: सम्भवन्ति साधारणधर्मवैलक्षण्यात्, तथा हि धर्म: क्वचिदनुगामी, क्वचिद् बिम्बप्रतिबिम्बभावापन्न: क्वचिदुभयं क्वचिद्वस्तु-प्रतिवस्तुभावकरम्बितबिम्बप्रतिबिम्बभावं, क्वचिदसन्नप्युपचरित:,क्वचित्

केवलशब्दात्मक इत्यादि। इयमुपमा क्वचित्साक्षान्मुख्यार्थमुपस्करोति, क्वचित्परम्परया। क्वचिद् वाच्या, क्वचिल्लक्ष्या, क्वचिद् व्यङ्ग्याप्यलङ्कारतां बिभर्ति। अपि च केवल निरवयवा, मालारूपनिरवयवा, समस्तवस्तुविषयसावयवा, एकदेशविवर्तिसावयवा केवलश्लिष्टपरम्परितामालारूपश्लिष्टपरम्परिता केवल– शुद्धपरम्परिता, मालारूपशुद्धपरम्परिता चेत्यष्टौ भेदा रूपकवदत्रापि ज्ञेया:। रशनोपमाख्यो भेद:, धर्मैक्ये धर्मभेदे च सम्भवति । एवमेतेषां भेदप्रभेदानां प्राचीनोक्तभेदै: सह गणने इयमुपमा परिच्छेदानर्हतां याति।

## विमर्श:

पण्डितराजेनोद्भाविता भेदा: सरसानि च तदुदाहरणानि तत्प्रतिभाप्रखरतां ध्वनन्ति। एते भेदा मम्मटभट्टस्य बुद्धिपथं नागता इति वक्तुं न युक्तम्, तथा हि— भिन्नाभिन्नसाधारणधर्मयोरेकस्यैव बहूपमानोपादाने मालोपमा, यथोत्तरमुपमेयस्योपमानत्वे भिन्नाभिन्नधर्मत्वे रसनोपमा च न लक्षिता। "एवंविधवैचित्र्यसहस्रसम्भवाद् उक्तभेदानतिक्रमाच्च" इत्युक्ते: प्रतीयते यदन्यान् भेदान् पूर्वोक्तेषु भेदेषु यथायथमन्तर्भावयति। सारबोधिन्यामनेकेषामन्तर्भाव: कृतो द्रष्टव्य:।

## वाचकलुप्तोदाहरणे मतभेद:

तत्र कर्माधार क्यचि क्यङि च वाचकलुप्तामुदाजहार मम्मट:—

**पौरं सुतीयति जनं समरान्तरेऽसा-**
**वन्त:पुरीयति विचित्रचरित्रचञ्चु:।**
**नारीयते समरसीम्नि कृपाणपाणे-**
**रालोक्य तस्य चरितानि सपत्नसेना।।**

(का०प्र०४३०)

इत्यत्र असौ राजा पौरं जनं सुतीयतीत्यर्थ:। सुतमिवाचरतीति विग्रहे उपमानात्कर्मण: सुबन्तादाचारार्थे क्यच् स्यादित्यर्थकेन 'उपमानादाचारे' (पा०सू० ३/१/१०) इति सूत्रेण सुतमिति कर्मण्युपपदे आचारेऽर्थे क्यचि सुतीयतीति रूपम्। अत्र जनमिति उपमेये कर्मदर्शनाद् उपमानोपमेययो: समानविभक्तिकत्वनियमात् सुतमिति कर्म। अत्राचार: स्नेहपालनादिरूप:। स एव साधारणो धर्म:। एवं समरान्तरेऽन्त:पुरे इवाचरतीति विग्रहे "उपमानादाचारे" इति पाणिनीयसूत्रस्थेन "अधिकरणाच्चेति वक्तव्यम्" इति वार्तिकेनोपमानवाचकादन्त:पुरे इत्यधिकरणपदाद् आचारेऽर्थे क्यचि रूपम्। अत्रापि समरान्तरे इत्युपमेये सप्तमीदर्शनादुपमानेऽपि सप्तम्येवोपमानोपमेययो:

समानविभक्तिकत्वनियमात्, अत्राचारः स्वच्छन्दगमनादिः, स एवात्र साधारणो धर्मः। उभयत्र क्यज्विधायकसूत्रे उपमानादित्युक्तेर्वृत्तौ (समासे) इवार्थस्य प्रवेशः सूचितः।

अत उपमानभूतसुतकर्मकाचाराभिन्नः पौरकर्मकाचार इति पूर्वत्र बोधः। परञ्चोपमानभूतान्तःपुराधिकरणकाचाराभिन्नः समरान्तराधिकरणाचार इति बोधः। उभयत्रोपमाप्रतिपादकस्येवादेर्लोपाद् वाचकलुप्तालुप्तोपमेयमिति प्रकाशकृन्मतम्।

अत्र पण्डितराजः – वाचकलुप्तोपमायां "कर्माधारक्यचि क्यङि" च यदुदाहृतं प्राचीनैस्तन्न सम्यक् प्रतिभाति। यतो हि तत्र धर्मलोपोऽप्यस्ति। अतो धर्मवाचकलुप्तायामिदमुदाहरणीयम्, न वाचकलुप्तायामिति।

न चात्र क्यजाद्यर्थ आचार एव साधारणो धर्मोऽस्तीति शङ्क्यम्, अन्येन केनचित् साधारणधर्मेणाभेदाध्यवसायमन्तरा केवलस्य क्यजाद्यर्थस्याचारस्योपमाप्रयोजकत्वाभावात्। नन्वेवम्—

**"नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना"।**

इति पद्ये समरसीम्नि तस्य कृपाणपाणेश्चरितानि आलोक्य सपत्नसेना नारीवाचरतीत्यर्थके क्यङि अपि उपमानिष्पत्तिर्न स्यात्, केवलाचारस्यैव साधारणधर्मतया प्रतीतेरिति चेन्न, तत्र व्यञ्जनावृत्तिबोध्य-कातरत्वादिपदार्थाभिन्नतयाऽध्यवसितस्यैवाचारस्य साधारणधर्मत्वादुपमासिद्धेः। न केवलमाचारमात्रं तत्रोपमासम्पादकम्, यदि क्यङर्थ आचारमात्रमुपमासम्पादकं स्यात्तदा– "त्रिविष्टपं तत् खलु भारतायते" इत्यादौ सुप्रसिद्धत्वादिरूपाचारस्य साधारणधर्मतया प्रतीतावुपमानिष्पत्तिः स्यात्।

न च निष्पद्यते तावद्, यावत् "सुपर्वभिः शोभितमन्तराश्रितैः" इति चरणान्तरनिर्मितिर्न स्यात्। एवञ्च क्यजाद्यर्थ आचार उपमानोपमेयोभयनिष्ठतया साधारणोऽपि नोपमां प्रयोजयति। अथ मास्तूपमाप्रयोजकताऽऽचारस्य, परमुपमानोपमेयोभयनिष्ठत्वेन साधारणधर्मता तु तस्य स्यादेव। अत आचारवाचकस्य क्यजादेः सत्त्वात्, कथमिह धर्मलोप इति न शङ्क्यम्। उपमाया अप्रयोजकस्य धर्मस्य सत्त्वेऽपि यो धर्म उपमाप्रयोजकस्तस्य धर्मस्योपादानाभावे धर्मलुप्तेति व्यवहारात्। अन्यथा—

**"मुखरूपमिदं वस्तुप्रफुल्लमिव पङ्कजम्"।**

इत्यत्र वस्तुत्वरूपसाधारणधर्ममाश्रित्य पूर्णोपमापत्तिः स्यात्, इष्यते च तत्र धर्मलुप्ता। अतः पूर्वोदाहरणयोर्वाचकलुप्तात्वमसङ्गतमित्याह।

अत्र नागेशः—

"उपमानादाचारे" इति सूत्रे आचारनिरूपितमेवोपमानं गृह्यते, इत्याह (गु०म०प्र० २/२६७,पृ०६८)।

## विमर्शः

क्यच्क्यङोः केवल आचारोऽर्थस्तुल्याचारो वा। विशेषाचारस्तु तत्तत्पदसन्निधानादेव प्रतीयते। यथा— "पौरं जनं सुतीयति" इत्यस्य सुतकर्मकाचारतुल्यपौरजनकर्मकाचारक इत्यर्थः। ततः क्यच्क्यङोराचारगततुल्यताप्रतिपादकत्वमेवास्ति न प्रकृते विवक्षितायाः सुतादिनोपमानेन पौरजनादेरुपमेयस्योपमायाः प्रतिपादकता। प्रकृते विवक्षितोपमा तु तुल्याचारप्रतीत्यनन्तरं तुल्याचारस्वरूपं साधर्म्यमाश्रित्य प्रवर्तते इत्यस्ति साधारणो धर्मः, इति दृष्ट्योदाहृतं मम्मटेन। दृष्टिभेदात् पण्डितराजमतमपि सम्यक्।

## उपमेयोपमा प्रतीपं च

पण्डितराज उपमां लक्षयित्वा उपमेयोपमायां प्रतीपे च सादृश्यस्य चमत्कारित्वादुपमाप्रसक्तिमाशङ्क्य तयोरुपमात्वेन सङ्ग्राह्यत्वादिति समादधे। अतः प्रसङ्गतस्तयोर्निरूपणं क्रियते—

तत्र मम्मटश्च उपमेयोपमां प्रतीपं च पृथगलङ्कारं निरूपयति। तथा हि उपमेयोपमालक्षणम्—

**"विपर्यास उपमेयोपमा तयोः"।**

(का०प्र०, १०/१३६)

तयोरुपमानोपमेययोः विपर्यासः परिवृत्तिः। एकस्मिन् वाक्ये यदुपमेयं तस्यैवोपमानतोपपादनं तस्मिन्नेव वाक्येऽसम्भवम्, अतोऽर्थाद् "वाक्यद्वये" इति लब्धम्। एवं च पूर्ववाक्ये यदुपमेयमुत्तरवाक्ये तदुपमानमिति उपमेयेनोपमा उपमेयोपमेत्यन्वर्थं नाम। तृतीयसादृश्यव्यवच्छेदपरा। अत्र वाक्यद्वये इत्युक्त्याऽन्वयेनातिव्याप्तिः। अत्र वाक्यद्वयं शाब्दमार्थं वा विवक्षितम्। अतः "मुखं पद्मं च मिथः समम्" इत्यत्र मुखं पद्मेन समं पद्मं च मुखेन समम्— इत्याद्यर्थवाक्यभेदसत्त्वे नाव्याप्तिः। उदाहरणं च– "कमलेव मतिर्मतिरिव कमले"त्यादि। अत्र कमलेव मतिरित्युक्त्या मतिरिव कमलेति स्वतःप्रतीतौ पुनः शब्देनोच्यमानं तृतीयसादृश्यं व्यवच्छिनत्तीति तृतीयसादृश्यव्यवच्छेद-कत्वमेवाऽस्योपमातो भेदकम्।

प्रतीपलक्षणं च—

**आक्षेप उपमानस्य प्रतीपमुपमेयता।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्।।**

इत्यादिना यत्रोपमेयमेवोपमानस्य प्रयोजनं निर्वोढुं सुतरां समर्थम्। अतः "किमर्थमिद"मिति न्यायेनोपमानं निन्द्यते निषिध्यते वा तत् प्रथमं प्रतीपम्। अर्थात् तिरस्कारफलकोपमानव्यर्थतोक्तिरेकं प्रतीपम्। उपमानतिरस्कारार्थमुपमानस्योपमेयेन उपमाकल्पनं द्वितीयं प्रतीपम्। द्वितीयं द्विविधं भवति क्वचिदुपमित्यनिष्पत्या तिरस्कारः, क्वचित्तु निष्पन्नोपमा एव तिरस्कारहेतुरिति। एवमसाधारणगुणयोगाद् यद् वस्तूपमानतामपि पूर्वं नान्वभूत् तस्योपमानताकल्पनायामपि प्रतीपं ज्ञेयमिति चतुर्विधं प्रतीपमाह।

प्रदीपकारस्तु चतुर्थभेदेऽपि सूत्रमुपलक्षणतया योज्यमित्युक्त्वा द्वैविध्यमाह। तत्रोपमानत्वेनैव प्रसिद्धस्योपमेयत्वप्रकल्पनमेकम्। असदृशत्वेन प्रसिद्धस्योपमानत्वकल्पनया द्वितीयमिति पञ्चविधमाह।

अत्र प्रतीपपदाभिधेय उपमेयस्योपमानप्रतिकूलवर्तित्वमिति। "उपमानापकर्षबोधानुकूलो व्यापारः प्रतीपमि"ति सामान्यलक्षणम्। तत्र प्रथमे उपमानस्यैव वैयर्थ्यमात्रं प्रतिपाद्यते न तूपमेयस्याधिक्यमिति व्यतिरेकाद् भेदो बोध्यः। द्वितीय उपमित्यनिष्पत्या व्यतिरेकाद् भेदः। व्यतिरेके उपमितिनिष्पत्तावपि उपमेयाधिक्यप्रतीतिः। (अत्र वर्ण्यस्य मुखस्याधिक्यं व्यङ्ग्यम्। उपमानोपमायां मिथः उपमानोपमेयभावः प्रतीयते। अत्र तदभावः। एवं सर्वत्र बोध्यम्। उदाहरणानि तत एव द्रष्टव्यानि।

## पण्डितराजः

उपमेयोपमानिरूपणोपक्रमे उपमाया एव भेद उपमेयोपमेत्यूचे। एवं प्रतीपालङ्कारं पञ्चविधं लक्षयित्वोदाहृत्य चाह — यन्मया पञ्चविधं प्रतीपं निरूपितं तत् प्राचामनुरोधात्। वस्तुतः प्रतीपस्य प्रथमद्वितीयतृतीयभेदा उपमायामेवान्तर्भवन्ति। चतुर्थः प्रकारस्तु केषाञ्चिन्मते आक्षेपालङ्कार एव। पञ्चमस्तु अनुक्तवैधर्म्ये व्यतिरेकेऽन्तर्भवति। तथा हि— निष्पाद्यमानं सुन्दरं वा सादृश्यमुपमेति। तत्र "मुखमिव कमलमिति" प्रतीपस्य प्रथमे भेदे सादृश्यानिष्पत्तिः, असुन्दरं वा सादृश्यमिति केनापि न शक्यते वक्तुम्, अत उपमातोऽस्य कथं बहिर्भावः?

न च प्रसिद्धोपमानप्रतियोगिकसादृश्यमेवोपमा। अत्र तूपमेयप्रतियोगिकमिति कथमत्रोपमेति शङ्क्यम्। प्रसिद्धकमलाद्युपमानप्रतियोगिकमेव सादृश्यमुपमेत्याकारिकाया राजाज्ञाया

अभावात्। न च विरूद्धार्थिकया प्रतीपेत्याख्ययैवोपमा-विरुद्धः प्रतीपालङ्कार इति प्रतीतेः मुखादिप्रतियोगिकं सादृश्यं प्रतीपमतः प्रसिद्धकमलाद्युपमानप्रतियोगिकं सादृश्यमुपमेति स्वतो लब्धमिति वाच्यम्। उपमाविशेषस्य कमलादिप्रतियोगिकसादृश्यस्य विरूद्धत्वेन मुखादिप्रतियोगिकसादृश्यमूलकतयाऽप्यन्वितार्थताया उपपत्तेः। अतः प्रथमः प्रकार उपमाविशेष एव। एवम्—

**माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता**
**रत्नानामहमेक एव भुवने को वा परो मादृशः।**
**इत्येवं परिचिन्त्य मास्म सहसा गर्वान्धिकारङ्गमो**
**दुग्धाब्धे भवता समो विजयते दिल्लीधरावल्लभः।।**

इत्युपमानतिरस्कारमयो द्वितीयः प्रभेदस्तथा—

**निभाल्य भूयो निजगौरिमाणं मा नाम मानं हृदये विधासीः।**
**गृहे गृहे पश्य तवाङ्गवर्णा मुग्धे सुवर्णावलयो लुठन्ति।।**

इत्युपमेयतिरस्कारमयस्तृतीयः प्रभेदोऽप्युपमाविशेषावेव निष्पाद्यमानसुन्दरसादृश्यस्यात्रापि प्रतीतेः। न चात्र क्रमश उपमानोपमेययोस्तिरस्कारः प्रतीयते उपमायान्तु तिरस्काराप्रतीतेर्नात्रोपमेति वाच्यम्। एवमुपमाभेदविशेषाद् विलक्षणाविमौ भेदौ स्यातां, न पुनरुपमाबर्हिर्भूतौ। यथा द्राक्षामाधुर्यातिशयेन पार्थिवपदार्थान्तराद् विलक्षणोऽपि पार्थिवपदार्थ एव नापार्थिवः।

अपि चोपमानोपमेययोस्तिरस्कारो यद्यलङ्कारान्तरतायां प्रयोजकस्तदा तयोः पुरस्कारोऽपि अलङ्कारान्तरतां प्रयोजयेत्। यथा

**एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-**
**मित्येवं परिचिन्त्य मास्म मनसि व्याधानुतापं कृथाः।**
**भूपानां भुवनेषु किञ्च विमलक्षेत्रेषु गूढाशयाः**
**साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षाः खलाः।।**

अत्रौपम्यप्रदर्शनस्य व्याधानुतापनाश एव फलम्, नोपमानतिरस्कारः, तस्य गर्वितत्वेनाविवक्षणात्। एवं फलवैलक्षण्येनालङ्कारवैलक्षण्यमुपपादयितुस्तवात्रालङ्कारान्तरापत्तिर्दुर्वारैव। प्रतीपस्य षष्ठोऽपि भेदो वाऽभ्युपेयः। अपि च, प्रतीपस्य सकलभेदसाधारणलक्षणाभावात् त्वदुक्तानां प्रतीपभेदानामपि परस्परवैलक्षण्येन पृथगलङ्कारतापत्तेः। न च पञ्चप्रकारान्यतमत्वं प्रतीपसामान्यलक्षणमिति वाच्यम्, लक्षणस्यास्य दोषसहस्रग्रस्तत्वात्, अनुपादेयत्वाच्च। उपमालक्षणं तु सकलभेदसाधारणमस्त्येवेत्युपमायामन्तर्भावे

न दोष:। चतुर्थभेदस्याक्षेपेऽन्तर्भाव:। येषां मते आक्षेपस्य लक्षणान्तरत्वान्न तत्रान्तर्भाव इति तेषां मते भवतु नाम चतुर्थ: प्रभेद: प्रतीपस्य प्रतीपालङ्कार:। पञ्चमस्तु प्रभेदोऽनुक्तधर्मे व्यतिरेकेऽन्तर्भवत्येवेति। इत्थं पण्डितराज: उपमेयोपमां प्रतीपं चोपमान्तर्भूततयाऽङ्गीकरोति। पृथक्लक्षणोपपादनं तु तयो: प्राचामनुरोधादिति।

अत्रान्येषां मतम्। तत्र विश्वनाथ:—

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते।।**

इति लक्षयित्वा केषाञ्चिन्मते आह—

**उक्ता चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुन:।**
**कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे।।** इति।

एवमस्य मते प्रसिद्धस्योपमानस्योपमेयत्वकल्पनमेकम्। प्रसिद्धस्योपमानस्य निष्फलत्वाभिधानं द्वितीयम्। एवमत्युत्कृष्टतया प्रसिद्धस्य वस्तुनो येन धर्मेणोत्कर्ष उच्यते तेनैव धर्मेणाप्रसिद्धस्योपमानत्वकल्पनमेकम्, निष्फलत्वाभिधानं वा द्वितीयम्, एवं चतुर्विधमाह।

प्रतापरुद्रीये द्वैविध्यस्यैवोपपादनम्, कुवलयानन्दे च पञ्चविधमुपपादितम्। तथा हि प्रसिद्धोपमानस्योपमेयत्वं प्रथमं प्रतीपम्। (उपमानप्रातिलोम्यात् प्रतीपम्) अत्युत्कृष्टगुणतयाऽन्यत्र स्वसादृश्यमसहमानस्योपमेयलाभेन वर्णस्यानादर:। प्रतिकूलत्वं च तिरस्कार-प्रयोजकत्वम्। अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्योपमानस्य वर्ण्यमुपमेयं कल्पयित्वोपमानस्य तिरस्कारस्तृतीयम्। वर्णनीयनिरूपिता या अवर्णनीयस्योपमा तस्या अनिष्पत्तिवचश्चतुर्थम्। उपमेयस्यैवोपमानकार्यकारित्वेन उपमानं किमर्थमर्थात्तस्य वैयर्थ्यापादनं पञ्चम इति। तत्र पञ्चमस्यास्य वामनरीत्या— "उपमानाक्षेपश्चाक्षेप:" इत्युक्ताक्षेपालङ्कारेऽन्तर्भाव: आशङ्कित:, उदाहृतं च तेन—

**तस्याश्चेन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना"।** इति।

परं दण्डिमम्मटालङ्कारसर्वस्वकार (रुय्यक) विश्वनाथप्रभृतयोऽन्यथैवाक्षेपं लक्षयाञ्चक्रु:। तेषां मते तु वामनरीत्योदाहृत आक्षेप: प्रतीपमेव।

अत एव पण्डितराजोऽप्याह— प्रतीपस्य चतुर्थ: प्रभेद: उपमानकैमर्थ्यरूप: "अभूदप्रत्यूह-" इत्यादौ येषां मते नाक्षेपस्तेषां मतेऽस्तु प्रतीपाख्योऽलङ्कार इति।

वस्तुतस्तु आक्षेपेऽन्तर्भावं अप्पय्यदीक्षित एव (कु०न०, प्र०अ०) शशङ्के। अलङ्कारचन्द्रिकाकृता च निराकारि। तदित्थम्—अप्पय्यदीक्षितेन यदुक्तं उपमानकैमर्थ्यमुपमानप्रातिलोम्यात् प्रतीपमिति। तत्र पञ्चमप्रभेदस्यापि उपमानतिरस्कारप्रयोजकतया प्रतीपसामान्यलक्षणेनाक्रान्तत्वात् प्रतीपप्रभेदत्वमेवोचितम्, नाक्षेपालङ्कारत्वमिति।

## समीक्षा

यच्चोक्तं पण्डितराजेन सकलभेदसाधारणं प्रतीपस्य लक्षणं नास्ति तन्महदाश्चर्यम्- प्रतीपदाभिधेय एव लक्षणम्, अत एव काव्यप्रकाशटीकाकारा: उपमानापकर्षबोधानुकूलो व्यापार इति प्रतीपसामान्यलक्षणमाहु:। अप्पय्यदीक्षितश्च— उपमानप्रातिलोम्यात् प्रतीपमित्याह— प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वम्। नागेशश्च तिरस्कारफलकोपमानापकर्षबोधानुकूलो व्यापार इति प्रतीपलक्षणमाह। स वाच्यो व्यङ्ग्यो वेत्यन्यदेतत्।

अपि चोपमेयोपमाया: प्रतीपस्य चोपमान्तर्गतत्वं यदाशङ्कितं पण्डितराजेन तत्र मूलमप्पय्यदीक्षित एव। तथा हि कुवलयानन्दे प्रतीपप्रकरणे पञ्चविधं प्रतीपमुपपाद्य दीक्षित ऊचे - केचिदनन्वयोपमेयोपमा-प्रतीपानामुपमाविशेषत्वेन तदन्तर्भावं मन्यन्त इति।

तदुक्तेरपि मूलं दण्डी— तथा हि (का०द०, उ०) दण्डिना—

**''त्वदाननमिवोन्निद्रमरविन्दमभूदिति सा प्रसिद्धिविपर्यासाद् विपर्यासोपमेष्यते''।**

इति सा प्रसिद्धोपमानोपमेयभावविपर्यासं विपर्यासोपमा या उक्ता सैव प्रतीपम्।

अपि च

**''तवाननमिवाम्भोजमम्भोजमिव ते मुखम्।**
**इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी।।**

इति यत्राऽन्योन्योत्कर्षशंसिनी परस्परोपमा तत्र अन्योन्योपमेत्यनेन उपमेयोपमा गृहीता। एवम्—

**''चन्द्रारविन्दयो: कान्तिमतिक्रम्य मुखं तव।**
**''आत्मनैवाऽभवत्तुल्यमित्यसाधारणोपमा।।**

इत्यादिना तव मुखमात्मनैव तुल्यमित्यसाधारणोपमा या प्रतिपादिता साऽनन्वय एव। एवञ्च दण्डीप्रभृतयोऽनन्वयोपमेयोपमाप्रतीपानामुपमा विशेषेऽन्तर्भावं जगदु:। तदेवोक्तं कुवलयानन्दे, तदेवोपपादयति पण्डितराज:।

अत्र वैद्यनाथ: (अलङ्कारचन्द्रिकाकृत्) प्रतीपस्याद्यभेदत्रयमेवोपमा-विशेषेऽन्तर्भवितुमर्हति नान्त्यौ द्वौ भेदौ। तत्रोपमितिक्रियानिष्पत्तेरभावात्। वस्तुत: आद्य भेदत्रयमपि नोपमाविशेषेऽन्तर्भवितुमिष्टे। साधर्म्यमूलकचमत्काराऽभावात्। अत्रोपमानतिरस्कृतेरेव चमत्कारजनकत्वात्। एवमनन्वये, उपमेयोपमायां च क्रमश: द्वितीयतृतीयसादृश्यव्यवच्छेदे एव तात्पर्यं न सादृश्यमूलकचमत्कारे इति न तयोरप्युपमाविशेषेऽन्तर्भाव:। अन्यथा सादृश्यवर्णनमात्रेणोपमाऽन्तर्भावे–

**''धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदञ्चत: ।**
**गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते''।।**

इति व्यतिरेकालङ्कृतेरप्युपमाऽन्तर्भाव: स्यात्। परमत्र साधर्म्यसमानाधिकरणवैधर्म्यमेव चमत्कारे प्रधानम्, न तु साधर्म्यमित्युच्यते चेत् प्रकृतेऽपि सममिति विभावयन्तु सहृदया:। अत एवाप्पय्यदीक्षितेन केनचिदित्युक्त्या अस्वरसोद्भावितमित्याह।

**अच्युतरायोऽप्याह–**

''प्रातिकूल्यं प्रतीपत्वमुपमानोपमेययो:'' इति प्रतीपलक्षणं प्राचीनोक्तं पञ्चविधं प्रतीपं व्याप्नोति। पण्डितराजोद्भावितं ''एको विश्वसतां हराम्यपघृण: प्राणान्'' इत्यादिरीत्या षष्ठविधमपि सङ्गृह्णाति। तथा ह्युपमानोपमेययो: परस्परस्पर्धासूचकवर्णनजन्यज्ञानविषयत्वं हि तदुक्ते ''प्रसिद्धौपम्यवैपरीत्येन वर्ण्यमानमौपम्यमेकं प्रतीपमिति'' तदुक्ते ''प्रथमप्रभेदलक्षणे'' ''किं जल्पसि मुग्धतमे''त्यादि तदुदाहरणे च उपमेयापेक्षयाऽधिकसाधारणधर्मवत उपमानस्य तदपेक्षया किञ्चिन्न्यूनतद्धर्मवत उपमेयत्वेन वर्णने तस्य प्रसिद्धोपमेयस्य तादृशोपमानात्मना च वर्णने, सार्वभौमस्य सामन्तत्वे सामन्तस्य च दैवात् सार्वभौमत्वे, न्यूनस्याधिक्यार्थितयाऽधिके स्पर्धा, तथाधिकस्य न्यूनस्पर्धाप्रयुक्तस्पर्धा च यद्वत् प्रसिद्धैव लोके तद्वत् प्रकृतेऽपि स्पर्धाध्वननं युक्तमेव, एवमुपमानोपमेययोरन्यतरस्य किञ्चिद्गुणप्रयुक्तमद्वितीयतोत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यमपरं द्विविधम्, उपमानस्य कैमर्थ्यं चतुर्थम्। सादृश्यविघटनं पञ्चमञ्चेति तत्सम्मतद्वितीयादिप्रभेदेष्वपि निरुक्तसामान्यलक्षणसमन्वय: प्रोक्तदिशैवानुसन्धेय: सुधीभि:। एवं च तदीया प्रतीपसामान्यलक्षणाभावोक्तिस्तु किमभिप्रायेति नैव वयं जानीम इति। एवं षष्ठभेदेऽपि लक्षणसमन्वय: अधिकभेदोपपादनन्तु चमत्कारविशेषजनकत्वाद्

युक्तमेव। पञ्चसंख्याया दिङ्मात्रप्रदर्शनफलत्वाद् इत्याह (साहित्यसारस्य सरसामोदटीकायाम्, पृ० ३९५–९६)।

**विमर्शः**

वस्तुतोऽलङ्कारभेदे चमत्कारभेद एव निदानम्, तद्यदि सादृश्यमूलक-चमत्कारस्तदोपमा यदि द्वितीय-तृतीय-सादृश्यव्यवच्छेदे चमत्कारस्तदाऽनन्वयोपमेयोपमे। यदोपमानापकर्षबोधे चमत्कारस्तदा प्रतीपमिति युक्तमेव पृथगलङ्कारताऽनयोः। अन्यथाऽनन्वयस्यान्तर्भावः कथं नोपपादितः। न च तत्र (स्वस्य स्वस्मिन्) सादृश्यं नान्वेतीति— द्वितीयसदृशव्यवच्छेदे एव तात्पर्यं तदोपमेयोपमायामपि "धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि" इत्यादौ अर्थप्रतियोगिकसादृश्यं धर्मे प्रतिपादिते धर्मप्रतियोगिकसादृश्यस्यार्थेऽर्थतः सिद्धे पुनः शब्दतस्तस्योपादानं तृतीयसादृश्यव्यवच्छेदे एव पर्यवस्यति।

एवं प्रतीपस्यापि नान्तर्भावस्तत्रोपमानतिरस्कारस्यैव चमत्कारित्वात्। अत एव पण्डितराजोऽपि येषां मते नाक्षेपस्तेषां मते चतुर्थप्रभेदस्य प्रतीपत्वमेवोपपादितवान्। एवं सिद्धे सति चतुर्थप्रभेदस्य प्रतीपत्वे प्रतीपालङ्कारः पृथगिति युक्तमेव। अपि च तस्य षष्ठस्यापि भेदस्योपपादनं भवता कृतमिति भवतां प्रतिभावैशिष्ट्यं ध्वनतीति विविधशेमुषीकाणा-मलङ्कारशास्त्राचार्याणां स्व-स्व-प्रतिभावशाद् वैशिष्ट्योपपादनं युक्तमेवेति।

**असमालङ्कारः**

पण्डितराजोऽसमालङ्कारं "सर्वथैवोपमानिषेधोऽसमाख्योऽलङ्कारः" इति लक्षयित्वा तस्यालङ्कारतां समर्थयन्नाह—यद्यप्ययमसमालङ्कारोऽनन्वये नियमतो व्यङ्ग्यस्तथापि यथा रूपके दीपकादौ वा नियमतो व्यङ्ग्याप्युपमा रूपकदीपकादिकृतचमत्कारपरिपोषकतया गुणीभूता न पृथगलङ्कार-व्यवहारमाप्नोति, तथैवानन्वयजन्यचमत्कारपरिपोषकतया गुणीभूतोऽसमो न तत्र पृथगलङ्कारतां भजते। परं यत्र वाच्योऽसमस्तत्र स्वकीयं स्वतन्त्रं चमत्कारं जनयन् पृथगलङ्कारव्यपदेशतां भजते।

अत्र पुनराशङ्कते— अनन्वये स्वस्य स्वेनैव सादृश्यं वाच्यमन्वयमलभमानः सर्वथा सादृश्यनिषेधे पर्यवस्यति। सादृश्यस्य सर्वथा निषेध एव चासमाऽलङ्कारोऽतोऽसमालङ्कारध्वनित्वेनैवोपपन्नस्यानन्वयस्य पृथगलङ्कारता कथमिति शङ्कते चेत्, दीपकदृष्टान्तादावपि व्यङ्ग्योपमाऽस्तीति

सर्वसम्मतम्। तत्राप्युपमयैव गतार्थत्वाद् दीपकादीनां पृथगलङ्कारता कथमिति प्रतिबन्धैव समाधानम्।

प्रतिवादी पुनराशङ्कते— अत्र दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमस्ति, दृष्टान्ते दीपकादौ व्यङ्ग्योपमा गुणीभूता वर्तते तत्र वाच्यदीपकादिमुखेनैव चमत्कारोऽतस्तत्र दीपकादिमुखेन व्यवहार उपपद्यते। दार्ष्टान्तिके पुनरनन्वये व्यङ्ग्योऽसमालङ्कारो मुख्यस्तत्र सर्वथोपमानप्रतिषेधस्यैव चमत्कारित्वाद् युक्तोऽसमालङ्कारव्यवहार इति।

समाधत्ते– यथा दीपकसमासोक्त्यादीनां गुणीभूतव्यङ्ग्यसत्त्वेऽपि अलङ्कारत्वं न हीयते तथैव प्रधानव्यङ्ग्यसत्त्वेऽप्यनन्वयस्यालङ्कारत्वं न हीयत इति।

शङ्का– प्रधानव्यङ्ग्यसद्भावेऽनन्वयस्य वाच्यालङ्कारत्वं कथमिति?

समाधानम्— स्वस्य स्वेन सादृश्यप्रतिपादनमेवानन्वयस्य शरीरं, तस्य वाच्यत्वादनन्वयस्य वाच्यालङ्कारत्वमत्र युक्तमेव।

शङ्का – व्यङ्ग्यप्राधान्ये ध्वनिव्यवहारस्य युक्तत्वात् कथमनन्वयेऽलङ्कारतेति।

समाधानम्— पर्यायोक्तसादृश्यमूलकाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वेऽप्यलङ्कारताया दृष्टत्वात्।

एवमसमस्यालङ्कारत्वं प्रसाध्यान्ते उपसंहरन्नाह पण्डितराजः — "प्राञ्चस्तु नेदमलङ्कारान्तरमित्याहुः" इति।

तत्र प्राचीनानामभिप्रायं स्फुटं कुर्वन्नाह स्वयं ग्रन्थकारः यथा सम्भोगादौ मञ्जीरादीनलङ्कारान् स्वपादादिभ्योऽङ्गेभ्योऽपसारयन्ति कामिन्यो रत्यनुकूलतया तथैव रसानुकूलतया विशेषस्थलेऽलङ्कारविशेषस्यापसारणमति-(निषेधोऽपि)रमणीयं भवतीति नासमादिषु अलङ्कारान्तरकल्पनेति दिक्। (र०ग०, तृ०भा०, पृ० १७६)

अत्र मम्मटमतम्— यद्यपि मम्मटेन प्रतिपदोक्त्या असमालङ्कारविषये किमपि नोक्तम्, तथाप्यभिप्रायं तस्य विवृणते विद्वांसः– तथा हि मम्मटेन उपमानलुप्तालुप्तोपमा "उपमानानुपादाने वाक्यगाऽथ समासगा" इत्यलक्षि। उदाहृतं च–

**सअलकरणपरं वीसामसिरि विअरणं ण सरस कव्वस्क।**
**दीसह अह व णिसम्मइ सरिसं अंसं समेत्तेण।।**

(काव्यप्रकाशः, १०/८८)

अस्य संस्कृतम्–

**सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य।**
**दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण।।** इति।

अत्र सरसकाव्यस्य यत् सकलेन्द्रियाणां परमविश्रामश्रीप्रदानकर्तृत्वं तत्सदृशमंशांशमात्रेणापि न दृश्यते न वा निशम्यते, इत्युक्त्याऽत्र सरसकाव्यस्योपमेयस्योपमानस्यानुपादानादत्रोपमानलुप्ता लुप्तोपमा। अत्रोपमानानुपादाने कथं सादृश्यप्रतीतिः? इति न शङ्क्यम्– अस्मददर्शनश्रवणागोचरमुत्कृष्टगुणं किञ्चिदुपमानं भवतीति सादृश्ये पर्यवसानात्। तत्र प्रदीपकारः – अत्र विशेषतः उपमानं नोपात्तम्, चिन्त्यमेतदित्याह। तत्रोद्द्योतकारः– ''विशेषत'' इति प्रतीकमुपादायाह– अत्रास्मद्दर्शनश्रवणाविषयत्वेन दुर्लभतयोत्कृष्टगुणं किञ्चिदुपमानं भविष्यतीति सादृश्ये पर्यवसानादुपमानलुप्तोपमैवेयमिति।

एतेन ''असमालङ्कारोऽयमुपमातिरिक्तः'' इति रत्नाकराद्युक्तमपास्तम्'' अत एवोपमानलुप्तालक्षणे ''उपमानानुपादाने'' इत्यभ्यधायि मम्मटेन न तूपमानाऽसत्वे'' इति। कस्यचिदुपमानस्य विशिष्यानुपादानमात्रेणोपमानलोपव्यवहारः। अतोऽत्रानन्वयशङ्का न कार्या, तत्रोपमानासद्भाव एव विवक्षित इति नागेशोक्तिः।

(का०प्र०उ० १०/४४८)

''अयमाशयः–अत्र हि न दृश्यते न वा श्रूयते इत्युपमानासम्भवकथनात् सादृश्यरूपाया उपमाया असम्भवाद् असमाऽलङ्कारोऽयमुपमातिरिक्त एवेत्यलङ्काररत्नाकरादावुक्तमिति उपमाभेदोदाहरणत्वमयुक्तमिति। विचार्यमाणे तूपमैवेयम्। अस्मद्दर्शनाद्यगोचरत्वेऽपि उत्कृष्टगुणं किञ्चिदुपमानं भविष्यतीत्युपमायामेव पर्यवसानात्, अतो ''नालङ्कारान्तरमिति'' प्रभाकृदुक्तिश्च अलङ्काररत्नाकरोक्तिं खण्डयतां नाम न पण्डितराजोक्तिम्। पण्डितराजो हि सर्वत्रैवोपमाननिषेधोऽसम इति लक्षयन् स्वयं रत्नाकरं खण्डयति।

यत्तु–

**ढुंढणंतो मरीहसि कंटककलि आईं के अइवणाईं।**
**मालइकुसुमसरिच्छं भमर भमंतो न पावहिसि।।**

**(ढुण्ढुणायमानो मरिष्यसि कण्टककलितानि केतकवनानि।**
**मालतीकुसुमसदृशं भ्रमर भ्रमन्न प्राप्स्यति।।** इति च्छाया।)

इत्यत्र नोपमानलुप्ता, तस्याः सम्भवदुपमानानुपादनविषयत्वात्। अपि तु, असमालङ्कार इति रत्नाकरेणोक्तम्, ''तदसदित्यादिना''।

(र०ग०, पृ० ४०३)

वस्तुतस्तु ''तद्विरहोऽसमः'' इति लक्षयित्वाह रत्नाकरकारः —

**''यत्रोपमानस्य न सम्भवोऽस्ति तत्रासमः स्यादुपमानलुप्ता।**
**सम्भाव्यमानस्य सतः समानधर्मादिकस्य त्वनुदीरणे सा''।।** इति।

उदाजहार च पण्डितराज एव—

**देवाकर्णय नाकिनां पुरि नृणां लोके पुरे भोगिना-**
**मासन् केचन सन्ति केचन तथा स्थास्यन्ति ये केचन।**
**तन्मध्ये न बभूव नास्ति भविता तादृङ् न नीतौ नतौ**
**कान्तौ काव्यरतौ मतौ रिपुहतौ कीर्तौ च यस्ते समः।।**

(अलङ्काररत्नाकरः, सू०१०, पृ०११)

परं ''ढुण्ढुणन्त – पावहिसि'' इत्यत्रासमालङ्कारोपपादनं दृष्टिभेदादेव कृतमर्थात् तन्मते मालतीकुसुमसदृशं जगति नास्त्येवेत्यर्थः न तूपमानसम्भावनेति। असमाऽलङ्कारं शोभाकरमित्रादयोऽर्वाचीनाः स्वीचक्रुः।

एवमनन्वयालङ्कारे नागेशेन यदवोचि, यत् ''असमालङ्कारध्वनिनैव चमत्कारोपपत्तौ अनन्वयस्य पृथगलङ्कारत्वं किमर्थम्, यदि तु रत्यनुकूलतया कुतश्चिदङ्गाद् भूषणापसारणं यथा चमत्काराय तथा प्रकृते उपमालङ्काराभाव-वर्णनमेव चमत्काराय न तु तत्रासमनामा पृथगलङ्कार इत्युच्यते'' इत्यादि। तेन ज्ञायते यदसमे पृथगलङ्कारत्वं मम्मटादिभिर्न स्वीकृतम्, अनन्वयध्वनिनैव गतार्थत्वादिति।

## उदाहरणालङ्कारः

''सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम्'' इत्युदाहरणालङ्कारस्य लक्षणमाह पण्डितराजः। तत्राशङ्क्ते— अर्थान्तरन्यासेऽपि सामान्येन विशेषस्य, विशेषेण वा सामान्यस्य समर्थनेऽवयवावयविभावोऽस्ति, तद्वारणाय उच्यमान इति पदं लक्षणे उपात्तम्। अर्थान्तरेऽवयवावयविभावस्य सत्त्वेऽपि शब्दतोऽनुक्तत्वान्न तत्र लक्षणातिव्याप्तिः अवयवावयविभावस्य वाचका इव–यथा–निदर्शन–दृष्टान्तादयः शब्दाः सन्ति। अत्र इवयथाशब्दौ सादृश्यवाचिनौ स्तः, न सामान्यविशेषस्वरूपोऽवयवावयविभाववाचिनावत इवयथाशब्दाभ्यां कथमवयवावयविभाव उच्यते? इति न शङ्कनीयम्, इवयथा-

शब्दयोरवयवावयविभावे शक्तेरभावेऽपि लक्षणया बोधनात्। अत्र लक्षणाऽनङ्गीकारे इव शब्दस्योत्प्रेक्षाबोधकतापि न स्यात्। उदाहरणम्—

**अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति।**
**निखिलरसायनराजो गन्धेनोग्रेण लशुन इव।।**

अत्रागणितैर्गुणैर्युक्तोऽपि पदार्थ एकेन दोषेण निन्दितो भवतीति सामान्येनोक्तस्यार्थस्य सुखप्रतिपत्तये पदार्थैकदेशभूतेन लशुनेनोदाहृत्य पदार्थलशुनयोरवयवावयविभाव इव शब्देन लक्षणयोच्यते। अत्रोपमा वक्तुं न शक्या। यद्यत्र सादृश्यस्य प्रतीतिः स्यात्तदा इवयथाशब्दवत्तुल्यसदृशादीनामपि शब्दानामत्र सामान्यविशेषभावबोधनाय प्रयोगः स्यात्। न च प्रयुज्यते कविभिरिति सिद्धमत्र सादृश्यानुल्लास इति।

एवमुदाहरणमुदाहृत्य पण्डितराजः प्राचीनमतमुपपादयन्नाह अयमुदाहरणालङ्कार उपमालङ्कारेणैव गतार्थ इति नालङ्कारान्तर इति। अत्र सामान्यविशेषभावप्रतीतेस्तयोरभेदस्तत्र भेदघटितस्य सादृश्यस्यानुल्लासात् कथमुपमेति न शङ्कनीयम्, "निर्विशेषं न सामान्यम्" इति न्यायात्, "अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति" इति सामान्येन निरूपितोऽप्यर्थो विशेषार्थमन्तरा न बुद्धिपथमारोहति, अतस्तस्य भानं दयादानविद्यानिःस्वार्थोपकारविशिष्टस्यापराङ्गनागामित्वादिविशेषरूपेणैव जायते। अतो विशेषान्तरेण निखिलरसायनराजो गन्धेनोग्रेण लशुनेन सह तस्य सादृश्यप्रतीतौ न काचन क्षतिः। सामान्यविशेषलक्षकस्यापीवादेः पर्यन्ते सादृश्य एव विश्रान्तेरिति।

अत्रापि मम्मटाचार्यः किमपि नावोचत्, तथापि टीकाकारो नागेशः इममर्थान्तरन्यासेऽन्तर्भावयति। तथा हि- पण्डितराजेनोदाहरणालङ्कारतयोदाहृते—

**उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम्।**
**मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः।।**

इत्यत्र निदर्शनशब्दस्य समर्थकपरत्वं स्वीकृत्य विशेषेण सामान्यस्य समर्थनरूपमर्थान्तरन्यासं स्वीचक्रे। केचनोपमामेव मन्वते। एवमुदाहरणाख्यो नालङ्कारान्तरः, सामर्थ्यसमर्थकयोः सामान्यविशेषभावसम्बन्धेऽर्थान्तरन्यासः, तदितरसम्बन्धे काव्यलिङ्गमिति स्वीकृतेः। एवम्–

**अनन्तरत्नप्रभवस्य तस्य हिमं न सौभाग्यविलोपि जातम्।**
**एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः।।**

(कुमारसम्भवः १/२)

इत्यत्रापि। द्वयोरर्थान्तरन्यासयोः संसृष्टिमाह। एवं मतभेदेनोदाहरणस्योपमायामर्थान्तरन्यासे वाऽन्तर्भावः।

अत्रालङ्काररत्नाकरकृत् शोभाकरमित्रः— "सामान्येनोद्दिष्टानामेकस्य निर्दशनमुदाहरणम्" इत्युदाहरणं लक्षयित्वा-"अनन्तरत्नप्रभवस्ये"त्याद्युदाजहार। अन्ते चोपमायामन्तर्भावमाशङ्क्यतन्निराकरणाय सङ्ग्रहश्लोकावुक्तवान्–

**उपमानोपमेयत्वं भिन्नयोरुपमेत्यतः।**
**सामान्यस्यास्फुटत्वेन ज्ञातस्य स्फुटसंविदे।।**
**तदंशस्य विशेषस्य क्रियते यन्निदर्शनम्।**
**तदुदाहरणं तस्यामन्तर्भावोऽस्य किं कृतः।।** इति।

## रूपकालङ्कारः

तत्रभवान् मम्मटः — "तद्रूपकमभेदो य उपमानोपमेययोः" इति निरूपयाञ्चक्रे। तत्र रूपयति = एकतां नयतीति रूपकम्। आशाधरभट्टस्तु कुवलयानन्दकारिकाया व्याख्यायाम्— रूपवत् करोति रूपयतीति वा रूपको लक्षणविषेषः, रूपयुक्तं करोतीत्यर्थः। सोऽस्मिन्नस्तीति रूपकमलङ्कारः। उपमानोपमेययोः योऽभेदः = अभेदारोपः तद्रूपकमित्यर्थः। अत्र तदिति नपुंसकं विधेयलिङ्गानुसारम्। यतो हि "उद्देश्यप्रतीतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम-पर्यायेण तत्तल्लिङ्गभाग्भवति" इति नियमोऽभियुक्तैनिर्दिष्टः। उपमानोपमेययो–रभेदारोपे बीजमतिशयसाम्यमेव। अतिशयोक्त्यादावतिव्याप्तिवारणाया नुपह्नुतभेदयोरिति चन्द्रत्वेन मुखत्वेन च रूपेण प्रकटितवैधर्म्ययोरित्यर्थः। सामानाधिकरण्ये निर्दिष्टयोरिति वाऽर्थः। अभेदः=अभेदारोपः। एवञ्च सामानाधिकरण्येन समानविभक्तिकत्वेन (निर्दिष्टयोः) विभिन्नधर्मवत्त्वेन प्रकाशितभिन्नस्वरूपयोर्वा उपमानोपमेययोरतिसाम्योपपादनायारोपिताभेदो रूपकमिति लक्षणं सम्पन्नम्। यथा— 'मुखं चन्द्रः'।

अत्र मुखत्वेन रूपेण मुखस्योपस्थितिः, चन्द्रत्वेन रूपेण चन्द्रस्येति भिन्नधर्मवैशिष्ट्येन प्रकाशितभिन्नस्वरूपयोः (समानविभक्तिकयोर्वा) निर्दिष्टयोरनयोर्वर्तुलत्वगौरत्वाह्लादकत्वकान्तिमत्वादिनाऽतिसाम्यप्रदर्शनायारोपितोऽ-भेदोऽतोऽत्र रूपकम्।

अत्रापनह्नुतभेदयोरित्युक्त्या "चन्द्रः" इत्याद्यतिशयोक्तावुपमेयस्य मुखस्य मुखत्वेन रूपेण निर्देशाभावात् नातिव्याप्तिः। एवमपह्नुतौ— "नेदं नभोमण्डलमम्बुराशिः" इत्यादौ उपमेयस्य निषेधेन भेदस्यापह्नुतिरिति नातिव्याप्तिः।

एवञ्च गौणसारोपलक्षणास्थले रूपकम्। गौणसारोपसाध्यवसानलक्षणास्थलेऽतिशयोक्तिः। समासस्थले मुखपद्ममित्यादौ विशेषणस्य मुख्यतयोपमानेऽन्वयश्चेद् रूपकम्। यथा- "विकसितं मुखपद्मम्" इत्यादौ विकासस्य पुष्पधर्मस्योपमाने पद्मे एव मुख्यताऽन्वयोऽतोऽत्र रूपकम्। एवं विशेषणस्य मुख्यतयोपमेयेऽन्वये उपमा। यथा— "सहास्यं मुखपद्मम्" इत्यत्र हास्यस्योपमेये मुखे एव मुख्यतयाऽन्वयादुपमा। यत्र विशेषणस्योपमानोपमेययोरुभयत्राऽन्वयस्तत्र रूपकोपमयोः सङ्करः। यथा— "रमणीयं मुखपद्मम्" इत्यत्र। अत्र रमणीयताया मुखे पद्मे च सत्त्वादुभयत्रान्वय इति। अलङ्कारत्वे सतीत्युक्त्या कविप्रतिभोत्थापिते चमत्कारजनके "मुखं चन्द्रः" इत्यादावेव रूपकं नाचमत्कारिणि, लोष्ठः पाषाणः, गौर्वाहीक इत्यादाविति।

अत्र प्रदीपकारोऽप्याह— अत्र अनपह्नुतभेदयोरुपमानोपमेययोरभेदो विवक्षितोऽतो नापह्नुतावतिप्रसक्तिः।

(का०प्र०प्रदीपे १०/४६४)

नागेशोऽप्याह- अत्रोपमानोपमेययोरित्यस्योपमानताऽवच्छेदकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थः। तेनाभेदप्रतीतेराहार्यत्वलाभः। अर्थात् मुखं चन्द्र इत्यादौ मुखमुपमेयमुपमेयतावच्छेदको धर्मः मुखत्वम्। चन्द्र उपमानम्, उपमानावच्छेदको धर्मश्चन्द्रत्वम्, तत्पुरस्कारेण मुखं चन्द्र इति शब्दात् निश्चीयमानयोराहार्यभेदो रूपकम्। अतो भ्रान्तिमति नातिव्याप्तिः, भ्रान्तिजनकदोषेण प्रतिबन्धात्। अपह्नुतौ उपमेयतावच्छेदकस्य स्वेच्छया निषिध्यमानत्वेन नातिप्रसक्तिः। अतिशयोक्तौ च साध्यवसानलक्षणाया मूलत्वाद् उपमेयताऽवच्छेदकस्य पुरस्काराभावात्। निदर्शनायामपि साध्यवसानलक्षणाया मूलत्वादुपमेयतावच्छेदकस्यापुरस्कारात्। (का०प्र०, प्रदीपोद्योते १० उ०, पृ० ४६४) (अत्रान्यमपि भेदं प्रतिपादयति दीक्षितः कुवलयानन्दे निदर्शनायाम्) तथा हि—

निदर्शनायां बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टयोरैक्यारोपः रूपकेऽविशिष्टयोरेव। यत्रापि विशिष्टयोः रूपकं यथा—

**अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे।**
**विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः।।**

इत्यादौ बलिनिग्रहे ऊर्ध्वमुत्क्षिप्तो हरेरङ्घ्रिदण्डो विधिविष्टरपद्मस्य नालदण्ड इत्यर्थः। अत्र न केवलमङ्घ्रिदण्डो नालदण्ड इत्यर्थः। अपि तु, ऊर्ध्वोत्क्षिप्तत्वविशिष्टोऽङ्घ्रिदण्डो विधेर्विष्टरभूतस्य पद्मस्य नालदण्ड इति

विशिष्टयो रूपकम्। तत्रापि साधारणधर्मवत्तासम्पादनार्थमेव विशेषणस्योपादानम्। न बिम्बप्रतिबिम्बभावापन्नयोरिति। निदर्शनायां बिम्बप्रतिबिम्बभावविशिष्टयोरैक्यारोपात्। शब्दाद् यत्रोपमानोपमेययोः भेदस्तत्रैव रूपकस्वीकारे प्रात्यक्षिकाहार्यनिश्चये "मुखमिदं चन्द्रः" इत्यादौ न रूपकम्। निश्चीयमानयोरित्युक्त्या "नूनं मुखं चन्द्रः" इत्युत्प्रेक्षायां नातिव्याप्तिः। उत्प्रेक्षायां ज्ञानमलङ्कारः। रूपकेऽभेद इति भेदाच्च।

रूपकेऽतिसाम्यस्य बीजस्वीकारे— "सुखं मनोरमा रामा" इत्यादौ शुद्धारोपविषयकेऽभेदे नातिप्रसक्तिः। यत्तु सादृश्यमूलकगौणसारोपलक्षणायां रूपकमिव शुद्धारोपलक्षणायामपि रूपकमिति—

अलङ्काररत्नाकरकारादयो निगदन्ति— तथा हि— "न च तस्याः सादृश्ये सम्बन्धान्तरे वा कश्चिद्विशेषः यैनेकत्रालङ्कारताऽपरत्र तदभाव इति स्याताम्" (अ०र०, स०२६,पृ०३२-३३) इति। तन्न सादृश्यमूलकस्मरणेऽपि स्मरणालङ्कारापत्तेः। यत्र चन्द्रादिपदानां चन्द्रवृत्तिगुणवति सारोपलक्षणा तत्रैव व्यङ्ग्याभेदप्रतीतौ रूपकम्। मुखमपरश्चन्द्र इत्यादौ कविकल्पितापरचन्द्रेणैवाभेदो बोध्यः, इति उद्द्योते। (१०/४६४)

**अत्र पण्डितराजः**

"उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्। तदेवोपस्कारकत्वविशिष्टमलङ्कारः" इति रूपकालङ्कारं लक्षयित्वा रत्नाकरं दीक्षितं च निराकृत्य मम्मटभट्टं निरस्यन्नाह— यच्च— "तद्रूपकमभेदो य उपमानोपमेययोः" इति रूपकलक्षणं प्राचीनैः (मम्मटभट्टैः) उक्तम्, तदतिव्याप्तिग्रस्तस्त्वाच्चिन्त्यम्। यतो हि अपह्नुति-भ्रान्तिमदतिशयोक्तिनिदर्शनास्वपि उपमानोपमेययोरभेदस्य प्रतीतेस्तत्राप्यतिप्रसक्तेः। लक्षणे उपमानोपमेययोरुक्तत्वाद् यत्रोपमेयतावच्छेदकस्य मुखत्वादिकस्य पुरस्कारेणोपमेयस्य, तथोपमानतावच्छेदकस्य चन्द्रत्वादिकस्य पुरस्कारेणोपमानस्य च निर्देशस्तत्रैवाभेदप्रतीतौ सत्यां रूपकमित्यभिप्रायवर्णनेन यद्यपि अपह्नुतौ स्वेच्छयोपमेयस्य निषेधाद् भ्रान्तिमति च भ्रमजनकदोषेणोपमेयस्य प्रतिबन्धाद् अतिशयोक्तौ निदर्शनायाञ्च साध्यवसानलक्षणामूलत्वाद् विषयिणा (उपमानेन) विषयस्य (उपमेयस्य) निगरणान्नास्त्युपमेयतावच्छेदकस्य पुरस्कारोऽतोऽत्रातिप्रसक्तिवारणेऽपि "नूनं मुखं चन्द्रः" इत्युत्प्रेक्षायामुपमानता-वच्छेदकस्योपमेयस्योपमेयतावच्छेदकस्य च पुरस्कारेणोपमेये उपमानस्याभेदप्रतीतौ सत्यामतिप्रसक्तेः सत्त्वात्।

न च "प्रकृतं यन्निषिध्यान्यत् साध्यते सात्वपह्नुति:" इति लक्षणलक्षितस्यापह्नुते: "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इति लक्षिताया उत्प्रेक्षायाश्च स्वस्वविषये बाधकत्वाद् अपह्नुत्युत्प्रेक्षादिविषयपरिहारेणैव रूपकस्य मुखं चन्द्र इत्यादिर्विषय: स्यात्। यथा मीमांसाशास्त्रे जैमिनिना यज्ञसामान्ये "कुशमयं बर्हि:" रित्युक्तमत आभिचारिककर्मातिरिक्तं यज्ञकर्मैव "कुशमयं बर्हि:" इत्यस्य विषय:। यथा वा व्याकरणशास्त्रे पाणिनिना "च्ले: सिच्" इति सामान्येन सिजादेश: पूर्वमुक्त:। पुन: "शल इगुपधादनिट: क्स:" इति च्लेरेव क्सादेशो विहित:। तदा क्सादेशस्य विषयं परिहृत्यैव सिजादेश: प्रवर्तते। लोकेऽपि जागर्ति तक्रकौण्डिन्यन्याय:। यथा— "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्, कौण्डिन्याय तक्रम्" इत्यत्र ब्राह्मणत्वेन कौण्डिन्याय अपि दधिदानं प्राप्तम्। परं तस्मै तक्रमेव सम्प्रदीयते न दधि। इति तक्रदानातिरिक्तो विषयो दधिदानस्य। तथैवात्रापि अपह्नुत्युत्प्रेक्षादीनां विषयपरिहारेणैव रूपकस्य विषय इति नोत्प्रेक्षादावतिव्याप्तिरिति वाच्यम्, दृष्टान्तदार्ष्टान्तिकयो: वैषम्यात्। तथा हि— "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति "प्रकल्प्य चापवादविषयं तत उत्सर्ग: प्रवर्तते" इति च न्यायाभ्यां विशेषशास्त्रं स्वविषये सामान्यशास्त्रस्य बाधकं भवत् स्वविषयातिरिक्तत्वेन (सामान्यशास्त्रम्) व्यवस्थापयति। परं प्रकृते रूपकस्य लक्षणमसाधारणो धर्म:। स यद्युत्प्रेक्षादावतिव्याप्त: स्यात्तदा कस्तमुत्प्रेक्षादिभ्यो निरस्य उत्प्रेक्षाविषयातिरिक्तत्वेन व्यवस्थापयेत्। यथा घटे घटत्वं पृथिवीत्वं द्रव्यत्वञ्चानेके धर्मा: सन्ति, नहि घटत्वं स्वाधिकरणात् पृथिवीत्वं द्रव्यत्वं च निरस्य विषयान्तरं ग्राहयितुं क्षमते। तथैवाऽत्राप्युत्प्रेक्षादौ रूपकलक्षणातिव्याप्तेरतिप्रसक्तिदोषो वज्रलेपायित एव।

न च यत्र सम्भावना तत्रोत्प्रेक्षा, यत्राहार्याभेदस्तत्र रूपकमिति विषयविभागस्य सत्त्वात् कथमतिव्याप्तिरिति शङ्क्यम् विनिगमकाभावेन सम्भाव्यमानस्याप्यभेदस्य रूपकालङ्कारतया ग्रहीतुं शक्यत्वात्। न च सम्भाव्यमानाभेद उत्प्रेक्षा, विषयाभेदो रूपकमिति विषयभेदात् कथमतिव्याप्ति:। एवमुत्प्रेक्षायामेव मतभेदेनालङ्कारद्वयापत्ते:। न च निश्चीयमानाऽभेदोरूपकम्, उत्प्रेक्षायां निश्चयाभावान्नातिप्रसक्तिरिति वाच्यम्। एवं तर्हि मदीयोक्ते लक्षणे एव भवतां पर्यवसानमिति।

**प्राचीनमतम्**

आलङ्कारिकेषु भामहो दण्डी चालङ्कारशास्त्रप्रणेतारौ सर्वप्रथमतया प्रसिद्धौ तत्र भामहमते रूपकलक्षणम्—

**उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते।**
**गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः।।** इति।

(काव्यालङ्कारः २/२१)

(लक्षणमिदमतिगहनं विवेचनमपेक्षते तदप्रकृतत्वान्न सम्भवति)। रूपकलक्षणं दण्डी चाह—

**उपमैव तिरोभूतभेदा रूपकमुच्यते।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवः।।** इति।

अयं भावः — उपमायामुपमानोपमेययोर्भेदः प्रसिद्धः, परं सादृश्यातिशयप्रकाशनाय यत्रोपमायां स भेदस्तिरोभूतः, एवम्भूता (तिरोभूतभेदा) उपमैव रूपकम्, उदाहरणं यथा— बाहुलतेत्यादि।

वामनोऽपि— **''उपमानेनोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम्''** इति लक्षयित्वा वृत्तौ स्वयमाह— तत्त्वस्याभेदस्येति।

जयदेवस्त्वाह—

**यत्रोपमानचित्रेण सर्वथाऽप्युपरज्यते।**
**उपमेयमयी भित्तिस्तत्र रूपकमिष्यते।।**

(चन्द्रा०, ५/१८) इति।

विश्वनाथश्च—

**''रूपकं रूपितारोपो विषये निरपह्नवे।''**

(सा०द०, पृ० ५६६)

इति लक्षयाञ्चक्रे।

दीक्षितश्च—

**विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्तद्रूपकम्।** इति।

(कु०न०, पृ० १५)

चित्रमीमांसायां च—

**बिम्बाविशिष्टे निर्दिष्टे विषये यद्यपह्नुते।**
**उपरञ्जकतामेति विषयीरूपकं तदा।।**

इत्याह ।

वैद्यनाथश्च—

उपात्तबिम्बाविशिष्टविषयधर्मिकाऽऽहार्यारोपनिश्चयविषयीभूतमुपमाना-भेदताद्रूप्यान्यतरद् रूपकमिति।

**विमर्शः**

एवं प्राचीनग्रन्थपर्यालोचनया ज्ञायते यत्पण्डितराजस्य लक्षणमतीव समीचीनं सूक्ष्मप्रतिभोद्भूतमिति तथापि सर्वस्यापि विश्लेषणस्य मूलं प्राचीनग्रन्थेषूपलभ्यते। तथा हि— "नूनं मुखं चन्द्रः" इत्युत्प्रेक्षायां रूपकस्यातिव्याप्तिः प्रदर्शिता पण्डितराजेन, सा भामहस्यैकयोक्त्या निराकृता भवति। तथा हि—

**तत्रासाम्भविनाऽर्थेन कः कुर्यादुपमां कृती"।**

(काव्या०, २/४९)

तथा—

**इष्टं चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा।**

(काव्या०, २/५०)

तत्रोपमोत्प्रेक्षयोरयं भेदो जागर्ति, यत्रासम्भविनाऽर्थेनातिसाम्यमुपपादितं तत्रोत्प्रेक्षा, यथा—

**पुञ्जीभूतमिव ध्वान्तमेष भाति मतङ्गजः।**

इत्यादौ ध्वान्तस्यामूर्तस्य तेजसोऽभावरूपस्य पुञ्जीभवनमसम्भवमेव। तथापि कविरुत्प्रेक्ष्य तत्सादृश्यं मतङ्गजे उपपादितवान्। यत्र सम्भविनोपपादितं तत्रोपमा।

यद्यपि नूनं मुखं चन्द्र इत्यत्र नास्त्यसम्भवस्तथापि यत्राभेदस्य सम्भावनामात्रप्रतीतिस्तत्रोत्प्रेक्षा, यत्राऽऽहार्याभेदप्रतीतिस्तत्र रूपकमिति विषयभेदात्। अत एव जयदेवेन रूपकलक्षणे "सर्वथा" पदनिवेशः कृतः। विश्वनाथेनाऽप्यपह्नुतौ रूपकातिप्रसक्तिनिवारणायैव रूपकलक्षणे "विषये निरपह्नवे" इत्यवोचि। अपह्नुतौ विषयस्य निषेधो भवति, अत्र च पुरस्कार इति विषयभेदात्।

एवमुत्तरवर्तिनामाचार्याणां सूक्ष्मेक्षिकया लक्षणमतीव सूक्ष्मं निष्पन्नम्। तथापि पण्डितराजस्यात्रातिव्याप्त्याद्याशङ्का न सर्वथा नवीना। दीक्षितेनैव स्वकृतरूपकलक्षणस्य पदकृत्ये सर्वेषां दोषाणामाविर्भावितत्वात्। तथा हि—

**त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।**
**इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः।।**

इति निदर्शनायामतिव्याप्तिनिरासाय बिम्बाविशिष्टे इत्युक्तम्। अत्रोपमेयं मार्जनम्, उपमानं च पाण्डुरीकरणम्, उभयत्रापि अलक्तकश्रीखण्डादि-बिम्बविशिष्टत्वात्। "निर्दिष्टे" इत्युक्त्यातिशयोक्तौ नातिव्याप्तिस्तत्र

विषयनिगीर्णत्वात्। "अनिह्नुते" इत्युक्त्याऽपह्नुतौ नातिप्रसक्तिः तत्रोपमेयस्य निह्नुतत्वात्। "उपरञ्जकतामेति विषयी" इत्युक्त्या सन्देहोत्प्रेक्षासमासोक्ति-परिणामभ्रान्तिमत्सु नातिव्याप्तिः। यतो हि "तादूरूप्यनिश्चयविषयतामेतीत्यर्थः। एवं सन्देहोत्प्रेक्षयोः निश्चयस्याभावात्। समासोक्तौ व्यवहारमात्रस्यैवारोपात्। परिणामे च विषयिण एव विषयतादूरूप्यगोचरत्वात्। भ्रान्तिमति च सतः कल्पितस्य स्वारसिकभ्रमस्यैव मूलत्वात्, तस्य अनाहार्यत्वादिति।

इत्थं प्रायः पण्डितराजः - पूर्वाचार्याणां मतं समीक्ष्य सूक्ष्मेक्षिकया स्वकीयं लक्षणं व्यधायि। महापण्डितो नागेशोऽप्युद्योते "तद्रूपकमभेदो य उपमानोपमेययोः" इति लक्षणघटकमुपमानोपमेययोरिति पदस्य प्रदीपे अनपह्नुतभेदयोरुपमानोपमेययोरित्याद्युक्तस्य उपमानोपमयेयोरिति प्रतीकमादाय यदाह— "उपमानताऽवच्छेदकोपमेयताऽवच्छेदकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थः" इति यदाह तत् "अप्पय्यदीक्षितपण्डितराजयोर्ग्रन्थाऽवलोकनादेव। परं पुराकाले शास्त्रेषु एतदासीद् यदाचार्याः सूत्ररूपेण सारवल्लक्षणं प्रतिपादयन्ति स्म। तत्रापतितमव्याप्त्यतिव्याप्त्यादिदोषं तत्पदव्याख्यानतो विद्वांसो निराकुर्वन्ति। यथा— पूर्वत्रासिद्धम् (पा०सू० ८/२/१) इति सूत्रं वर्तते। इदं द्विपदं सूत्रम्, "पूर्वत्र असिद्धम्" इति। पूर्वत्र इत्यस्यार्थः पूर्वस्मिन् इति, तत्र किं पूर्वस्मिन्निति जिज्ञासायां "कर्तव्ये" इत्यस्याध्याहारः। एवं पूर्वस्मिन् कर्तव्ये असिद्धमित्यर्थः, ततः किमसिद्धम्? इति आकाङ्क्षायां परमिति लभ्यते, ततः "पूर्वस्मिन् कर्तव्ये परमसिद्धम्" इत्यर्थो लब्धः। ततः कुतः पूर्वं कुतः परमिति जिज्ञासायां यत्रेदं सूत्रं पठितं ततः पूर्वं ततः परम्। सूत्रञ्चेदमष्टमाध्यायस्य द्वितीयपादस्य प्रथममिति। अतः पूर्वं सपादसप्ताध्यायी वर्तते, परं त्रिपादी वर्ततेऽतः "सपादसप्ताध्यायीं" प्रति त्रिपाद्यसिद्धेत्यर्थो निष्पन्नः। परं तथापि "गोधुङ्मान्" इत्यत्र भष्भावानापत्तिर्वत्वापत्तिर्वा दोष उद्भावितः, अतः अधिकारसूत्रत्वमस्य संसाध्य त्रिपाद्यामस्याधिकारात् तत्रापि पूर्वं प्रति परस्यासिद्धत्वबोधनात् "त्रिपाद्यामपि पूर्वं प्रति परमसिद्धम्" इत्यर्थो जातः। तथापि शङ्कते पूर्वं प्रति परस्य "शास्त्रस्यासिद्धिर्भवति कार्यस्य वा तदा दोषादिकमुद्भाव्य निर्णीयते" "कार्यस्येति" पुनः असिद्धपदस्य कोऽर्थ इति जिज्ञासा जायते तदा सिद्धं निष्पन्नं प्रवृत्तमिति, तद्भिन्नमसिद्धमनिष्पन्नमप्रवृत्तमित्यर्थः "सिद्धश्च प्रत्ययविधौ" इत्यादौ सिद्धशब्दस्य तथा व्याख्यातत्वात्। एवं "पूर्वत्रासिद्धम्" इत्यस्यार्थो निष्पन्नः" सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। (कौ०वृ०) इति। तत्र सूत्रस्य तावन्मात्रेऽर्थे तात्पर्यात् सूत्रमसमीचीनं न

केनाप्युच्यते। एवं मम्मटेन सूत्ररूपेणोक्तं लक्षणं तत्रातिव्याप्त्यादिकं निरस्यन्ति विद्वांसस्तथा तथा व्याख्यानात्, पण्डितराजोऽपि मम्मटीयं लक्षणं सिद्धान्तरूपेणं स्वीकरोति, यदाह— "रूपके बिम्बप्रतिबिम्बभावो नास्तीति दीक्षितमतं निराकुर्वन्– "ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति नियमात्।

(र०ग०, द्वि०आ०–रूपकालङ्कारे पृ०४९७,४९८)

परं पूर्ववर्तिभिराचार्यैः क्रमशः लक्षणं स्फुटीकृतं तदपि युक्तं यतो ह्युक्तमभियुक्तैः "नासूया कर्तव्या यत्रानुगमः क्रियते शास्त्रकारैरिति (म०भा०)

एवं रीत्या मम्मटोक्तलक्षणस्यैव व्याख्यानभूतं पण्डितराजोक्तं लक्षणमतीव समीचीनमिति नास्ति विप्रतिपत्तिः स्फुटं प्रतिपादनात्। तदध्ययनाद् विनेयानां दृष्टिरपि स्फीता भवतीति युक्तम्। अत एव अच्युतरायः—

**रूपकं तूपमेयत्वाऽवच्छेदकपुरस्कृतेः।**
**तत्रोपमानतादात्म्याऽध्यवसानं गिरात्मराट्।।**

(सा०सा०कौ०र०, पृ० ९६)

इति लक्षयाञ्चक्रे।

## परिणामालङ्कारः

पण्डितराजः परिणामालङ्कारम् — "विषयी यत्र विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण स परिणामः" इति लक्षयाञ्चक्रे। अस्यार्थः— यत्रारोप्यमाणः (उपमानम्) आरोपविषयतात्मतयैव (उपमेयस्वरूपेणैव) प्रस्तुतोपयोगी (प्रस्तुतक्रियानिर्वाहकः) भवति न स्वतन्त्रेण स परिणामः। अत एव रूपकादस्य भेदः। यतो हि परिणामे उपमेयाऽभेद उपमाने प्रतीयते। रूपके च उपमानाभेद उपमेये प्रतीयत इति।

नागेशश्चात्र गुरुमर्मप्रकाशिकायाम् "उपमानप्रतियोगिकाभेदो रूपकम्, उपमेयप्रतियोगिकाभेदः परिणामः, यथा प्रतीपे। अत्राभेदस्य प्रतियोगी उपमेयो भवतीत्यत्र तात्पर्यग्राहकं "प्रकृतोपयोगी" इति। "प्रकृतोपयोगी" इत्यस्य लक्षणे न प्रवेशः। एवं यत्रोपमानं स्वतन्त्रतयैव प्रकृतोपयोगि भवति, उदासीनं वा तत्र रूपकम्। इत्थं परिणामालङ्कारः "विशेषणं विशेष्येण बहुलमिति" विशेषणसमासाधीनः। रूपकं "मयूरव्यंसकादयश्च" इति सूत्रसमासाधीनमित्याह।

अग्रे पण्डितराजो मतान्तरमुपपादयन्नाह— क्वचिदुपमेयं स्वरूपेण न प्रस्तुतोपयोगीत्युपमानाभिन्नतयाऽवतिष्ठते, तत्रोपमाने परिणत्या उपमानपरिणामः। यथा—

**''वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति''।**

अत्र स्मरतापापनोदे इन्दुः स्वतन्त्रतया नोपयुक्त इति वदनाभिन्नतया परिणमति। अतोऽत्र विषयिणो विषयपरिणतत्वाद् विषयपरिणामः। अतः परिणामद्वयमिदं रूपकमेव। यतो हि ''विषयताऽवच्छेदक-विषयिताऽवच्छेदकान्यतरपुरस्कारेण निश्चीयमानविषयिविषयान्यतरत्वं रूपकम्'' इति रूपकलक्षणम्। अत एवोक्तं मम्मटेन— तद्रूपकमभेदो य उपमानोपमेययोः। इति केचिद् वदन्ति। अत्र ''केचिद् वदन्ति'' इति पदद्वयेनारुचिः सूच्यते। तद्बीजं चाह नागेशः। अलङ्कारभेदे चमत्कारभेदो मूलमिति सिद्धान्ताद् अत्र (रूपकपरिणामयोः) भेदः उचित एवेति। काव्यप्रकाशप्रदीपोद्योते च (रूपकालङ्कारे) नागेशः परिणामं निराकरोति— तथा हि— यत्तु उपमानं यत्रोपमेयस्वरूपेणैव प्रकृतकार्योपयोगि भवति न स्वतन्त्रेण तत्र परिणामः, परिणामे उपमेयस्याभेद उपमाने उपरज्यते, रूपके तु उपमानस्याभेद उपमेये इति भेदः। यथा—

**''वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति''।**

इत्यत्र स्मरतापशमनसामर्थ्यमिन्दौ स्वतन्त्रतया नास्तीति ग्रीष्मतापाहारकत्वाद्रमणीयशोभाधारकत्वाच्चोपमानतयोपात्तोऽत्रेन्दुरुपमेय(वदन)-रूपतया परिणमतीति परिणामालङ्कार इति दाक्षिणात्या निगदन्ति। तन्न युक्तम्— इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयस्य मुखस्यानुत्कर्षकत्वेनालङ्कारत्वाभावादिति।

मम्मटाचार्यः रूपकात् पृथक् परिणामं न स्वीकरोति। अत एव रूपकमुपमानोपमेययोरभेदो रूपकमिति लक्षयामास। तेनोपमानाभेद उपमेयाभेदश्चोभौ गृहीताविति ज्ञायते।

## विमर्शः

परिणामालङ्कारो दण्डिवामनमम्मटादिभिर्नोदलेखि तथापि अलङ्कारसर्वस्वकारो रुय्यको जयदेवविश्वनाथशोभाकरमिश्राप्पय्यदीक्षित-पण्डितराजाच्युतरायविद्याधरादिभिरर्वाचीनैर्नव्यैश्चाङ्गीकृतः स्वस्वप्रबन्धे च निबद्धः। तत्र परिणामालङ्कारस्वीकुर्वताममीषामाचार्याणामयमभिप्रायो यत्—

भवेन्नाम रूपके उपमानोपमेययोरभेदः, परं तूपमानस्य प्रकृतक्रियायामुपयोगिता न भवति। यथा— ''मुखचन्द्रं पश्यामि'' इत्यत्र

द्रष्टा चन्द्राभिन्नं मुखमेव पश्यति न तु दर्शनक्रियायामत्र चन्द्रस्योपयोगः, परिणामे तु–

**"प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा"।**

इत्यादौ वीक्षणक्रियायामुपयोगो दर्शितः, अब्जस्य वीक्षणक्रियायां योग्यताभावः। अतः अब्जमुपमेयस्यैव परिणतं क्रियोपयोगि भवतीति परिणामे प्रकृतक्रियोपयोग्युपमानं भवति। रूपके उपमानाभेद उपमेये, उपमेयोपयोगाय। परिणामे उपमेयाभेद उपमाने उपमानोपयोगाय। रूपके केवलमुपमानाभेदे तात्पर्यम्, परिणामे अभेदप्रतीत्यनन्तरं प्रस्तुतक्रियोपयोगिताऽप्युपमानस्य प्रतीयते।

समासस्थले रूपके क्वचित् पूर्वपदस्य क्वचिदुत्तरपदस्य प्राधान्यं समासविधायकसूत्रभेदात् "विशेषणं विशेष्येण बहुलम्" इति सूत्रेण समासे विशेषणस्य प्राधान्यम्, "मयूरव्यंसकादयश्च" इत्यनेन समासे व्युत्पत्तिवैचित्र्यात् क्वचिद् पूर्वपदस्य क्वचिदुत्तरपदस्य च प्राधान्यम्, परं परिणामे उत्तरपदस्यैव प्राधान्यमिति द्वयोर्भेदः।

परं मम्मटस्याभिप्रायो यद् उपमानाभेदो भवतु, उपमेयाभेदो वा, उभयमपि रूपकम्। अत एव "उपमानोपमेययोरभेदो रूपकम्" इति सामान्येनाह न तूपमानस्योपमेये भेद इति। अथैवं सति भवतां मते—

**"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्"।**

इत्यत्र कोऽलङ्कारः। "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासे राजा नारायण इवेति विग्रहे न तावदुपमितसमासादुपमा लक्ष्मीकर्तृकालिङ्गनस्यानुपपत्तेः, कुलीनायाः स्वपतिसदृशस्यान्यस्या-लिङ्गनानौचित्यात्। अत्र यदि नारायणस्योपमानस्योपमेये राजन्यभेदो राजा नारायण एवेति मयूरव्यंसकादिसमासोऽतो रूपकम्, तदाऽत्र केवलस्याभेदस्य प्रत्ययादभेदप्रतीत्यनन्तरमालिङ्गनक्रियोपयोगस्यापि प्रतीतेः।

न चात्र परिणामः। सर्वैः भवद्भिः रूपकस्वीकारात्। वृत्तिवार्तिके रसगङ्गाधरे च रूपकस्यैव निरूपणात्। अत्र प्रकृते क्रियोपयोगिता नास्तीति सहृदयैर्भवद्भिरशक्यवक्तव्यत्वात्। राज्ञः प्रस्तुतत्वात्। तस्य च लक्ष्मीकर्तृक-मालिङ्गनं नारायणस्य राजन्यभेदप्रतीतिमन्तराऽसम्भवाद् एवमत्र रूपकं प्रतिपादयद्भिः परिणामस्य रूपकत्वं तूष्णीभावेनाङ्गीकृतमित्यत्र नास्ति संशीतिः। तथापि यत् किञ्चिद्वैचित्र्यं व्युत्पत्तिवैचित्र्यं वादायाचार्यैरलङ्कार-भेदस्योक्तत्वात्। अत्रापि अलङ्कारान्तरस्वीकारे बाधकाभावादिति।

## उत्प्रेक्षाऽलङ्कारः

**मम्मटमतम्–**

तत्रभवान् मम्मट उत्प्रेक्षालङ्कारम्—

**''सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्''।**

इति लक्षितवान्। अस्यायमर्थः — अथ वाच्यसाधर्म्यमूलकोपमा-नन्वयोपमेयोपमालङ्कारनिरूपणानन्तरं व्यङ्ग्यसाधर्म्येषु अलङ्कारेषु निरूपणीयेषु चमत्कारातिशयाधायकत्वेन प्राधान्यादादौ उत्प्रेक्षा निरूप्यते। उत्प्रेक्षा च उत्कटा प्रकृष्टस्योपमानस्य ईक्षा ज्ञानमुत्प्रेक्षा। सम्भावनं चोत्कटकोटिकः सन्देहः। समेन उपमानेन। समयति समं करोति प्रकृतमुपमेयमात्मसमं करोतीति सममुपमानम्। समेनेत्यत्र सहयोगे तृतीया (विनापि तद्योगे तृतीयेत्युक्तेः वृद्धो यूनेति ज्ञापकात्) एकरूपतयेति शेषः। एवञ्च प्रकृतस्य उपमेयस्य समेन उपमानेन सह एकरूपतया (तादात्म्येन) यत् सम्भावनं सा उत्प्रेक्षाऽलङ्कृतिः। उत्कटोपमानकोटिकं प्रकृतविषयकं संशयज्ञानमुत्प्रेक्षा। अथवा उत्कटैककोटिकः संशयः सम्भावनम्। संशये हि कोटिद्वयं भवति। यथा अयं स्थाणुर्वा पुरुषो वेति। अत्र स्थाणोर्विधेयरूपा एका कोटिः पुरुषविधेयरूपा च द्वितीया कोटिः। यस्मिन् संशये एकस्याः कोटेः निश्चितप्रायत्वं (उत्कटत्वं) स एव संशयः सम्भावनम्। सादृश्यमूलकमेव सम्भावनमलङ्कारोऽन्यथा तद्वस्तुमात्रम्। इयमुत्प्रेक्षा इव शब्दसमभिव्याहारेऽपि भवति, यदोपमानांशः लोकादसिद्धः कविकल्पितो भवति। यत्रोपमानांशः लोकसिद्धो भवति तत्र तूपमैव। रूपके तत्त्वतस्तादात्म्यारोपोऽत्र सम्भावनमात्रम्। ससन्देहे समकोटिकः संशयः, अत्र तूपमानकोटिक इति भेदः। अत्र प्रकरणप्राप्तम् ''अलङ्कारत्वे सति'' इत्यपि विशेषणं वर्तत एव, अतो चमत्कारिसम्भावनमेवोत्प्रेक्षा नाचमत्कारि। यथा— ''नूनमनेन स्थाणुना भवितव्यम्'' इति।

सा चोत्प्रेक्षाऽनेकविधा— हेतु–फल–स्वरूपसम्भावनभेदात्। तत्र स्वरूपोत्प्रेक्षा जाति–गुण–क्रिया–द्रव्याणामभावस्य च सम्भावनात् पञ्चविधा। एवं हेतु–फलोत्प्रेक्षेऽपि जातिगुणादिसम्भावनभेदात् पञ्चविधे। (अत्रान्ये आचार्याः दण्डिप्रभृतयः उत्प्रेक्षाद्योतकान् शब्दान् परिगणयामासुः। तथा हि—

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः।।** इति।

(काव्यादर्शः, २/२३४)

एषां शब्दानां सद्भावे सति यत्रोत्प्रेक्षासामग्री तत्रोत्प्रेक्षा वाच्या। यत्रैषा शब्दानामभावेऽप्युत्प्रेक्षासामग्री तत्र प्रतीयमानेति द्विधा।

तत्र वाच्याया हेतूत्प्रेक्षाया उदाहरणम्—

**उन्मेषं यो मम न सहते जातिवैरीनिशाया-**
**मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।**
**नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-**
**ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः।।**

इवशब्दस्योत्प्रेक्षाद्योतकत्वे उदाहरणम्—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता।।**

अत्र पूर्वार्धमेवोदाहरणम्। अत्रोपमेयं व्यापनमनुपात्तम्। तद् व्यापनमर्थात् तमः कर्तृकाङ्गकर्मकव्यापनं "भ्रमातिशयकारकत्वं सकलवस्तुसान्द्रमलिनीकरणत्वादिनिमित्तेन लेपनतया सम्भावितम्। एवं नभः कर्तृकाञ्जनकर्मकाधःप्रसरणं सकलवस्तुसान्द्रमलिनीकरणत्वनिमित्तेन वर्षणरूपतया सम्भावितमिति। एवञ्चानुपात्तविषया। क्वचिदुपात्तविषया यथा–

**"धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्"।**

(कुवलयानन्दः, उत्प्रेक्षा ३२)

अत्र रात्रौ सर्वत्र व्याप्तस्य तमसः नैल्यदृष्टिप्रतिरोधकत्वादिधर्मनिमित्तेन सद्योविमुक्तानां सर्वदेशस्थितानां कोकीनां हृदि प्रज्वलिष्यद् विरहानलधूमस्तोमतादात्म्यसम्भावनरूपोत्प्रेक्षा "तमसः" विषयस्योपादाना-दुपात्तविषयेति दीक्षितेन दर्शितत्वात्।

(कु०न०, का ३३)

## पण्डितराजमतम्

पण्डितराजः— तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बधनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षेति।

(र०गं०२ आ०, पृ०६४३)

उत्प्रेक्षां लक्षयित्वाह— द्विविधायाः धर्मिधर्मोत्प्रेक्षायाश्च सङ्ग्रहाय लक्षणवाक्ये लक्षणद्वयं विवक्षितम्। तत्र धर्म्युत्प्रेक्षायां तादात्म्यं संसर्गः, धर्मोत्प्रेक्षायां च तादात्म्येतरः समवायादिः संसर्गो भवति। एवञ्चेत्थं लक्षणं सम्पन्नम्— "तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितद्धर्मसम्बन्धनिमित्तकं तत्त्वेन सम्भावनमुत्प्रेक्षेत्येकं लक्षणम्। तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतत्समानाधिकरणतद्धर्म-सम्बन्धनिमित्तकं तद्वत्त्वेन सम्भावनमुत्प्रेक्षेति द्वितीयम्।

सा च वाच्या प्रतीयमानेति भेदाद् द्विविधा। द्विविधाऽपि स्वरूपहेतुफलोत्प्रेक्षाभेदात् त्रिविधेति षड्विधा। धर्मिधर्मभेदेन पुन: द्विधेति द्वादशविधोत्प्रेक्षा निष्पन्ना। एता: सर्वा: क्वचिन्निष्पन्नशरीरा, क्वचिच्च निष्पाद्यशरीरा, क्वचिदुपात्तविषया क्वचिदनुपात्तविषयेत्यनल्पविकल्पा: सम्भवन्ति। इत्थमुत्प्रेक्षां निरूप्योदाहृत्य च पण्डितराज: शाब्दबोधनिरूपणप्रस्तावे (पृ० ६७६) प्राचामर्वाचां च मतभेदमुपन्यस्तवान्। तत्र प्राचीना: सर्वत्राभेदेनैव सम्बन्धेनोपमानस्योपमेये उत्प्रेक्षणं कुर्वन्ति न सम्बन्धान्तरेण। तत्र धर्मिस्वरूपोत्प्रेक्षायां "मुखं चन्द्रं मन्ये" इत्यत्र निपातातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याऽव्युत्पन्नत्वात्, विषये मुखे विषयिण: चन्द्रस्याभेदेनैवोत्प्रेक्षा स्फुटं प्रतीयते। धर्मस्वरूपोत्प्रेक्षाम्—

**अस्यां मुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैलशीली।**
**नानारदाह्लादिमुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्य:।।**

(नैष०, ७/९५)

इत्यादौ मुनीनां धर्मान्तरे विषये दमयन्तीविषयकमोहस्य विषयिणोऽभेदेनैवोत्प्रेक्षा। उभे अप्यत्रोदाहृतोत्प्रेक्षे उपात्तविषये। परं क्वचिदुत्प्रेक्षायां विषयिणा विषयस्य निगरणमपि भवति, तत्रानुपात्तविषयोत्प्रेक्षा जायते। यथा—

**"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ:"।** इत्यादौ।

अत्र प्रथमान्तार्थे तम:पदार्थे कर्तरि अङ्गकर्मकलेपनकर्तृत्वस्योत्प्रेक्षा न युक्ता, न वा नभ:पदार्थे प्रथमान्तार्थे कर्तरि अञ्जनकर्मकवर्षणोत्प्रेक्षा युक्ता। कर्तुराख्यातार्थे विशेषणत्वेन पदार्थैकदेशत्वात्। पदार्थ: पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति सिद्धान्तात्। एवं लेपनवर्षणकर्तुरभेदेन संसर्गेण प्रथमान्तार्थकर्तरि तम: नभ: पदार्थेऽपि नोत्प्रेक्षा। लेपनवर्षणकर्तु: क्रियाविशेषणत्वेन प्राधान्यात्।

अतस्तमोव्यापने विषये तम: कर्तृकाङ्गकर्मकलेपनस्य नभ: कर्तृकाञ्जनकर्मकवर्षणस्याभेदेन संसर्गेणोत्प्रेक्षा विषयस्य तम:कर्तृकव्यापनस्य विषयिणा लेपनेन निगीर्णत्वादनुपात्तविषयेयम्। निमित्तधर्मश्च श्यामीकारकत्वादिरनुक्त एव। एवम्–

**"उन्मेषं यो मम न सहते जातिवैरी निशायां**
**लग्ना मन्ये ललिततनु ते पादयो: पादलक्ष्मी:"।**

इत्यत्रापि हेतूत्प्रेक्षायां लक्ष्मीरूपे विषये न केवलं हर्षरूपं हेतुमात्रमुत्प्रेक्ष्यते। अपि तु पादाधिकरणे पद्मलक्ष्मीकर्तृके स्वाभाविकविषये हर्षहेतुकस्य पादाधिकरणकस्य पद्मलक्ष्मीकर्तृकस्य लग्नस्य विषयिणो भेदेनोत्प्रेक्षणम्।

अत एव मम्मटभट्टैरुक्तम्- "अत्र व्यापनादिलेपनादिरूपतया सम्भावितम्" इति। एवं च सिद्धं मम्मटमते सर्वत्राभेदेन संसर्गेणोत्प्रेक्षणं भवतीति। तत्र पण्डितराजः स्वकीयां मीमांसां प्रस्तौति यत्, सर्वत्राभेदेनैव संसर्गेणान्वये नास्ति किमपि बीजम्। भेदसम्बन्धेनाप्युत्प्रेक्षणस्यावलोकनात्। तथा हि— "अस्यां मुनीनामपि मोहमूहे" इत्यादौ विषयेषु मुनिषु मोहरूपविषयिणः समवायसम्बन्धेनोत्प्रेक्षितत्वात्। मुनीनां धर्मविशेषं विषये दमयन्तीविषयकमोहस्य विषयिणोऽभेदेनोत्प्रेक्षायाः प्रतिपादयितुं शक्यत्वात्। अतः "लिम्पतीव तमोऽङ्गानि" इत्यादावपि तम आदिषु विषयेषु लेपनादिकर्तृकत्वस्य विषयिणः समवायेनैवोत्प्रेक्षेति युक्तम्। न च प्रथमान्तार्थस्य कर्तुः आख्यातार्थे विशेषणत्वेनैकदेशत्वात्तत्रान्वये "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति न्यायविरोधः। धातोः फलमात्रमर्थः, तदनुकूलो व्यापारः, कर्तृत्वं तिङर्थः। इत्थं तिङर्थो व्यापारः आश्रयतासम्बन्धेन प्रथमान्तार्थे कर्तरि अन्वेति- इति प्रथमान्तार्थस्य कर्तुः प्राधान्यात् पदार्थैकदेशाभावात्। न चैवं सति यास्कसिद्धान्तस्य "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि— इत्यस्य विरोध इति शङ्क्यम्, सत्त्वप्रधानानि नामानि" इत्युत्तरवाक्यस्य प्रधानशब्दस्य अभिधेयार्थकत्वात् पूर्ववाक्यस्य प्रधानशब्दस्यापि अभिधेयार्थपरत्वस्य युक्तत्वात्। एवमाख्यातपदं तिङ्परमाश्रित्य "भावार्थकस्तिङ्" इत्यर्थकरणेन विरोधाभावात्। भावश्च व्यापारः।

न चैवं धातोः सकर्मकाकर्मकत्वव्यवस्था न सिद्ध्येत्, धातुवाच्यफलव्यापारयोरेकनिष्ठतायामकर्मकत्वम्, भिन्नाधिकरणतायां सकर्मकत्वस्य स्वीकारात्, तव मते व्यापारस्य धातुवाच्यत्वाभावादिति वाच्यम्। धातोः फलमात्रार्थकत्वेऽपि आख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्" आख्यातार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वमिति रीत्या सकर्मकाकर्मकयोर्व्यवस्थितत्वात्।

न चैवं कृत्प्रत्ययार्थस्यापि भावस्य प्रथमान्तार्थे आश्रयतासंसर्गेणान्वयमाश्रित्य लेपनानुकूलव्यापाराश्रयस्तम इत्यर्थे "तमो लेपः" इत्यस्यापि भावघञन्तस्याप्यापत्तिरिति वाच्यम्। "नामार्थयोरभेदातिरिक्त-सम्बन्धेनान्वयस्याऽव्युत्पन्नत्वाद् घञर्थस्य भावस्य प्रथमान्तार्थे आश्रयतासम्बन्धेनान्वयासम्भवात्। न च तिङो व्यापारार्थकत्वोपपादनाय "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा०सू० ३/४/६९) इत्यत्र "कर्तरि कृत्"

(पा०सू० ३/४/६७) इत्यतोऽनुवृत्तस्य "कर्तरि" इत्यस्य लक्षणया "कर्तृत्वे" इत्यर्थः स्वीकरणीयः। तथा च 'कर्तरि कृद्' इत्यत्राऽपि कर्तृत्वे इत्येवार्थः स्वीकरणीयः अर्थानुवृत्तिसामर्थ्यात्। एवं सति कृत्प्रत्ययानां तृजादीनामपि व्यापारार्थकत्वापत्तिरिति वाच्यम्। "कर्तरि कृत्" इत्यत्र कर्त्रर्थकस्यापि "कर्तरि" इति पदस्य शब्दानुवृत्तिसामर्थ्याद् लः कर्मणि च इत्यादौ कर्तृत्वाऽर्थेऽपि क्षतिविरहात्। 'कर्तरि कृत्' इत्यत्र कर्तरि इति पदस्य कृत्याश्रयरूपार्थस्वीकारे एव "भावे" (पा०सू० ३/३/१८) इति सूत्रस्य सार्थकत्वम्, कर्तृत्वार्थस्वीकारे तेनैव भावेऽर्थे लब्धे पुनः "भावे" (पा०सू०३/३/१८) इति सूत्रविधानं व्यर्थं स्यात् "लः कर्मणि चे"ति सूत्रेऽनुवृत्तस्य "कर्तरि" इति पदस्य शब्दानुवृत्तिमाश्रित्य "कर्तृत्वे" इत्यर्थकरणेऽपि क्षतिविरहात्।

अत्र शब्दानुवृत्तिपक्षस्वीकारे शब्दस्यार्थबोधाय आकाङ्क्षाज्ञानादिरर्थबोधसामग्री पुनरपेक्षिता भवतीति गौरवम्, अर्थानुवृत्तिपक्षे पूर्वसिद्धस्यार्थस्यैव तत्रापि ग्रहणे गौरवाभावात्, अर्थानुवृत्तिपक्ष एव श्रेयान् इत्याशङ्कां मनसि निधाय पक्षान्तरमुपन्यस्यन्नाह— यद्वा धातोः फलव्यापारावर्थौ स्याताम्। तिङश्चाश्रयोऽर्थः स्यात्, परं यथा "देवदत्तः पचमानः" इत्यादौ कृदन्तस्थले प्रथमान्तार्थे देवदत्ते कृदर्थस्य कर्तुरभेदेन सम्बन्धेनान्वयस्तथैव देवदत्तः पचतीत्यादावपि प्रथमान्तार्थे देवदत्ते तिङर्थस्य कर्तुरभेदेन संसर्गेणाऽन्वयो युक्तः। "सामान्यविशेषयोरभेदान्वयः" इति सिद्धान्तात्, न तु धात्वर्थव्यापारे भेद-(वृत्तिता)सम्बन्धेन। भेदसम्बन्धेन तिङर्थस्याश्रयस्य व्यापारेऽन्वये सति प्रथमान्तार्थ उद्देश्यम्, तिङर्थो विधेयमिति सार्वजनीनानुभवविषयस्योद्देश्यविधेयभावस्य भङ्गः स्यात्। "प्रकृतिप्रत्ययौ" सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति सामान्यनियमस्याप्यपलापः स्यात्। धात्वर्थव्यापारेण विशेषिते तिङर्थे तु नियमानुसरणमपि स्यात्। न चैवं तिङर्थस्याश्रयस्य प्राधान्ये "भावप्रधानमाख्यात"मिति यास्कसिद्धान्तविरोध इति वाच्यम्। आख्यातपदं धातुत्वार्थकमङ्गीकृत्य भावनार्थको धातुरित्यर्थस्वीकारे विरोधाभावात्। नन्वेवं व्यापारमुख्यविशेष्यकशाब्दबोधवादिनां वैयाकरणानां मतविरोधदोषो वज्रलेपायितः स्यात्, आलङ्कारिकाणां स्वतन्त्रसिद्धान्ततया व्याकरणविरोधस्यादूषणत्वात्।

इत्थं "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" इत्यादावपि प्रथमान्तार्थे तमसि नभसि चाङ्गकर्मकलेपनकर्तृत्वस्य अञ्जनकर्मकवर्षणकर्तृत्वस्य चाश्रयतासम्बन्धेन आश्रयतानियामकसमवायसम्बन्धेन वा भेदसम्बन्धेनोत्प्रेक्षा। अथवा

आख्यातार्थस्य कर्तुः प्रथमान्तार्थे तमसि नभसि चाभेदेन सम्बन्धेनोत्प्रेक्षा। न तु लेपनेन निगीर्णे तमसः व्यापने विषये लेपनस्योत्प्रेक्षा। सर्वानुभवसिद्धाया इवार्थस्य विधेयताया भङ्गापत्तेः। (अयं भावः— अत्र विषयमुद्दिश्येवार्थसम्भावनाविषयिणो लेपनादेर्विधेयता प्रतीयते, सा च विषयस्य निगीर्णत्वान्न सिद्ध्येत्। यदि निगीर्णेऽपि विषये उद्देश्यविधेयभावोऽभ्युपेयते तदोद्देश्यविधेयभावरहितात् "तमः कर्तृकलेपनमिव" इति वाक्यादपि उत्प्रेक्षायाः प्रतीत्यापत्तेश्च।

ननु तमसि लेपनकर्तृत्वस्योत्प्रेक्षायां किं निमित्तम्? न च तावत् तमो व्यापनं, तस्यानुपात्तत्वात्। व्यापनं च तदा निमित्तं स्याद्, यदा लेपनं कर्तृत्वसमानाधिकरणविषयवृत्तिः स्यात्। न च स्यात्, लेपन कर्तृत्वाधिकरणे चेतने व्यापनस्यावृत्तितया सामानाधिकरण्यविरहात्। लेपनव्यापनयोर्मिथो भेदे आरोपिते सामानाधिकरण्यं स्यादपि। अतो विषयिणा लेपनेन विषयस्य व्यापनस्य निगरणमावश्यकम्, अन्यथाऽभेदो न सिद्ध्येत। अभेदमन्तरा निमित्तता न स्यात्। निमित्ततामन्तरोत्प्रेक्षा न सम्भूयादिति। अतो नवीनैरपि विषयिणा लेपनेन विषयस्य व्यापनस्य निगरणमवश्यं स्वीकर्तव्यम्।

एवं सति यदि प्राचीना उत्प्रेक्षायां विषयिणा विषयस्य निगरणं स्वीकुर्वन्ति तदा का क्षतिः? द्वयोरपि समानरूपत्वादिति चेन्न, नवीनाः केवलं निमितत्ता सम्पादनाय विषयिणा विषयस्य निगीर्णमङ्गीकुर्वन्ति। प्राचीनास्तु विषयिणा विषयनिगीर्णत्वादिमामनुपात्तविषयामध्यवसानमूलामुत्प्रेक्षां स्वीकुर्वन्ति, इति भेदात्। यदि विषयिणा लेपनादिना विषयस्य व्यापनादे (निमित्ततासम्पादनाय, व्यापनादौ लेपनाभेदप्रतिपत्तये) निगीर्णत्वादनुपात्तविषयाध्यवसानमूला चोत्प्रेक्षा स्वीक्रियेत, तदा "लोकान् सन्ति खलो विषम्" इति रूपकेऽपि निमित्ततासम्पत्तये विषयस्य खलगतदुःखदानादेर्विषयिणा विषयगतहननेन निगीर्णत्वाद्रूपकमपि अनुपात्तविषयमध्यवसानमूलं च स्वीक्रियताम्। परं प्राचीना, अत उत्प्रेक्षायामपि निमित्तानुपादानादनुपात्तविषयत्वमध्यवसानमूलत्वं च नाङ्गीकरणीयम्। अनुपात्ते निमितांशे तु अध्यवसानमूलातिशयोक्तिरेव।

एवं हेतूत्प्रेक्षायामपि– "उन्मेषं यो मम न सहते, लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः" इत्यादौ लक्ष्मीरूपे विषये लग्नहेतुत्वेन हर्ष उत्प्रेक्ष्यते, तत्र निमित्तं हर्षहेतुकपादलग्नम्, तच्च पादगतस्वाभाविकशोभाया लग्नस्याभेदाध्यवसानेनैव सम्पद्यतेऽतोऽत्रापि निमित्तांशेऽतिशयोक्तिरेव। एवम्—

**सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।**
**अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्।।**

इत्यादावपि नूपुरे मौनहेतुकं वियोगजन्यदुःखं समवायेनोत्प्रेक्ष्यते। तत्र निमित्त-निश्चलत्वहेतुकं मौनम्। तच्च वियोगजन्यदुःखतादात्म्येनाध्यवसितम्।

इत्थमत्रापि निमित्तांशेऽतिशयोक्तिः। अत्र निश्चलत्वनिमित्तकनिःशब्दत्वे विषये विश्लेषदुःखनिमित्तकमौनमभेदेन नोत्प्रेक्ष्यते। इवशब्देनान्वितस्यैवोत्प्रेक्षा स्वभावसिद्धा वर्तते। अतो वियोगदुःखस्यैवोत्प्रेक्षा। अत्रेवपदार्थस्य विश्लेषदुःखनिमित्तकमौनेऽन्वयस्वीकारेऽपि मौनमुत्प्रेक्षितुं न शक्यम्। विषयस्य निगीर्णत्वात्। उत्प्रेक्षितस्य विधेयताभङ्गापत्तेः।

न च निगीर्णं निश्चलत्वनिमित्तकमशब्दत्वं विषयमुद्दिश्य मौनस्य विधेयताया स्वीकारे उत्प्रेक्षितस्य विधेयतासिद्धौ दोषाभाव इति वाच्यम्, निमित्तान्तरानुपादानात्। यद्यप्येककालप्रभवत्वादिसाधारणधर्मो निमित्तमस्ति तथापि तन्न चमत्कारि, अतो यथेदं साधर्म्यमचमत्कारित्वान्नोपमाप्रयोजकं तथैवोत्प्रेक्षाप्रयोजकमपि नेति। एवं फलोत्प्रेक्षायाम्—

**चोलस्य य भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः।**
**अद्यापि किं वाऽनुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि।।**

(र०गं०२, पृ० ६७६)

इत्यादावपि कण्टकिषु वनान्तेषु विषयेषु भालत्वग्विपाटननिमित्तं ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते।

ननु कण्टकाकीर्णवनप्रदेशकर्तृकनिष्फलभालत्वग्विपाटने विषये ललाटाक्षरदर्शनफलकभालत्वग्विपाटनस्य विषयिणो भेदेनोत्प्रेक्षेति ज्ञेयम्। विषयस्य निगीर्णत्वादिति दिक्। एवमभेदेनोत्प्रेक्षावादिनो मम्मटभट्टा अनेन निरस्ताः।

## प्राचीनमतम्

"लिम्पतीव तमोङ्गानि" इत्यादिवर्षासमये कृष्णप्रदोषवर्णने मृच्छकटिकस्य चतुर्थाङ्कस्य पद्यमिदम्। अत्र दण्ड्यलङ्कारसर्वस्वकारा-लङ्कारकौस्तुभकारप्रभृतयोऽनेके आचार्या अलङ्कारविमर्शं कृतवन्तः। तत्र केचन इवशब्देनात्रोपमामङ्गीकुर्वन्ति। तन्मतं निराकुर्वन्नाह दण्डी—

**"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः"।**
**इतीदमपि भूयिष्ठमुत्प्रेक्षा लक्षणान्वितम्।।**

(काव्यादर्शः, २/२२६)।।

अयं भावः— केचनाचार्याः "मन्ये शङ्के ध्रुवमित्यादीन्" शब्दानुत्प्रेक्षावाचकानङ्गीकुर्वन्ति। इव शब्दमुपमावाचकमेवेति, तेषां

मतेऽत्रोपमेति प्रवादः। दण्डी अत्रत्यमिवशब्दं सम्भावनावृत्तिकं स्वीकृत्योत्प्रेक्षामङ्गीकरोति। इवशब्दः सम्भावनायां वर्तते एव, तथा हि— "दूरे तिष्ठन् देवदत्त इवाभाति" इत्यत्र सम्भावनार्थक एव इवशब्दः।

पद्येऽस्मिन् तमसो व्यापनं लेपनतया (तमसः) अधःप्रसरणं च वर्षणतया सम्भावितम्, इत्युत्प्रेक्षाऽलङ्कारः। कियन्तोऽत्र इवशब्दमाकर्ण्योपमां प्रतिपादयन्ति, ते भ्रान्ताः सन्ति। यतो हि– "न वै तिङन्तेनोपमानमस्ति" इति। (भा०वा०३/१/७) महर्षेराप्तस्य पतञ्जलेरुक्तिरनुल्लङ्घनीया वर्तते। तदुल्लङ्घनकर्त्तारो वस्तुतो भ्रान्ताः सन्ति। उपमानोपमेयत्वं च साधर्म्यमपेक्ष्यते। अत्र तमसः लिम्पतेश्चोभयानुगतः समानधर्मो न लक्ष्यते साधर्म्यमन्तरोपमा न निष्पद्यते। यदि लिम्पतिपदार्थो लेपनमेवात्र साधारणधर्मः स्वीक्रियते तदा लेपनक्रियाश्रयः धर्मी कोऽत्र वर्तते योऽत्रोपमानतयाऽङ्गीक्रियेत। "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कसिद्धान्तेन लेपनमेव लिम्पतिपदार्थः। स च यदि धर्मस्तदा कोऽन्यो लिम्पतिपदार्थो यो धर्मितां भजेत्, लेपनमेव समानधर्मः, उपमानं चेत्युन्मत्तप्रलाप एव।

अत्र तिङर्थः कर्ता धर्मी" उपमानम्, धात्वर्थो लेपनं साधर्म्यम्, तम उपमेयम्, (लेपनकर्तृलेपनसदृशं तमो व्यापनमिति रीत्या) अत्रोपमा पर्यवस्यति, इत्यपि न सुवचम्, धात्वर्थव्यापारे विशेषणीभूतः कर्ता स्वनिष्ठविशेषणतया निरूपितविशेष्यताश्रया क्रियाया विशेषणतया बोधे व्यग्रः सन् स्वनिष्ठविशेष्यतानिरूपितविशेषणतयाश्रयस्यान्यस्यान्वयबोधे न क्षमः। एतन्मञ्जूषायां नागेशभट्टैरप्युक्तम्। "एकत्र विशेषणत्वेन गृहीतशक्तिकस्य ज्ञातस्य वा विशेषणत्वायोगः। अत एव "राज्ञः पुरुषोऽश्वश्चेति राजपुरुषोऽश्वश्चेति न" इति। नैयायिकपद्धति प्रथमान्तार्थमुख्यविशेष्यकबोधमनुसृत्य लिम्पतिपदस्य "लेपनानुकूलकृतिमान्" इत्यर्थं स्वीकृत्यापि "लेपनकर्तृसदृशं तमः" इत्युपमां स्वीकर्तुं नालम्। यतो हि तत "अङ्गानि" इति पदमुपमेयगतलेपने सम्बद्धं न भवति। अतोऽङ्गकर्मकं लेपनं साधर्म्यं नावलम्बते। कश्चनान्यः साधारणो धर्मोऽन्वेषणीयः स्यात्, तदनुपलम्भान्नोपमेति। अथ साधर्म्यानुपलम्भेऽस्तु धर्मलुप्ता लुप्तोपमेत्युक्तम्, यतो हि यथा– इन्दुरिव ते वक्त्रम्" इत्यादौ साधर्म्यवाचकशब्दानुपादानेऽपि कान्तिमत्तया प्रसिद्धस्येन्दोरुपमानतया कान्तिः साधारणो धर्मः प्रतीयते। तथाऽत्र लिम्पति-पदात् लेपादन्यत् औपम्यनिर्वाहकं किमपि साधर्म्यं प्रतीयते लेपनञ्चोपमानमेवेति। तस्माद् उपश्लेषणार्थकस्य लिप् धातोर्लेपनमर्थः, तमः कर्ता, अङ्गानि च कर्म इति केनचित् कविनिबद्धेन वक्त्रा तमोव्यापने तमः

कर्तृकमङ्गकर्मकं लेपनमुत्प्रेक्ष्यते, इत्येव स्वीकरणीयम्। इत्यत्र व्यापनं विषयो लेपनं विषयीति। इवशब्दोऽप्यस्ति सम्भावनार्थक इत्युत्प्रेक्षावाचकोऽपि न केवलमुपमावाचक इति।

अलङ्कारसर्वस्वकारः क्रियोत्प्रेक्षायां "लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः"। इत्युदाहृत्य अत्र लेपनवर्षणक्रिये तमो नभो गतत्वेनोत्प्रेक्ष्येते इत्युदाजहार (अ०स०, पृ० १९५)।

अत्र विमर्शिनीकारः— तमोगतत्वेन प्रतीकमादायाह— तमोगतव्यापनादिधर्मनिगरणेनेत्यर्थः। अत्र हि तमसो धर्मिणोऽन्यधर्मधर्मित्वं निगीर्यान्यधर्मधर्मित्वमवस्थापितमित्यग्रे वक्ष्याम इति" (पृ० १९६)।

एवं रुय्यकरीत्या तमसि लेपनक्रियाकर्तृत्वोत्प्रेक्षा प्रतीयते। सुस्पष्टमुक्तमप्यग्रे (पृ० २०६) स्वरूपोत्प्रेक्षाया भेदनिरूपणावसरे यत्र धर्म एव धर्मिगतत्वेनोत्प्रेक्ष्यते तत्रापि निमित्तस्योपादानानुपादानाभ्यां द्वैविध्यम्। तत्रोपादानस्योदाहरणम्— "लिम्पतीव तमोङ्गानि" इत्यादि। अत्र तमोगतत्वेन लेपनक्रियाःकर्तृत्वोत्प्रेक्षायां व्यापनादिनिमित्तं गम्यमानम्" इति व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्। न च विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्। तस्माद् यथोक्तमेव साधु इति। एवमक्षरस्वारस्येन स्फुटं प्रतीयते यत् सर्वस्वकारः तमोधर्मिणि लेपनक्रियाकर्तृत्वोत्प्रेक्षामङ्गीकरोति।

परमत्र विमर्शिनीकारो जयरथः सयुक्तिकं तथा व्याख्याति यथा व्यापनादौ विषये लेपनादेरुत्प्रेक्षा प्रतीतिपथमवतरति। तथा हि "लेपनक्रियाकर्तृत्वोत्प्रेक्षायाम्" इत्यत्र "आशङ्कितायाम्" इति अर्थादापूरयति। यतो हि तमसि लेपनक्रियाकर्तृत्वोत्प्रेक्षायां "तमो लेपनम्" इवेति प्रतीतिः स्यात्। न च तथा प्रतीयतेऽतो व्यापनादौ तूत्प्रेक्षाविषये" इत्याद्युक्तम्। तत्र व्यापनादौ लेपनाद्युत्प्रेक्षायां निमित्तं "तिरोधायकत्वादि" अनुपात्तमन्वेष्यं भवति। एवं च "तमोरूपे धर्मिणि व्यापनादिधर्मं निगीर्य लेपनक्रियाकर्तृत्वरूपो धर्मः उत्प्रेक्षितः" इत्यर्थो निष्पद्यते। श्रीमम्मटेनाप्युक्तम्— "व्यापनादिलेपनादिरूपतया सम्भावितम्" इति। यच्चोक्तं मूले "विषयस्य गम्यमानत्वं न युक्तमिति। तस्यायं भावः— निगीर्यमाणस्य व्यापनादिधर्मस्योत्प्रेक्षमाणस्य लेपनादिधर्मस्य च भित्तीभूतो धर्मी "तमः" विषयः तस्यानुपादानं न युक्तम्। निगीर्यमाणस्य व्यापनादेरनुपादानं न युक्तमिति न व्याख्येयम्। यतो हि तस्योपादानानुपादानाभ्यां द्वैविध्यं भवतीति समनन्तरमेवोक्तत्वात्।

अत्र पण्डितविश्वेश्वरः— अलङ्कारकौस्तुभे— "लिम्पतीव तमोऽङ्गानि" इत्यत्रोपमैव कथं नेत्याशङ्क्य प्रथमं जयरामभट्टाचार्योक्तं

समाधानमुपमायामिवेन सह नित्यसमासो भवति "इवेन नित्यसमास:" इत्यनुशासनात्। (वा० ९५१) "नाम्नां समासो युक्तार्थ:" इति कातन्त्रवचनम्। नाम्नामेव समासनिर्णयात् लिम्पतीत्याख्यातस्य नामत्वाभावात् समासासम्भवात्। यत्तु खादत, मोदत एहीडमित्यादौ आख्यातयोरपि समासो दृश्यते। तत्र "आख्यातमाख्यातेन क्रिया सातत्ये" मयूरव्यंसकाद्यन्तर्गतसूत्रम् (सि०कौ०, पृ०१०८४) एहीडदायोऽन्यपदार्थे (१०८५) इति विशेषानुशासनबलात्।

एवमत्र इवशब्दो न सादृश्यार्थ:। अतो "लिम्पतीव" इत्यादौ नोपमेति। इवेन सह समासस्य नित्यत्वाभावेन सादृश्यार्थेनेवेन सह समासो भवतीत्यत्र च प्रमाणाभावेन निराकृत्य समादधे— उपमानाभाव एवात्रोपमाया बाधक:। न तावदत्राख्यातार्थ: कर्ता उपमानं भवितुमर्हति, तस्य भावनायां (व्यापारे) विशेषणत्वात्, स्वप्रतियोगिकत्वसम्बन्धेन इवार्थे सादृश्येऽन्वयाभावात्। अन्यत्र विशेषणस्य जनिताऽन्वयबोधत्वेन निराकाङ्क्षात्वदन्यत्रान्वयायोगात्। एतदुक्तमाचार्यदण्डिना (का०द०, द्वि०प०)।

**कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्।** इति।

अत्र यथा "पृथिव्यामेव गन्ध:" इत्यादौ सप्तम्यर्थे एवकारार्थे चोभयाऽन्वयाकाङ्क्षावशेन पृथिव्यादेर्युगपदेवाऽन्वयो जायते न तु क्रमेण। क्रमेणान्वयाङ्गीकारेण पूर्वान्वयेनैव निराकाङ्क्षतया द्वितीयान्वयो न स्यात्। अत एव "भुक्त्वा व्रजति" इत्यत्र "भोजनकर्ता भोजनान्तरव्रजनकृतिमान् "विशेष्ये विशेषणम्" इति न्यायेन युगपदेव भोजनान्वयोऽङ्गीकृत:। तथाऽपि कर्तु: क्रियायां सादृश्ये च युगपदेवान्वय: स्यात्। प्रकृत्यर्थस्य प्रथमं समुत्थिताऽऽकाङ्क्षत्वात् प्रत्ययार्थेनैवान्वयस्योचितत्वात् पृथिव्यादे: प्रथमं सप्तम्यर्थे एवान्वयाद् युगपदन्वयाभाव: इत्युच्यते तथापि एवकारस्य समभिव्याहृतपदार्थतावच्छेदकाऽवच्छिन्नान्यत्वबोधकत्वात् पृथिवीत्वाऽवच्छिन्नाऽन्यत्वबोधकत्ववद् इवपदस्य कर्तृप्रतियोगिकसादृश्य- बोधकत्वात् कर्तु: सादृश्येऽन्वयस्यानुपपत्ते:।

एवं कर्तु: सादृश्ये विशेषणतयाऽन्वयेऽपि वैयाकरणानां मते व्यापारमुख्यविशेष्यकशाब्दबोधाऽभ्युपगमेन लेपनकर्तृसदृशं तम इति बोधस्यासम्भवात्। इवपदस्य कर्तृप्रतियोगिकसादृश्यार्थबोधकत्वे आख्यातार्थस्य कर्तुरनन्वयापत्तेश्च। "लेपनकर्तृतम: सदृशा लेपनक्रिया" इति बोधोऽपि न। धात्वर्थस्याख्यातार्थे प्रकारतयाऽन्वयाभावात्। "आख्यातार्थस्य कर्तृप्रकारकबोधं प्रति धातुजन्योपस्थिति: कारणम्" इति कार्यकारणभावात्, अत्र यद्यपि इव

समभिव्याहारे धात्वर्थप्रकारकबोधे आख्यातजन्यकर्तृपस्थितेर्हेतुत्वम्। आख्यातार्थकर्तृप्रकारबोधे चेवपदजन्यसादृश्योपस्थितेर्हेतुत्वमिति कल्पनात्। सामान्यकार्यकारणभावबलेन चाख्यातार्थस्य कर्तुः लेपनादिधात्वर्थेऽन्वयाच्च पूर्वोक्तबोधोपपत्तौ बाधकाभावस्तथाप्यत्रैव भिन्नकार्यकारणभावकल्पने गौरवान्मानाभावाच्च।

यदि इवपदस्य लक्षणया कर्तृसादृश्यमर्थः स्वीक्रियेत तदापि लेपनस्य धात्वर्थस्य इवपदार्थैकदेशे कर्तरि विशेषणतयाऽन्वयः, आख्यातार्थकर्तरि च विशेष्यतयेति एकस्यैव पदार्थस्य वारद्वयमन्वयमापद्येत। यदि इवपदार्थस्य लक्षणया समभिव्याहृतधात्वर्थकर्तृसादृश्यमर्थः स्यात्तदोपमानस्यापि इव पदार्थत्वापत्तिः स्यात्। इष्यते चोपमानस्येवपदार्थबहिर्भूतत्वम्। अत इवपदस्य कर्तृसादृश्यमर्थ इति निरस्तम्।

अथ मा भूच्छाब्दिकानां नये तादृशार्थबोधः। नैयायिकानां मते तु स्यादेव तथा हि तन्मते आख्यातार्थः कृतिः। कृतेश्च स्वाश्रयप्रतियोगित्वसम्बन्धेनेवार्थे सादृश्येऽन्वयोऽस्तु। एवं च "लेपनकृत्याश्रयप्रतियोगिकसादृश्यवत्तमः" इति बोधः स्यादिति चेन्न, तेषां मते "आख्यातार्थप्रकारकबोधं प्रति अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावाद् इवार्थे सादृश्ये स्वाश्रयप्रतियोगित्वसम्बन्धेन कृतेरन्वयाभावात्।

यद्यपि "चैत्रो न पचति" इत्यादौ आख्यातार्थस्य कृतेः प्रतियोगितासम्बन्धेन नञर्थेऽभावे, तस्य (अभावस्य) च स्वरूपसम्बन्धेन चैत्रेऽन्वयात् "चैत्रः कृत्यभाववान्" इति बोधदर्शनाद् अव्ययस्थले पूर्वोक्तकार्यकारणभावे सङ्कोच आवश्यकः। एवं कृतेः स्वाश्रयप्रतियोगित्वसम्बन्धेन इवार्थे सादृश्येऽन्वये बाधकाभावस्तथापि इवपदसमभिव्याहृतपदार्थस्य प्रतियोगित्वसम्बन्धेनैवान्वयस्य व्युत्पन्नतयाऽत्र स्वाश्रयप्रतियोगित्वसम्बन्धेनान्वयस्यानुचितत्वात्। इवार्थसादृश्यस्य स्वप्रतियोगिनि अन्वयस्य नियतत्वमिति नियमस्य भङ्गापत्तेश्च।

न च "एकवचनमुत्सर्गतः करिष्यते" इति सिद्धान्ताद् अव्ययेभ्यः प्रथमाविभक्तिरेवोत्पद्यते इति भाष्ये सिद्धान्तितत्वाद् इव शब्दादुपस्थितस्य सोः "अव्ययादाप् सुपः" इति लुकि इवपदं प्रथमान्तम्। तद्बोध्यस्य सादृश्यस्य च प्रथमान्तपदजन्योपस्थितित्वमिति, तत्र आख्यातार्थस्य कृतेः स्वाश्रयप्रतियोगित्वसम्बन्धेनान्वये बाधाभाव इति शङ्क्यम्, इवार्थसादृश्यस्य प्रतियोगितया तमः पदार्थेऽन्वयात् (अन्यत्र विशेषणत्वात्) अन्यविशेषणीभूतत्वाभावात्।

अपि च "लिम्पतीव तमः" इति वाक्यात् लेपनकृत्याश्रयेत्यादिरेव बोधः स्यात्, न तु विवक्षितस्य लेपनकर्तृसादृश्यस्येति दोषाच्च। न चात्र लेपनकृत्याश्रयप्रतियोगिकान्योन्याभावेत्याद्यर्थबोधोऽस्तु इति वाच्यम्, आश्रयत्वस्य संसर्गकोटिप्रविष्टस्यापदार्थत्वात्। कृतिभेदयोरेव पदार्थतया कृतेः प्रतियोगितया भेदान्वयसम्भवेऽपि आश्रयत्वस्य तत्र मानाभावात्। एतादृशस्थले स्वाश्रयप्रतियोगिकत्वसम्बन्धेनान्वयो व्युत्पत्तिवैचित्र्याद् भासते इति वक्तुमशक्यम्, गौरवात्। अस्तु तर्हि धात्वर्थः लेपनमेवोपमानमित्यपि न वक्तुं पार्यते, लेपनक्रियातमसोः सार्धम्याभावात् लेपनमेवोपमानं साधारणधर्मश्चेति वक्तुमशक्यत्वात्। धर्मिधर्मभावस्य च भेदनियतत्वात्। तदुक्तं दण्डिना— **'यदि लेपनमेवेष्टं – अनुन्मत्तो न भाषते'** इति।

तस्मादुपमानस्य दुर्लभत्वान्नात्रोपमा, तदुक्तम्— "केषाञ्चिदुपमा भ्रान्तिः– आप्तभाषितम्"। आप्तो हि महाभाष्यकाराः। तैर्हि उक्तम्— "न वै तिङन्तेनोपमानमस्ति" इति। तथा हि "धातो कर्मणः समानकर्तृकादिच्छायां वा" इति (पा०सू० ३/१/७) भाष्ये आशङ्कितम्— इच्छायां सन् विधीयत इति। अचेतनेषु इच्छाया अभावात् सन् प्रत्ययो न स्यात्। अश्मा लुलुठिष्यते कूलं पिपतिषतीति। तत्र न्यूनतापूरणाय वार्तिकमुपन्यस्तम् "आशङ्कायामचेतनेषूपसंख्यानम्" (वा० १७२९/१३) इति। अनन्तरं पुनराशङ्कितम्— रोगादिनाऽभिभूतोऽपि श्वा जीवितस्य प्रियत्वात् मर्तुं नेच्छति ततः "श्वा मुमूर्षती"ति प्रयोगसिद्धिर्न स्यात्। अत "आशङ्कायाम्" इत्येव पठितव्यम्, अचेतनग्रहणेन नार्थः। इत्याशङ्क्य तद्वार्तिकस्य निरासाय वार्तिकान्तरत्रयमुपन्यस्तम्। "न वा तुल्यकारणत्वादिच्छायां हि प्रवृत्तित उपलब्धिः" इति। यथा कटं चिकीर्षुर्नाघोषयति यदहं कटं करिष्यामि, अपि तु तं सन्नद्धं रज्जुकीलपूलपाणिं च दृष्ट्वा तस्येच्छानुमीयते यदयं कटं चिकीर्षुः। एवं हि कटं विधातुरिच्छा तत्प्रवृत्तितः ज्ञायते। एवं पतनशीलस्य कूलस्य लोष्ठाः शीर्यन्ते, भिदा उपजायते, देशान्तरमुपजायते। एव मुमूर्षवः श्वानः एकान्तशीला प्रसृताक्षाः च भवन्ति। एवमनुमीयन्ते जनैः कूलं पतितुमिच्छति, श्वा मर्तुमिच्छति, वृक्षाद्यारोहणं कुर्वतो बालकान् दृष्ट्वा जना व्यवहरन्त्येव "अयं मर्तुमिच्छति" इति। परमचेतने कूले अश्मनि च इच्छाया सर्वथाऽभावात् कथं प्रवृत्तितोऽपि इच्छाया अनुमानं स्यात्, इच्छानिमित्तस्य कार्यस्याचेतने बाधात्, अचेतने यत् कार्यं तदिच्छानिमित्तकं नेति वार्तिकान्तरमुपन्यस्तम् "उपमानाद्वासिद्धम्" (१७३१/१५) "सर्वस्य वा चेतनावत्त्वात्" (१७३२/१६) तत्रोपमानाद्वा सिद्धमिति वार्तिके "लुलुठिषते इव लुलुठिषते" "पिपतिषति" इव पिपतिषते"।

अर्थाद्यथा लुठनेच्छावतः अवयवशैथिल्यादिकं जायते तथैवाश्मनोऽपि इति उपमानोपमेयभावेन सन् प्रत्ययः स्यादिति शङ्कायामाह महाभाष्यकारः पतञ्जलिः ''न वै तिङन्ते नोपमानमस्ति'' इति। अयं भावः— सिद्धरूपस्यैव वस्तुनः ''इदं तत्'' परामर्शो भवति, तस्यैवोपमानता भवति। क्रिया च साध्यरूपाऽतो निष्पन्ना। तस्याश्च इदं तदिति परामर्शाभावादुपमानता न स्यात्।

अत्र च वस्तुस्वभावः शब्दशक्तिस्वभावो वा नियामकः। तथा हि उपमायां साधारणधर्मोऽपेक्षितः। साधर्म्यमन्तरोपमाया अनिष्पत्तेः। धर्मस्य साधारण्यायोपमानवृत्तित्वमङ्गीकार्यम्। यद्युपमानमेवासिद्धं स्यात्तदा धर्मः कथं तत्र वर्तते। क्रिया च साध्यरूपाऽतोऽनिष्पन्ना, कथं तत्र धर्मस्तिष्ठेत् साधर्म्याभावाच्च कथमुपमेति। यद्यप्यसिद्धेऽपि वस्तुनि प्रागभावप्रतियोगित्वादिधर्मः तिष्ठत्येव तथापि चमत्कारिणः सादृश्यस्य प्रयोजकानां धर्माणामसिद्धे वस्तुन्यभावान्नोपमा।

अपि च न्यूनगुणस्योपमानमधिकगुणो भवति। क्रियायां च न्यूनताया अभावः सर्वस्याः क्रियायाः स्वाश्रये समाप्तत्वात् तस्या उपमानता न युज्यते। तथा ह्युक्तं भर्तृहरिणा—

**येनैव हेतुना हंसः पततीत्यभिधीयते।**
**आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते।।** इति।

अयं भावः— ''येन पतनक्रियारूपेण कारणेन हंसः पतति'' इत्यभिधीयते तस्य पतनक्रियारूपस्य कारणस्य आतौ बलाकायां (शरातिरातिरातिश्च बलाका विषकण्टिका इत्यमरः) समाप्तत्वात् न्यूनत्वाभावात्। अर्थाद् हंसबलाकोभयसम्बन्धिपतनस्याऽधःसंयोगजनकत्वसाम्येन तत्रान्योऽन्यापेक्षयोत्कर्षापकर्षाभावाद् उपमार्थो न विद्यते। तद्वृत्तिधर्माधिकधर्मवत् प्रतियोगिकसादृश्यवर्णनेनैव न्यूनधर्मोत्कर्षलाभाद् उपमा भवति, क्रियायां च तदभावोऽतः क्रिययोर्नोपमेति। भिन्नजातीयक्रिययोः ''भुङ्क्ते इव गच्छति'' इत्याद्योश्च सादृश्याभावान्नोपमा। एवं ''रोदितीव गायति'' ''नृत्यतीव गच्छति'' इत्यादौ तु उत्प्रेक्षाऽस्ति।

इत्थं ''यथा वै श्येनो निपत्यादत्ते'' एवमयं भ्रातृव्यं निपत्यादत्ते'' इत्यादौ यद्धर्मवच्छ्येनकर्तृकमादानं तद्धर्मवदेतत्कर्तृकमादानमिति वाक्यार्थे पर्यवसन्ने यत्तद्भ्यामैक्यमापन्नं तं धर्मं निमित्तीकृत्य श्येनयोगयोः पश्चात् सादृश्यबोध इति न तत्र क्रिययोरुपमानोपमेयभाव इति बोध्यम्।

अतोऽत्रोपमास्वीकारेऽस्य भाष्यस्य विरोधः स्पष्ट एवेति दण्डी व्याचख्यौ। एवं तमःकर्तृकाधोदेशव्यापनलेपनप्रकारकसम्भावनाविषय इति बोधः। अथवा लेपनप्रकारसम्भावनाविषयाधोदेशव्यापनाश्रयस्तम इति बोधः।

प्रथमबोधे इत्यर्थस्य सम्भावनाया विशेष्यतासम्बन्धेन आख्यातार्थेऽन्वयः। लिप्धातोश्च लक्षणयाऽधोदेशव्यापनमर्थः। अभिधया च लेपनमर्थः। एवञ्च तमसः कर्तृत्वसम्बन्धेन धातुलक्ष्येऽधोदेशव्यापनेऽन्वयः। धातोः शक्यार्थस्य प्रकारतासम्बन्धेन इवार्थसम्भावनायामन्वयः। द्वितीयबोधे धातोः शक्यस्य प्रकारतासम्बन्धेन सम्भावनायामन्वयः। सम्भावनायाश्च निरूपितत्वसम्बन्धेन विषयत्वेऽन्वयः। विषयत्वस्य च धातोर्लक्ष्यार्थेऽधोदेशव्यापनेऽन्वयः। अधोदेशव्यापनस्य चाश्रयतासम्बन्धेन तमसि अन्वय इति भेदः।

अत्र विचारणीयम्— एकस्या एव लिम्पतेरभिधया लेपनमर्थः। लक्षणयाऽधोदेशव्यापनमर्थ इति युगपद्वृत्तिद्वयस्वीकारः प्रथमो दोषः। द्वितीयश्च लेपनक्रियाया इवार्थसम्भावनायामन्वये "प्रत्ययानां प्रकृतार्थान्वितस्वार्थबोधकत्वम्" इति नियमव्युत्पत्तिभङ्गदोषः। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति विरोधश्च (का०वार्तिक)। तृतीयश्च इवार्थसम्भावनाया विषयतासम्बन्धेन व्यापनेऽन्वयस्वीकारे धात्वर्थनामार्थयोः साक्षादभेदसम्बन्धेनान्वयस्याव्युत्पन्नतया दोषः। एवञ्च व्युत्पत्तिभङ्गसाम्येऽत्रोपमैव स्वीकार्या। न च "न कलञ्जं भक्षयेत्" इत्यादिवाक्यात् "भक्षयेत्" इत्यत्र विधिलिङः कृतिसाध्यत्वेष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वेति त्रितयमर्थः। कृतिसाध्यत्वेष्टसाधनत्वयोः कलञ्जभक्षणे सत्त्वाद् अनयोर्निषेधस्य बाधाद् बलवदनिष्टाननुबन्धित्वमेव प्रतियोगितासम्बन्धेन नञर्थेऽभावेऽन्वेति। अभावश्च विशेषणतया धात्वर्थेऽन्वेति।

एवञ्च "कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववत्" इति बोधः। तत्र नञर्थस्य विशेषणतया धात्वर्थे भक्षणेऽन्वये दर्शनात् "निपातातिरिक्तनामार्थस्थले एव सा व्युत्पत्तिरि"ति वाच्यम्। "चैत्रो न पचतीत्यादौ आख्यातार्थकृतेर्नञर्थाऽभावेऽन्वयः, अभावस्य चैत्रेऽन्वय इति "पाकानुकूलकृत्यभाववांश्चैत्रः" इति दर्शनात् कृतेः प्रथमान्तपदोपस्थाप्ये एवान्वय" इति नियमे सङ्कोचस्यावश्यकतया कृतेरिवार्थसादृश्येऽन्वये बाधकाभावादत्र (लिम्पतीव तमः) इत्यादौ उपमास्वीकारेऽपि बाधकाभावात्। यद्यप्यन्यत्र सादृश्ये प्रतियोगितयाऽन्वयः। अत्र स्वाश्रयप्रतियोगितयेति गौरवं वर्तते, तथापि लक्षणादिकृतगौरवापेक्षयाऽस्य गौरवस्याकिञ्चित्करत्वात्।

अपि च संसर्गांशगौरवापेक्षया पदार्थांशगौरवमेव बलवद् इत्युत्प्रेक्षास्वीकारे विपरीतं गौरवम्। कृतेः स्वाश्रयप्रतियोगितासम्बन्धेन सादृश्येऽन्वये भावनाविशेष्ये संख्यान्वय इति नियमभङ्गोऽपि न दोषाय। चैत्रो न पचतीत्यादौ ''भावनाविशेष्ये संख्याऽन्वयः'' इति नियमभङ्गस्यापि स्वीकृतत्वात्। एवं व्युत्पत्तिभङ्गसाम्ये उपमैवात्रादर्तव्या। ''न वै तिङन्तेनोपमानमस्ति'' इति महाभाष्यस्य क्रियानिष्ठोपमानतानिरूपित-क्रियानिष्ठोपमेयताया एव निषेधे तात्पर्यस्वीकारे तद्विरोधोऽपि नेति। इव शब्दस्योत्प्रेक्षावाचकत्वं तत्रैव स्वीकरणीयं यत्रोपमाया न सम्भवः, यथा—

**बालेन्दुवक्राणि विकासभावाद् बभुः पलाशान्यतिलोहितानि।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्।।**

इत्यादावुपमाऽङ्गीकारे अन्यदीयनखक्षतैरपि सादृश्यसम्भवेन वसन्तसमागमविशिष्टवनस्थलीसम्बन्धित्त्वस्य विशेषणस्यानपेक्षितत्वात् तदुपादानं व्यर्थं स्यादिति तत्सार्थक्यायोत्प्रेक्षैवेति। आख्यातसमभिव्याहृतेवादिस्थले उत्प्रेक्षैवेति न नियमः। अतोऽत्रोपमास्वीकारेऽपि न बाधकमिति।

अनन्तरं तत्र शाब्दबोधविचारः कृतस्तत् प्राचां मते सर्वत्र विषय-विषयिणोरभेदेन सम्बन्धेनैवोत्प्रेक्षा। नव्यानां मते सर्वत्राभेदेनैवोत्प्रेक्षणे मानाभावः, सम्बन्धान्तरेणापि उत्प्रेक्षा भवत्येवेत्यादिना रसगङ्गाधरोक्तमेव सर्वमुपपादितम्, न किञ्चिदन्यदिति पुनर्लेखनं व्यर्थमिति कृत्वा विरम्यते।

## विमर्शः

इत्थं दण्डिना– ''न वै तिङन्तेनोपमानमस्ति'' इति महाभाष्यमनुसरता उपमा निराकृता, विश्वेश्वरेण पुनः स्वीकृता। महाभाष्यविरोधश्च ''क्रियानिष्ठोपमानतानिरूपितक्रियानिष्ठोपमेयताया एव निषेधे तात्पर्यं स्वीकृत्य वारितः। तत्र विश्वेश्वरस्तदैव सङ्गतः स्याद्यदा महाभाष्यविरोधो वस्तुत उद्धृतः स्यात्। तथा हि ''न वै तिङन्तेनोपमानमस्ति'' इति तृतीयाध्यायस्थभाष्ये कैयटेनोक्तं यत्– ''क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदं तदिति परामर्शविषयवस्तुगोचरत्वाद् उपमानोपमेयभावस्येदं तदिति परामर्शाभावात्'' इति।

अस्यायं भावः — सिद्धमेव वस्तु इदं तदित्यनेन परामृश्यते। इदं तदिति परामर्शविषयस्यैवोपमानोपमेयभावो भवति, क्रिया च साध्यस्वभावा निष्पन्नाऽतस्तत्र इदं तदिति परामर्शाभावान्न तस्या उपमानोपमेयभाव इति। तत्र ''उपमानोपमेयभावस्ये''ति प्रतीकमादायाह नागेशः– ''उपमेयग्रहणं

चिन्त्यम्, क्षत्रियवदधीते इत्यादौ क्रियाया उपमेयत्वस्येष्टत्वादिति बोध्यम्'' (उद्योते ३ अ० १ पा० १ आ०) इत्यनेन प्रतीयते यत्तिङन्तस्य (तिङन्तार्थस्य क्रिययेति यावत्) उपमानता नास्ति, उपमेयताया इष्टत्वात्। विश्वेश्वरश्चोपमेयतां निषेधति ''तेन क्रियाया उपमेयत्वस्यैव निषेधस्याभिमतत्वात्'' (अ०कौ० १९३पृ०) इत्युक्तेः। अतो विश्वेश्वरो नागेशविरूद्धः स्पष्ट एव। अथैतत् समीक्षार्थं पञ्चमाध्यायस्य भाष्यं विविच्यते। ''तेन तुल्यं क्रिया चेद्वतिः'' (पा०सू०५/१/११५) इति सूत्रभाष्यम्— ''इदमयुक्तं वर्तते। किमत्रायुक्तम्। यत् तृतीया समर्थक्रिया चेत्, सा भवति इत्युच्यते, कथं न तृतीयासमर्थं नाम क्रिया स्यात्'' इति।

तत्र कैयटेनोक्तम्– ''तेन तुल्यम्'' इत्यत्र तेनेत्यनेन प्रकृत्यर्थः तुल्यमित्यनेन प्रत्ययार्थो निर्दिष्टः। तत्र प्रथमोपस्थिततत्वात् प्रकृत्यर्थस्य विशेषणं क्रिया चेत् क्रियाया उपमानताप्रतीतिः। परं तेनेत्यत्र तृतीयाविभक्तिः क्रियेत्यत्र प्रथमेति विरुद्धविभक्तिकत्वेन विशेष्यविशेषणभावो न युज्यते। यद्यपि यत्तृतीयासमर्थं क्रिया चेत् सा भवतीति सम्बन्धस्य सम्भवान्न दोषस्तथापि तृतीयासत्त्ववाचिनः प्रातिपदिकाद् विधीयते, क्रिया तु साध्यरूपत्वादसत्त्वभूता। अतस्तयोः विशेष्यविशेषणभावो युक्तः। भोक्तुं पाक इत्यादौ तुमुन् प्रत्ययः पचिवाच्यक्रियापेक्षः। तृतीयादिविभक्तिस्तु पाकादेः सत्त्वरूपाश्रया न क्रियारूपताश्रया। साध्यभूतानां पचतीत्यादिक्रियाणामसत्त्वभूतत्वाद् अप्रातिपदिकत्वाच्च न ताभ्यः तृतीयाद्युत्पत्तिः। कृत्वा कर्तुमित्यादीनां यद्यपि क्रियावाचित्वम्, अत एव ''पञ्चकृत्वः कृत्वा'' इत्यादौ कृत्वसुज् भवति, तथापि अव्ययकृतां कृत्वा कर्तुमित्यादीनामसत्त्ववाचित्वान्न तेभ्यस्तृतीयाद्युत्पत्तिः किन्तु प्रातिपदिकार्थे प्रथमोत्पत्तिः। अतो न क्रियाप्रकृत्यर्थस्य विशेषणम्। यद्यपि ''पञ्चकृत्वः शयितव्यम्'' इत्यत्र कृत्वोऽर्थप्रत्ययदर्शनात् ''शयितव्यादयः'' क्रियावादिनः सन्ति, तथापि न तत्रोपमानोपमेयभावः, असम्भवात्। शयितव्येन ''तुल्यो देवदत्तः'' इति प्रयोगादर्शनात्। क्रियाक्रियावतोऽप्युपमानोपमेयभावो नास्ति, ''शयितव्येन तुल्यः शायकः'' इत्यादौ क्रियाक्रियावतोरत्यन्तभेदात्। एवं ''शयितव्येन तुल्यमासितव्यम्'' इत्यादौ क्रिययोरपि नोपमानोपमेयभावः क्रिययोरत्यन्तभेदात्। एकजातीयक्रियाणामपि नास्त्युपमानोपमेयभावः। ''शयितव्येन तुल्यं शयितव्यम्'' इत्यादौ येनैव कारणेन एकं शयितव्यं तेनैव कारणेनापरमपीति क उपमानोपमेयभावः। उपमानं हि प्रसिद्धगुणक्रियाहेतुकं भवति। यद्यपि ''तैलपाकेन तुल्यो घृतपाकः'' इत्यादौ तृतीयासमर्थस्यापि क्रियावाचित्वसत्त्वात् क्रिययोरुपमानोपमेयभावः प्रतीयते,

तथाप्युपमानोपमेयभावः, उपमानम्, उपमेयः साधर्म्यं चेति त्रयमपेक्षते। एवं सति यदा क्रिया उपमानत्वेन विवक्ष्यते तदा तस्याः समानधर्माश्रयत्वात् न क्रियारूपताऽपि तु सत्त्वरूपता जायतेऽतो न क्रिययोरुपमानोपमेयभावः, इति कैयटग्रन्थानुरोधेन प्रतीयते। भर्तृहरिरप्याह—

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।**
**सत्त्वभावस्तु यस्तस्याः स घनादिनिबन्धनः।।**

(वाक्यपदीयम्)

अपि च—

**सिद्धमेव समानार्थमुपमानं विधीयते।**
**तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते।।** इति।

अतोऽत्र क्रिया न, ''तेनेति'' प्रकृत्यर्थस्य विशेषणमपीत्याशङ्क्य— सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते, ब्राह्मणः क्षत्रियः वैश्यः शूद्रः, इति समादधे भाष्यकारः। एतेषां शब्दानां गुणसमुदाये वृत्तौ प्रमाणमाह—

**तपः श्रुतं च योनिश्च एतद् ब्राह्मणकारकम्।**
**तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः।। इति।**

अयं भावः — एवं ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्रियः इत्यादौ ब्राह्मणाध्ययनेन क्षत्रियाध्ययनस्य तुल्यतासम्भवाद् सामर्थ्याद् ब्राह्मणशब्दस्य ब्राह्मणाध्ययने वृत्तिरुपपद्यतेऽतोऽस्ति तृतीयासमर्थस्य ब्राह्मणेनेत्यस्य क्रियावाचित्वमिति।

पुनश्चाग्रे भाष्ये— क्रियायाः तुल्यविशेषणमिति प्रत्ययार्थमप्युपपादितम्— ''यत्तत्तुल्यक्रिया चेत् सा भवति'' इत्यादिना। तत्र प्रकृत्यर्थप्रत्ययार्थविशेषणयोः किं ज्याय इति प्रश्ने प्रत्ययार्थविशेषणमेव ज्याय इत्याह महाभाष्यकारः क्रियायाः प्रत्ययार्थविशेषणे वतेरव्ययेषु पाठो न कर्तव्यो भवतीति लाघवम्। एवञ्च प्रत्ययार्थविशेषणं क्रिया इत्यनेन क्रियाया उपमेयता सिद्ध्यति। परं कैयटोक्तरीत्या यदा क्रिया उपमानतया विवक्ष्यते तदा साधारणधर्माश्रयत्वात् सा साध्यरूपतां परित्यज्य सत्त्वरूपतामापद्यतेऽतो न क्रियाया उपमानता इति तृतीयाध्यायस्थभाष्यमपि सङ्गच्छते ''न वै तिङन्तेनोपमानमस्ति'' इति। परं तुल्यरीत्या क्रियाया उपमेयताऽपि न सम्भवति, यदा क्रिया उपमेयतया विवक्ष्यते तदा साधर्म्याश्रयत्वेन साध्यरूपतां परित्यज्य सत्त्वरूपतामापद्येत।

कैयटेन यद्यपि क्रियाया उपमानत्वमुपमेयत्वं चोभयं निराकृतम्, परं क्रियायाः प्रत्ययार्थविशेषणमुपपादयता भाष्यकारेणोपमेयता क्रियाया ध्वनिता।

तत् कथं सिद्ध्यति क्रियाया उपमानोपमेयत्वाभावे, तस्मात् कैयटेन "अवश्यापेक्ष्यसाधारणधर्माधारत्वात्" इति या युक्तिः प्रदर्शिता, सा न समीचीना, महाभाष्येण तु तृतीया समर्थः क्रिया भवितुं नार्हति, इत्येवाभिप्रायो लभ्यते। अतो न तेनेत्यस्य प्रकृत्यर्थस्य विशेषणं क्रिया। अतः क्रियाया उपमानता नेत्येवार्थो लभ्यते "न वै तिङन्तेनोपमानमस्ति" इति तृतीयाध्यायस्थसन् विधायकसूत्रस्थभाष्यमपि सङ्गतम्। तत्र तिङन्तपदं क्रियावाचकम्। तदाह नागेशः—

परे तु "अवश्यापेक्ष्यसाधारणधर्माधारत्वात्" इत्यादिव्याख्या न भाष्यानुगुणा, तृतीयासमर्थस्यैव क्रियात्वाभावे हेतुताया भाष्यलाभात्।

तस्मादयमत्र भाष्यार्थः— उपमानोपमेयभावविषयं प्रकृतं तृतीयासमर्थमुपमानम्, क्रिया नेति। तथा हि "न वै तिङन्तेनोपमानमस्ति" इति सन् सूत्रस्थभाष्ये तिङन्तग्रहणस्य क्रियोपलक्षणत्वादसत्त्वभूतशयित-व्याद्यर्थानामुपमानत्वमेव न। एवञ्च तेषां तुल्यादियोगाभावात् तेभ्यस्तृतीयैव न। पाकादिपदार्थस्य तृतीयार्थान्वितस्य सत्त्वमेव, न क्रियात्वं ब्राह्मणादिपदार्थस्य चेति। एतेन यद्विश्वेश्वरेणोक्तं "न वै तिङन्तेनोपमानमस्ति" इति भाष्यस्य क्रियाया उपमेयता निषेधे तात्पर्यम्, यच्च उपमेयत्वेति प्रतीकमादाय व्याख्यातं "क्रियानिष्ठोपमानतानिरूपितोपमेयता क्रियाया नेति" तदुभयं भाष्यविरुद्धत्वादुपेक्ष्यम्।

एवं च "लिम्पती"त्यस्योपमानता निषेधे "लिम्पतीव तमोऽङ्गानि" इत्यादौ नोपमा, तत्रेवशब्दस्य सम्भावनामात्रपरत्वादुत्प्रेक्षैव युक्तेति। रसगङ्गाधरकृता तु अत्रोपमाया आशङ्कापि न कृता। अप्पयदीक्षितोऽपि कुवलयानन्दे "दण्डिनः कर्ता यद्युपमानमित्याद्युदाहृत्य आख्यातस्य कर्तुः क्रियोपसर्जनत्वेन निराकाङ्क्षतया तमसि उपमानतयान्वयाभावादुपमाऽपि निराकृता" इत्याह (पृ० ३४)।

परमवशिष्यते पण्डितराजस्य सम्बन्धान्तरेणोत्प्रेक्षाविषयकः प्रश्नः — तत्तु दण्ड्यादिभिर्न स्वीक्रियते "न्यग्भूतोऽसौ क्रियापदे" इत्युक्तेः। चित्रमीमांसाकृतापि उत्प्रेक्षानिरूपणे प्राचां मतमनुसरता सर्वत्राभेदेनोत्प्रेक्षणमुपादयताऽभिहितम् "यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षेति" (पृ० २६०)।

अत्र झलकीकरः — नैयायिका यद्यपि प्रथमान्तमुख्यविशेष्यकशाब्दबोधवादिनः सन्ति, तेषां मते कर्तुः प्राधान्यात्, कर्तृत्वस्य तमसि, समवायेनोत्प्रेक्षासम्भवात् न सर्वत्राभेदेनैवोत्प्रेक्षणम्,

इत्याशङ्क्य— "व्यापनादेर्लेपनादितया सम्भावनेनैव चमत्कारानुभवात् तमसि लेपनकर्तृत्वोत्प्रेक्षणस्याविवक्षितत्वात् प्रयोजनविरहादिति सम्प्रदायविदः", इति समाधत्ते (का०प्र०वामनी/५८८पृ०)। प्रदीपकारश्च नैयायिकमतेऽपि साधर्म्यप्रतीतेरभावात् तमसि नभसि च क्रमशः लेपनवर्षणकर्तृत्वेनोत्प्रेक्ष्यते। अत्र उत्प्रेक्षेयं संशयविषये भवति, संशयश्च समानधर्मदर्शनेनैव जायते। अत्र व्यापनं लेपनकर्तृत्वतमसोः न साधारणधर्मः, एवमधःप्रसरणं न वर्षणकर्तृनभसोः साधर्म्यम्, व्यापनस्य लेपनकर्तृनिष्ठतया, अधःप्रसरणस्य च वर्षणकर्तृनिवृत्तित्वाभावादिति।

आलङ्कारिकाणां स्वतन्त्रतन्त्रत्वविचारः

पण्डितराजो विलक्षणप्रतिभाप्रभूतोद्भावनयुक्तः कामप्यभिनवामालङ्कारिकतन्त्रसरणिं प्रादुर्भावयाञ्चक्रे, यथा प्रतिजज्ञे "प्रपञ्चयिष्यते चैतदधिकमुपरिष्टात्" (र०गं०,२आ०, पृ०६८२) इति। परं दुर्दैववशादिदानीं सोंऽशोऽनुपलब्धः। मध्ये विघ्नितत्वात् लेखनपद्धतेः, लिखितस्य वा भ्रष्टत्वादित्यन्यत्। अतः सिद्धान्तमुपपादयितुं समीहा आसीदिति, अज्ञातमेव, तथापि एतावन्मात्रे ये सिद्धान्ता उपपादिता तेषां समीक्षया प्रतीयते यन्न किमपि नवीनमुद्भावनं वैदग्ध्यं वा, अपि तु क्वचिद् वैयाकरणसिद्धान्तानुसरणं क्वाचिन्मीमांसानुवर्तनम्, क्वचिच्च न्यायसरणि-परिशीलनमित्येव तेषां वैदग्ध्यम्। तथा सङ्केतितार्थविवेचने जातिः गुणः क्रिया यदृच्छेति शाब्दिकरीतिरनुसृता शक्यसम्बन्धो लक्षणेति वदता नैयायिकमतमनुष्ठितम्। "सादृश्यस्य पदार्थान्तरत्वे बोधो विचार्यते" इति वदता मीमांसकरीतिरनुगता।

इत्थं यथेच्छं क्वचित् कस्यचिन्मतादानमेवास्य स्वतन्त्रसिद्धान्तता प्रतिभाति। अलङ्कारशास्त्रस्य चतसृणां विद्यानां निष्यन्दभूतत्वात् क्वचिद् क्वचिद् सर्वेषां सिद्धान्तानामुपलब्धिरलङ्कारशास्त्रे न दोषाय। तथापि पण्डितराजस्य नैयायिकता विशेषतः स्फुरतीति नाविदितं रसगङ्गाधर, परिशीलयतामिति नैयायिकरीत्योपपादयतस्तस्य तदा युक्तं स्यात्, यदा लेपनकर्तरि तमसि च किञ्चित् साधर्म्यं स्फुरेत्। व्यापनं तु केवले तमसि न लेपनकर्तरि — इति सुधीभिर्विभावनीयम्।

एवं "भावप्रधानमाख्यातम्" इत्यस्य "भावनार्थको धातुः" इत्युक्त्या आख्यातपदस्य धातुरर्थोऽपि तथैव तस्मै रोचते। भट्टस्य तु शाब्दिकरीत्योपपादनमतीव समीचीनम्। अत एवालङ्काररत्नाकरकृदपि उत्प्रेक्षालङ्कारे "लिम्पतीव तमोऽङ्गानि" इति पद्ये तमसः धर्मस्य व्यापनस्य तमसः धर्मेणैव लेपनाभेदेनाध्यवसानाद् अध्यवसायमूला स्वरूपोत्प्रेक्षेत्याह।

अत्र वाच्यस्य तमसः लेपनकर्तृत्वेनोत्प्रेक्षणात् तमोरूपविषयस्योपादानाद् आरोपमूलोत्प्रेक्षेति वक्तुं न शक्यते "विषयित्वेन सम्भावनमुत्प्रेक्षेति" लक्षणाद् विषयस्य (उपमेयस्य) विषयित्वेन (उपमानत्वेन) सम्भावनायामेवोत्प्रेक्षा भवति, यदि तमसि लेपनकर्तृता उत्प्रेक्ष्यते तदा स्वरूपतोऽवस्थितस्य तमसः लेपनकर्तृत्वाश्रयत्वेन विवक्षितत्वात्, स एव विषयी विषयश्चेति न तत्रान्यस्य अन्यत्वेनोत्प्रेक्षणम्। तमसोऽन्यत्वेन सम्भावने तु "तमोलेपनमेव" इति प्रतीतिः स्यात्। यदन्यस्य व्यापनाविष्टस्य कस्यचित् लेपनाविष्टतया सम्भावनमत्रेत्युच्यते, तदान्य एव कश्चनोदासीनः विषयः स्यात् न तमः। अतो व्यापनाविष्टत्वस्य तमोधर्मस्यैव लेपनत्वेन (धर्मान्तरत्वेन) उत्प्रेक्षितत्वे व्यापनाविष्टत्वस्य विषयत्वोपपत्तिः। तस्य चानुपादानाद् अध्यवसायमूलत्वम्। अतो विषयभूते तमसि लेपनकर्तृतोत्प्रेक्षिता। व्यापनं च निमित्तं न तु विषयः विषयानुपादाने चोत्प्रेक्षैव न स्यादित्यादिसर्वमसमञ्जसमेवेति दिक्।

## अतिशयोक्तिः

तत्रभवान् मम्मटाचार्यः, "अतिशयोक्तिमन्वर्थसंज्ञयैव लक्षयाञ्चक्रे। अतिशयस्योक्तिरतिशयोक्तिः, अतिशयः अतिशयिता उक्तिः अतिशयोक्तिरिति वा। अतिशयश्च प्रसिद्धिमतिक्रान्तः लोकातीतः। शब्दोऽयं योगरूढः। अतोऽग्रे प्रतिपाद्यमानेषु भेदेष्वेव रूढः, योगशक्त्या च लक्षणलाभः। चक्रवर्तिविवरणकारादीनामप्यत्रैव तात्पर्यम्। केचन प्रतिपादितेष्वतिशयोक्तिभेदेष्वनुगतप्रवृत्तिनिमित्तोपलब्धये "प्रभेदान्यतमत्वम्" इति सामान्यलक्षणमाहुः (का०प्र०, वामनीटीका पृ०६२८)।

तद्भेदाश्च उपमानेन निगीर्य (पृथगनिर्दिश्य) उपमेयस्याहार्याभेदनिश्चयः प्रथमातिशयोक्तिः। प्रस्तुतस्य (विषयरूप) अन्यत्वकल्पनं द्वितीया। यदि शब्दार्थस्य (चेद् यदिशब्देन) उक्तौ सत्यामसम्भविनोऽर्थस्य कल्पनं तृतीया। कार्यकारणयोः प्रसिद्धस्य पूर्वापरिभावस्य (कार्यादव्यवहितपूर्ववृत्तिकारणमिति नियमात् कारणानन्तरं कार्यं जायते, कारणं पूर्वं भवति अनन्तरं कार्यं तस्य) विपर्ययश्चतुर्थीति चतुर्विधातिशयोक्तिः। तदुक्तम्—

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्।।**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।**
**विज्ञेयातिशयोक्तिः सा......।।**

(का०प्र०, १०, पृ० १५३)

अत्राध्यवसानपदस्यानेकधा व्याख्यानं टीकाकारा आहुः। अध्यवसानं द्रढीयसी बुद्धिरिति प्रदीपकृत्। स्वासाधारणधर्मेणानुपादानादनाहार्याभेदधीरिति उद्द्योतकारः। स्वस्वरूपेणानुपस्थिततया सर्वथैवाभेदप्रतिपत्तिरूप उत्कटारोप इति विवरणकृत्। अध्यवसानमप्रकृततादात्म्यारोपः। स च भेदप्रतिपत्त्यसहकृताहार्यनिश्चयरूप इति सारबोधिनीकृत्।

तत्र रूपकस्य भेदाभेदरूपत्वाद् अस्य चाभेदरूपत्वात् रूपकातिशयोक्त्योर्भेदः। ससन्देहस्य संशयरूपत्वादुत्प्रेक्षाया सम्भावनामात्रपरत्वादस्य चाहार्यनिश्चयपरत्वान् मिथो भेदः। आहार्यत्वेन भ्रान्तिमति नातिप्रसक्तिः। अत्रापि प्रकरणप्राप्तमलङ्कारत्वे सति इति विशेषणं ज्ञेयम्, तेन गौरयं गां पाठयेत्यादौ नातिप्रसक्तिः।

तत्र प्रथमाया उदाहरणं यथा—

**कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।**
**सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्।।** इति।

अत्र कमल–कुवलय–कनकलतिकापदैः निगीर्णानां मुख नेत्रतनूनां कमलादितादात्म्येनाध्यवसानात् मुखादेरतिशयः प्रतीयत इति निगीर्याध्यवसानरूपा प्रथमातिशयोक्तिः भेदेऽभेदाध्यवसायरूपेति।

द्वितीया यथा—

**अण्णं लडहत्तण अं अण्णा विअका वि वत्तणच्छाया।**
**सामा सामण्णपआवाइणो रेह च्चिअ ण होई।।**
**(अन्यल्लटभत्वम् (सौकुमार्यम्) अन्यैव च कापि वर्तनच्छाया।**
**श्यामा सामान्यप्रजापतेः रेखैव च न भवति।।**

अत्रान्यत्सौकुमार्यमित्युक्त्या लोकप्रसिद्धसौकुमार्याद्यभेदेऽपि श्यामायाः सौकुमार्यादौ भेदो वर्णितः। तथा च अन्यदिति सौकुमार्यविशेषणेनास्या सौकुमार्यस्य लोकसौकुमार्यादतिशयः प्रतीयत इति अभेदे भेदाध्यवसायरूपा द्वितीया।

तृतीया यथा—

**राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।**
**तस्या मुखं तदा साम्यपराभवमवाप्नुयात्।।**

अत्र "पूर्णिमायां चन्द्रस्य वपुः कलङ्करहितं यदि स्यात्तदा तस्या (नायिकायाः) मुखं चन्द्रसाम्यरूपतिरस्कारं प्राप्नुयात्" इत्युक्त्या चेत् पदेन पूर्णचन्द्रस्य कलङ्करहितत्वरूपासम्भविनोऽर्थस्य कल्पने तृतीयातिशयोक्तिः। तेन मुखस्यातिशयः प्रतीयते।

अत्रोद्द्योतकार:– "यद्यर्थोक्तौ च कल्पनम्" इति असम्बन्धे सम्बन्ध:, सम्बन्धेऽसम्बन्ध इति भेदद्वयस्योपलक्षणमिति व्याचष्टे। तथा हि अस्मिन्नेव पद्ये पूर्वार्धे पूर्णेन्दौ कलङ्काभावस्यासम्बन्धेऽपि सम्बन्ध:। उत्तरार्धे साम्यसम्बन्धसम्भवेऽपि तदसम्बन्ध: पराभवपदेन सूचित इत्यादिना।

चतुर्थी यथा—

**हृदयाधिष्ठितमादौ मालत्या: कुसुमचापबाणेन।**
**चरमं रमणीवल्लभलोचनविषयं त्वया भजता।।**

अत्र मालत्या: हृदयमादौ कामेनाधिष्ठितम्। अनन्तरं लोचनविषयं प्राप्नुवता त्वया (राज्ञा)धिष्ठितमिति मालत्या हृदये मन्मथाविर्भावरूपकार्यस्य कारणं रमणीवल्लभाधिष्ठानम्। कारणं निरूप्य कार्यं निरूपणीयमिति पन्था:। परमत्र शीघ्रकारितां वक्तुं मन्मथाधिष्ठानरूपकार्यस्य प्रथममुक्तिरिति "कार्यकारणयोश्चैव पौर्वापर्यविपर्ययरूपा चतुर्थी।

अयं विपर्ययो द्विविध:— कार्यस्य कारणात् प्राथम्येन, सहभावेन चेति प्रथममुदाहृतम्। द्वितीयं यथा—

**सममेव समाक्रान्तं द्वयं द्विरदगामिना।**
**तेन सिंहासनं पित्र्यं मण्डलं च महीभृताम्।।**

इति रघुवंशीये पद्ये। अत्र रघुणा पितृसम्बन्धिसिंहासनं महीभृतां मण्डलं च सममेव समाक्रान्तमित्युक्त्या सिंहासनाक्रमणस्य कारणस्य महीभृन्मण्डलक्रमणस्य कार्यस्य च सहभावेन प्रतीते: पौर्वापर्यविपर्ययरूपातिशयोक्तिरित्युद्द्योते।

**पण्डितराज:** अतिशयोक्तिमन्वर्थतयैव लक्षयन्नाह— "विषयिणा विषयस्य निगरणमतिशय:। तस्योक्ति: (र०ग०, द्वि०आ०, पृ०३भा०३) विषयिवाचकपदेन शक्यतावच्छेदकरूपेणैव विषयस्य बोधनं निगरणं परमस्मिन्मते "चन्द्रराजी विराजते" इत्यादौ चन्द्रत्वेनेव रूपेण मुखस्य प्रतीतिर्न मुखत्वेनेत्यत्र कारणं "चन्द्रपदनिष्ठलक्षणाज्ञानम्" इति मुखत्वेन मुखस्य प्रतीतिर्न जायतेऽत: "शक्यतावच्छेकरूपेणैवे"त्यत्र एवकारो नास्ति, अर्थात् शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति विषये विषयिवाचकपदस्य लक्षणाज्ञानं कारणमिति कार्यकारणभावस्वीकारे कार्यतावच्छेदककुक्षौ मात्रपदं न देयम्। तेन लक्ष्यतावच्छेदकस्यापि भानमिति अपरे वदन्ति। केचिच्च लक्षणया लक्ष्यतावच्छेदकप्रकारेणैव लक्ष्यबोधमङ्गीकुर्वन्ति, अनन्तरं व्यञ्जनया शक्यतावच्छेदकप्रकारेण बोध इति वदन्ति। अत्र मुखं न चन्द्र इत्याकारको बाधनिश्चय: प्रतिबन्धको न भवति,

बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ अनाहार्यत्वस्येव शाब्दान्यत्वस्य निवेशात्। अथवा प्रात्यक्षिकमेवाहार्यमिति नियममनङ्गीकृत्य शाब्दोऽप्याहार्य इति वैयञ्जनिकबोधस्याहार्यत्वान्न बाधनिश्चयप्रतिबन्धक इति न तत्र शाब्दान्यत्वं निवेश्यम्।

रूपके उपमानोपमेययोः भिन्नपदोपस्थाप्यत्वात्, उद्देश्यविधेयभावः, इह तूपमानोपमेययोरेकपदेनैव (विषयिवाचकपदेनैव) उपस्थाप्यत्वान्नोद्देश्यविधेयभाव इति रूपकादस्य भेद इति। अपि च रूपके विषयविषयिणोरुपात्तत्वान् नामार्थयोरभेदसंसर्गेण विशेष्यविशेषणभावो जायते। अतिशयोक्तौ तु विषयिणा विषयस्य निगीर्णत्वाद् विषयितावच्छेदकरूपेण विषयस्यैव भानमिति नाभेदसंसर्गस्य प्रसक्तिरित्यपि रूपकाद् भेदः।

अत्र नागेशः— गुरुमर्मप्रकाशिकायां मम्मटाभिप्रायं स्फोटयन्नाह— ''कमलमनम्भसि कमले च कुवलये'' इत्यादौ कमलादिपदाद् गौणसाध्यवसानलक्षणया कमलत्वादिविशिष्टस्य मुखादेः प्रतीतिः, तत्र लक्ष्यं मुखं लक्ष्यतावच्छेदकं च कमलत्वं न तु मुखत्वम्। अतो लक्षणया प्रथमं कमलत्वादिविशिष्टमुखादेर्बोधे वृत्तेऽनन्तरं व्यञ्जनया कमलत्वादिविशिष्टे मुखादौ कमलादीनामभेदप्रतीतिर्जायते। स चाभेदोऽनाहार्य एव। कमलत्वादिविशिष्टे कमलादेरभेदे बाधबुद्धेरभावात्। ''मुखं चन्द्रः'' इत्यादौ रूपके तु मुखपदात् मुखत्वेन रूपेणोपस्थितस्य मुखस्य चन्द्रपदात् मुखत्वविशिष्टस्य मुखस्य गौणसारोपलक्षणया चन्द्रत्वेन रूपेण प्रतीतिर्जायतेऽतस्तत्र मुखं न चन्द्र इत्याकारकबाधनिश्चयसत्त्वादाहार्यभेदः क्रियते। एवं च रूपके आहार्याभेदः। इह त्वनाहार्याभेद इति रूपकादस्य विशेषः। अत एव गौणसाध्यवसानायां ''सर्वथैवाभेदावगमश्च प्रयोजनम्'' (का०, द्वि०उ० १६सूत्रवृत्तौ) इति काव्यप्रकाशः सङ्गच्छत इति।

अथोदाहरणम्—

**कलिन्दगिरिनिन्दिनी तटवनान्तरं भासयन्**
**सदा पथिगतागतक्लमभरं हरन् प्राणिनाम्।**
**स्फुरत् कनककान्तिभिर्नवलताभिरावेल्लितो**
**ममाशु हरतु श्रमानतितमां तमालद्रुमः।।**

अत्र पण्डितराजः दीक्षितमाक्षिपन्नाह— ''अत्र कृष्णतमालद्रुमयोः भेदेऽप्यभेदः। नव्यानां मते सर्वस्यामतिशयोक्तौ विषयितावच्छेदकरूपेणैव विषयस्य भानं जायते, न तु विषय्यभेदेनेति स्थितौ दीक्षितेन कुवलयानन्दे यदुक्तं ''रूपकातिशयोक्तौ रूपकविशेषणं रूपके प्रदर्शितानां भेदानामिहाऽपि सम्भवोऽ-

स्तीति प्रदर्शनार्थम्, अतोऽतिशयोक्तिरपि अभेदातिशयोक्तिः, ताद्रूप्यातिशयोक्तिरिति भेदेन प्रथमं द्विविधेति, तन्निरस्तम्। परं प्राचीनानां मते रूपक इवात्रापि विषय्यभेदो भासते। परमतिशयोक्तौ विषयस्य निगरणं रूपके नेति भेदः।

एवं तर्हि "गौरयम्" "आयुरेवेदम्" इत्यादौ इदंशब्देन विषयस्य विशेषितत्वात् (परामर्शात्) कथमतिशयोक्तिरिति न शङ्क्यम्। तत्र "अयम्" "इदम्" इति शब्दाभ्यां क्रमशः गोत्वादिविशिष्टस्य आयुष्ट्वविशिष्टस्यैव विशेषितत्वात् (परामर्शात्) अतिशयोक्तिरन्यथा रूपकमिति।

"प्रस्तुतस्य यदन्यत्वम्" इत्यनेन मम्मटेन अभेदेऽपि लोकोत्तरत्वप्रत्यायनार्थो यत्र भेदः स प्रकारोऽतिशयोक्तिरुक्तः। उदाहरणम्—

**अन्या जगद्धितमयी मनसः प्रवृत्ति-**
**रन्यैव कापि रचना वचनावलीनाम्।**
**लोकोत्तरा च कृतिराकृतिरार्यहृद्या**
**विद्यावतां सकलमेव चरित्रमन्यत्।।** इति।

अत्रान्यजनगतप्रवृत्तिवचनरचनावृत्यपेक्षयाऽभिन्नास्वपि विदुषां प्रवृत्तिवचनरचनाकृतिषु भिन्नत्वोपादानाद् द्वितीयातिशयोक्तिः। एवं यत्र वर्णनीयस्योत्कर्षसम्पादनार्थः असम्बन्धेऽपि सम्बन्धः तत्र तृतीया। यथा–

**धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः।**
**उन्मदवारणबुद्ध्या मध्ये जठरं समुच्छलति।।**

अत्र गर्भस्य समुच्छलनस्यासम्बन्धेऽपि सम्बन्धोक्तिस्तृतीया। एवं सम्बन्धेऽसम्बन्धो यथा—

**पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम्।**
**तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः।।**

अत्र योषाधरबिम्बमाधुर्योद्रेकप्रयुक्ततोषसम्बन्धेऽपि "तोषाय नो कल्पते" इत्युक्त्याऽसम्बन्धो वर्णित इति चतुर्थी। प्रयोज्यप्रयोजकयोः पौर्वापर्यविपर्यये द्विधा, सहभावात् प्रयोजकस्य प्रयोज्यानन्तरभावाच्च। तत्राद्यो यथा—

**प्रतिखुरशिलातलसङ्घट्टसमुच्छलद्विद्युद्वल्लीकृत-**
**विस्फुल्लिङ्गच्छटापटलानां वाजिनाम्।।** इति।

अत्र समुच्छलनं विद्युद्वल्लीकरणे हेतुः, समुच्छलदित्यत्र शतृप्रत्ययेन तयोः सहभावो वर्णितः। द्वितीयो यथा—

**पुरः पुरस्तादरिभूपतीनां भवन्ति भूवल्लभभस्मशेषाः।**
**अनन्तरं ते भृकुटी विटङ्कात् स्फुरन्ति रोषानलविस्फुल्लिङ्गाः।।** इति।

अत्रारिभूपतीनां नगरदाहे रोषानलविस्फुल्लिङ्गकारणानि तेषां प्राङ्‌निर्देशो युक्तः। परं पश्चाद् वर्णित इति कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिः। अनयोर्भेदयोः कार्यस्य शैघ्र्यातिशयप्रत्यायकः प्रयोजकगतातिशयस्याभिव्यक्तिः। एवं च पञ्चानामपि भेदानां सङ्‌ग्रहाय'' भेदे पञ्चकान्यतमत्वमतिशयोक्तित्वम्'' इति अतिशयोक्तिसामान्यलक्षणम्।

इत्थं पण्डितराजः प्राचीनाभिमतमुपपाद्य तन्निरासायान्यमतम् (प्रायः मम्मटमतम्, मम्मटेन मूले तथैवोक्तेः) उपस्थापयन्नाह— सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्ध इति भेदद्वयं नातिशयोक्तिः, यतो हि उक्तभेदद्वयरूपाऽतिशयस्य प्रायः रूपकदीपकोपमाऽपह्नुत्यादिसर्वेष्वलङ्कारेषु सत्त्वादृते स्वभावोक्तेः। विच्छित्तिरेवालङ्कारत्वनिदानम्, यथास्थितस्य वस्तुनो वर्णने तु न कापि विच्छित्तिरिति सर्वत्रालङ्कारेषु विच्छित्तयेऽतिशयो वर्ण्यते। तद्यथा ''मुखं चन्द्रः'' इति रूपके मुखे चन्द्राभेदस्यासम्बन्धेऽपि सम्बन्धो वर्णितः। मुखं चन्द्र इव मनोज्ञमित्युपमायां चन्द्रनिष्ठमनोज्ञत्वस्य चन्द्रे एव सत्त्वात् मुखनिष्ठाभावात् कथं मुखचन्द्रोभयनिष्ठत्वात् साधर्म्यम्, श्लेषमूलकाभेदाध्यवसाने तु असम्बन्धे सम्बन्ध एवापतितः। ''नेदं नभोमण्डलमम्बुराशिरित्यपह्नुतौ नभोमण्डले नभोमण्डलनिषेधः सम्बन्धेऽप्यसम्बन्ध एव। एवमन्यत्रापि बोध्यम्। एवमुक्तमभेदद्वयस्यातिशयोक्तावेतेषां रूपकादीनामतिशयोक्त्यापत्तावतिप्रसक्तिः स्यात्। अपि च कार्यकारणयोः पौर्वापर्यविपर्ययभेदेऽपि वस्तुतः सम्बन्धेऽसम्बन्धस्य, असम्बन्धे सम्बन्धस्य वा सत्त्वात् तद्‌भेदस्य पृथगुपादानं व्यर्थः स्यात्। तस्माद् विषयिणा विषयस्य निर्गीर्याध्यवसानमेका, प्रस्तुतस्यान्यत्वं द्वितीया यद्यर्थोक्तौ चासम्भविनोऽर्थस्य कल्पनं तृतीया। कार्यकारणयोः पौर्वापर्यविपर्ययश्चेति चतुर्थीति चतुर्विधैवातिशयोक्तिः।

तत्र नव्यानां मतम्— नव्यास्तु विषयिणा विषयस्य निगीर्याध्यवसानमतिशयः तस्योक्तिरतिशयोक्तिरिति लक्षणबलाद् भेदेऽभेदरूपां प्रथमातिशयोक्तिमेवातिशयोक्तिमाहुः नान्याम्। अभेदे भेदः, असम्बन्धे सम्बन्धः, सम्बन्धेऽसम्बन्धः कार्यकारणयोः पौर्वापर्यविपर्ययश्चातिशयोक्तेः

प्रभेदाः न सन्ति, तेषु सकलभेदसाधारणैकधर्माभावात्। अतः प्रथमप्रभेदातिरिक्तान्ये प्रभेदाः अलङ्कारान्तरमेव।

अत्र पण्डितराजोऽलङ्कारत्नाकरकृन्मतं विमर्शिनीकृन्मतं चोपपाद्य निराकरोति। अतः तयोर्मतं तत्तद्ग्रन्थानुसारेणोपपाद्यते। तथा हि— अलङ्कारत्नाकरकृद् अतिशयोक्तिं लक्षयन् "अध्यवसानमतिशयोक्तिः" (अ०र०, सू० ३७, पृ०५८ (शोभाकरमिश्रः) इति सूत्रयामास। तत्राध्यवसानं विषयिणा निगीर्णे विषये विषयिणोऽभेदप्रतिपत्तिरिति। इयमभेदप्रतीतिः शाब्दी। यतो हि विषयवाचकपदानुपादाने केवलविषयिवाचकप्रयोगबलेन वाक्याज्जायते। यद्यपि अभेदप्रतिपत्तिर्भ्रान्तिमत्यपि भवति। परं तत्र सादृश्यातिशयबलेन अतस्मिन् तद्बुद्धिरन्यस्य जायते, वक्ता तु केवलं तदनुवदति, यथा—

**पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।**

इत्यत्र भ्रमरस्य सादृश्यातिशयबलात् शुकतुण्डे पलाशमुकुलाभेदप्रतीतिर्जाता, कविस्तु केवलं तामनुवदतीति न शाब्दी प्रतीतिः। तत्र सङ्ग्रहश्लोकं पठति—

**प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते।**
**स भ्रान्तिमान् स्वधीर्भ्रान्ता वक्त्राऽस्यां तु न विद्यते।।** इति।

तद्भेदाः — इयमतिशयोक्तिश्चतुर्धा— भेदेऽभेदः, अभेदे भेदः, सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्ध इति भेदात्, कार्यकारणयोः पौर्वापर्यविपर्ययस्यासम्बन्धे सम्बन्धरूपचतुर्थभेदान्तर्भावात् पञ्चधेति न भ्रमितव्यम्, कार्यकारणयोः सहभावे पूर्वापरीभावे वा समानकालताद्यसम्बन्धेऽपि विध्वंसपौर्वापर्यसम्बन्धरूपस्य सम्बन्धस्य वर्णनात्। यदि अस्य कार्यकारणभावपौर्वापर्यविपर्ययासम्बन्धे सम्बन्धवर्णनसत्त्वेऽपि पृथग्भेदगणना क्रियते, तदा कार्यं पृथक् कारणं च पृथग्वर्ण्यते, तत्र कार्यकारणयोः पृथग्देशवृत्तित्वात् देशभेदेनासम्बन्धे सम्बन्धस्य निबन्धे षष्ठभेदस्याप्यापत्तेः, "असङ्गत्यलङ्कारस्य निर्विषयत्वापत्तिः स्यात्। पदार्थयोः (कार्यकारणयोः) कालसम्बन्धे देशसम्बन्धे च नास्ति कश्चन विशेषः येन कालभेदादतिशयोक्तिः देशभेदादसङ्गतिरिति व्युत्पादयितुं शक्येत।

इत्थं चतुर्धामतिशयोक्तिमुपपाद्य चतुर्षु भेदेष्वनुगतरूपतयैकं लक्षणं सङ्गमयति। अध्यवसाने वस्तुतः प्रकृतः विषयः, तत्राप्रकृतो विषयी उपचर्यमाणो वर्तते। इत्थं सर्वत्र विषयिण एवोपादानाद् विषयस्य निगरणं वर्तते। तथा हि—

**लावण्यसिन्धुरपरैव हि केयमत्र**
**यत्रोत्पलानि शशिना सह सम्प्लवन्ते।**
**उन्मज्जति द्विरदकुम्भतटी च यत्र**
**यत्रापरे कदलिकाण्डमृणालदण्डाः।।**

(अ०र०, ३७/१८१)

इत्यत्र वर्ण्यमाननायिकायाः तन्नेत्रादीनां च लावण्यसिन्धुतदुत्पलादिभिर्भेदेऽपि अभेदो वर्णितः। तत्र वस्तुनः प्रकृतानि नायिका तन्नेत्रादीनि तेषां सिन्धूत्पलादिभिर्निगरणेन (विषयिणामेवोपादानात्) विषयविषयिणोर्भेदेऽपि विषयविषयिणोरभेदप्रतिपत्तिः। अत्राऽप्रस्तुतप्रशसां सम्भाव्य निराकरोति। ''एतादृशस्थलेऽतिशयोक्तिस्वीकारेऽप्रस्तुतप्रशंसाया निर्विषयत्वापत्तिरिति तु न भ्रमितव्यम्। अतिशयोक्तौ पदार्थस्याध्यवसायः, अप्रस्तुतप्रशंसायां वाक्यार्थस्येति भेदात्'' इति केनचित्समाहितं न युक्तम्। अध्यवसानस्योभयत्र सत्त्वात्। अतः इदं समाधानं ज्ञेयम्— अध्यवसानस्योभयत्र तुल्यत्वेऽपि अतिशयोक्तिरित्यन्वर्थसंज्ञाबलाद् यत्रार्थस्यातिशयविवक्षा तत्रातिशयोक्तिः, यत्रार्थस्यातिशयप्रतिपादनं विनैव यथास्थिते एवार्थोऽन्यमुखेन प्रतिपाद्यते तत्राप्रस्तुतप्रशंसेति निश्चयात्। तत्र सङ्ग्रहश्लोकः—

**अप्रस्तुतात्प्रस्तुतस्य गतिर्यातिशयं विना।**
**साऽप्रस्तुतप्रशंसाऽन्या विज्ञेयातिशयोक्तिधीः।।** इति।

**''व्यञ्जितानङ्गलीलेन शृङ्गाररसबन्धुना।**
**तन्वी नवानुरागेण साऽन्यैव घटिताभवत्''।।**

(अ०र०, ३७/१८२)

इत्यत्र सा एव तन्वी नवानुरागेण अन्यात्वेन वर्णिता घटिताभवदित्यभेदेऽपि भेदः। एवमत्रान्यत्वेन वर्णनाद् अभेदस्य स्थगनाद् भेदेनाभेदस्य निगरणमिति।

**अस्त्रप्रतिममाधेयं स्तनद्वन्द्वस्य दूषणम्।**
**स्फुटतां कञ्चुकानां यन्नायात् प्रावरणीयताम्।**

(तत्रैव, १८३)

अत्र स्तनद्वन्द्ववत् स्फुटतां कञ्चुकानां प्रावरणीयतां न आयादित्युक्त्या स्तनयोः प्रावरणीयतासम्बन्धेऽपि वस्तुतस्तस्यैव वर्णनीयत्वेऽपि असम्बन्ध उक्तः। अतोऽसम्बन्धेन सम्बन्धो निगीर्णः। एवं कञ्चुकानां स्फुटता सम्बन्धेऽपि, असम्बन्धस्यैव वर्णनीयत्वेऽपि सम्बन्ध उक्तः, अतः सम्बन्धेनासम्बन्धो निगीर्णः।

**आज्ञाधरः पञ्चशरः पुरस्तात् सुधा पुनः कर्मकरी मुखस्य।**
**स चापि सौन्दर्यविशेषवन्दी यत्रेन्दुरिन्दीवरलोचनानाम्।।**

(तत्रैव, १८४)

अत्र पञ्चशरः आज्ञाधर इत्युक्त्या इन्दीवरलोचनानां दर्शनेन मदनविकारोत्पत्तिरूपकार्यं वस्तुतो वर्णनीयम्, वर्णितेन कारणेनाज्ञाधरत्वेन निगीर्णम्। तच्च पञ्चशरे आज्ञाधरत्वासम्भवेऽपि एककार्यकारित्वसम्बन्धनिमित्तेन सम्बन्धवर्णने सति सम्बन्धेनासम्बन्धो निगीर्ण इति पञ्चमभेदश्चतुर्थभेदान्तर्गत एव।

अत्र सर्वत्र भेदेषु वस्तुतोऽसम्बन्धे सम्बन्ध एव वर्णयितुं शक्यते, तथापि अवान्तरभेदे विवक्षयाऽन्यैराचार्यैर्लक्षिततत्वात्, असम्बन्धे सम्बन्धस्य विविक्ततया दर्शितत्वाच्च विभागः कृत इति।

**विमर्शिनीकारोऽप्येवम्,** तथा हि—

"अतश्च पूर्वत्र धर्माणामेवाध्यवसायो योजनीयो येन सर्वत्रैक एव पक्षः स्यादिति तात्पर्यार्थः। इत्याद्युक्त्या सर्वत्राध्यवसायः प्रतीयत इति"।

एवञ्च सर्वत्र भेदेषु निगीर्याध्यवसायेनातिशयोक्तिरेव इत्यलङ्काररत्नाकरविमर्शिनीकारादीनां मतम्। एतद्रीत्या पञ्चापीमे भेदा अतिशयोक्तेरेवेत्याशङ्कायां पण्डितराजो ब्रूते— निगरणं तत्रैव भवति यत्र वर्णनीयस्य विषयस्य वर्णनप्रसङ्गे क्वचिदवर्णनीयस्य विषयिणो वर्णनमित्यनुभवसिद्धः। यथा बहुत्र मुखत्वेन वर्णितस्य मुखस्य वर्णनप्रसङ्गे "चन्द्रराजी विराजते" इत्युच्यते, तत्र चन्द्रेण मुखं निगीर्णमिति। एतन्निगरणं प्रभेदान्तरे नोपलभ्यते। प्रस्तुतान्यत्वभेदे अभेदे भेदस्य वर्णनमेव चमत्कारि, नाऽभेदवर्णनमित्यनुभवसिद्धम्, यदि "अन्या जगद्धितमयी मनसः प्रवृत्तिः" इत्यत्र मनसः प्रवृत्तेरन्यत्वेन वर्णनमेव चमत्कारं जनयति मनसः सैव प्रवृत्तिः इति वर्णनं तु न चमत्कारकारि, यद्वस्तु यथास्ति तस्य तथैव वर्णने किं वैलक्षण्यं को वा चमत्कारः। चमत्कारिवर्णनमेव काव्यम्। अतोऽन्यत्वेन वर्णनानुपलम्भे (काव्ये) अन्यत्वेन वर्णनाद् अनन्यत्वस्य निगरणमिति वक्तुं न शक्यते। एवं प्रभेदान्तरेष्वपि ज्ञेयम्। अतः प्रभेदान्तरेषु द्वितीयादिभेदेषु अनुगतरूपातिशयोक्तिलक्षणाभावान्न तेऽतिशयोक्तेर्भेदाः, अपि तु अलङ्कारान्तरमेव।

यच्च यदि पञ्चापि भेदान् पूर्वं नामग्राहं निर्दिश्य "एतत्पञ्चान्यतमत्वमतिशयोक्तित्वम्" इति लक्षणं तदापि न समीचीनम्, यतो हि तेषु अलङ्कारभेदनिदानस्य विच्छित्तिवैलक्षण्यस्योपलम्भाद्

अलङ्कारान्तरत्वस्यैव युक्तत्वात्, अन्यतमत्वस्यातिशयोक्तेरप्रयोजकत्वात्। अन्यथा उपमारूपकादीन् कतिपयान् सकलालङ्कारान् वा नामग्राहं निर्दिश्य ''एतदन्यतमत्वमतिशयोक्तित्वम्'' इति लक्षणं वक्तुं शक्यत्वात्। एवमतिशयोक्तिरेवालङ्कारः, उपमादयस्तद्भेदाः स्युरिति।

न चैवं लक्षणमुच्यते तत्र कारणं विच्छित्तिभेद एव। एवं विच्छित्तिभेदे एषां चतुर्णां भेदानामप्यलङ्कारान्तरत्वमेव न्याय्यम्। ''प्रधानवाक्यार्थोपस्कारकत्वमलङ्कारत्वम्'' इति अलङ्कारसामान्यलक्षणस्य सर्वैरङ्गीकृतस्यात्र (प्रभेदान्तरेषु) सत्त्वादिति अलङ्कारान्तरकल्पने गौरवमपि न। यतो हि अक्लृप्तपदार्थस्य कल्पने गौरवं जायते, अत्र तु प्रक्लृप्तस्यैव कल्पनमिति गौरवं नागूरणीयम् यदप्यलङ्कारविभाजकोपाधिषु उपमारूपकादिषु एषां प्रभेदानामगणितत्वात् साम्प्रतं परिगणने अलङ्काराधिक्यापत्तेर्गौरवं स्यात् तदपि नालङ्कारविभाजकोपाधीनां पुरुषपरिकल्पितत्वात् तेषु भेदेषु अलङ्कारान्तरत्वस्य भवद्भिरपि स्वीकारात्, नामान्तरमात्रकरणे गौरवाभावादिति। अतिशयोक्तिर्वेदेऽपि दृश्यते, तथा हि—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वादवत्यनश्नन्नन्योऽभिचाकशीति।।**

(ऋग्वेदः, १/१६४/२०)

इत्यत्र द्वौ (सुशोभनपक्षयुतौ) पक्षिणौ सहविद्यमानौ एकं पिप्पलवृक्षमधिष्ठितौ। तयोरेकः स्वादु पिप्पलफलं भुङ्क्ते, अन्योऽभुञ्जान एव सर्वतो विद्योतत इत्यर्थः। तत्राभुञ्जतापि विद्योतमानेन पक्षिणा ईश्वरस्तथा भुञ्जता पक्षिणा कर्मफलभोक्ता जीवश्च निगीर्णौ। एवं पिप्पलफलेन कर्मफलं निगीर्णमित्यतिशयोक्तिः।

अथातिशयोक्त्यलङ्कारध्वनिः—

मम्मटोऽर्थशक्त्युद्भवध्वनेः पदप्रकाशतायां वस्तुनाऽलङ्कारध्वनेरुदाहरणम्—

**तदप्राप्तिमहादुःखविलीनाशेषपातका ।**
**तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा।।**

**चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।**
**निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका।।**

इति विष्णुपुराणीयं युग्मपद्यमुदाजहार। अत्र ध्वनेः पूर्वमुदाहृतत्वात्। विशेषो न लिख्यते केवलं प्रकरणवशादनूद्यते। अत्र श्रीकृष्णाप्राप्तिजन्यमहादुःख-श्रीकृष्णचिन्तनजन्याह्लादाभ्यां जन्मसहस्रोपभोग्यदुष्कृतसुकृतराशिफलानि निगीर्णानीति अशेषचयपदद्योत्येऽतिशयोक्तीति पदप्रकाश्यवस्तुनाऽतिशयोक्त्यलङ्कारध्वनिः।

पण्डितराजो वदति— "एतेन तदप्राप्तिमादु:ख" इत्यादिकाव्यप्रकाशो व्याख्यात:। अस्यायमभिप्राय: पूर्वं पण्डितराज: स्वनिर्मितमतिशयोक्ति-ध्वनेरुदाहरणं प्रतुष्टाव। तत्र यथातिशयोक्तिध्वनिस्तथाऽत्रापीति। तथा हि—

**देव! त्वद्दर्शनादेव लीयन्ते पुण्यराशय:।**
**किञ्चादर्शनत: पापमशेषमपि नश्यति।।** इति।

अत्र "प्रारब्धकर्मणां भोगादेव क्षय:" इति सिद्धान्तात् तत्तत्पुण्यपापानां स्वस्वफलभूतसुखदु:खभोगादेव क्षय: सम्भवति। एवञ्च पुण्यराशिलयहेतुत्वेनोपात्ताद् देवदर्शनात् नृपदर्शनजन्यसुखस्य, एवमशेषपापलयहेतुत्वेनोपात्तात्तददर्शनात् नृपादर्शनजन्यदु:खस्य च जन्मशतोपभोग्यस्याक्षेप:। इत्थमत्रानेकजन्मभोग्यसुखदु:खाभ्यां नृपदर्शनादर्शनजन्यसुखदु:खे निगीर्णे।

अत्र तद्दर्शनादर्शनजन्यसुखदु:खाभ्यामनेकजन्मोपभोग्यसुखदु:खयोरेव निगरणं वक्तव्यमिति न शङ्क्यम्, निगरणस्थले विषयितावच्छेदकरूपेणैव विषयप्रतीते: सिद्धत्वात्, अनेकजन्मभोग्यसुखदु:खयोर्निगरणे स्वीकृते तयो: "विषयत्वात्" अनेकजन्मभोग्यसुखदु:खाभ्यां प्रतीतेरभाव: स्यात्। तयोरनेकजन्मभोग्यसुखदु:खरूपत्वाभ्यामप्रतीतावशेषपुण्यपापयोर्नाशोक्तिरस-मसञ्जसा स्यात्। कारणतावच्छेदकरूपेणैव ज्ञातं कारणं कार्यं जनयति। एवं सकलपुण्यपापनाशरूपकार्यं प्रत्यनेकजन्मभोग्यसुखदु:ख एव कारणे न तु दर्शनादर्शनजन्यसुखदु:खे। तत्तत्सुखदु:खादीनां स्वजनकपुण्यपापयोरेव नाशकत्वस्य क्लृप्तत्वात्।

अपि च उपमानं महद् भवति, उपमेयं क्षुद्रं भवति। एवं क्षुद्रस्योपमेयस्य महत्त्वाधानाय महता उपमानेन निगरणमेवोचितम्। अत: क्षुद्रयोस्तद्दर्शनाजन्यसुखदु:खयोरुपमेयत्वं स्वीकर्तव्यम्। उपमेयस्यैवोपमानेन निगरणं भवतीति विपरीतं नाशङ्कनीयमिति। अनेनैव प्रकारेण काव्यप्रकाशग्रन्थोऽपि ज्ञेय इति।

## अत्रालङ्कारसर्वस्वकृन्मतम्—

अलङ्कारसर्वस्वकृद्राजानकरुय्यकोऽ-तिशयोक्तिं "अध्यवसितप्राधान्ये त्वतिशयोक्ति:" इति लक्षयित्वाह अध्यवसाने स्वरूपं विषय:, विषयी च त्रय: सम्भवन्ति। यदा विषयो विषयिणा निगीर्णो भवति तदाऽध्यवसानस्य स्वरूपोत्थानं भवति। अर्थाद् विषयिणा विषयस्य निगरणमेवाध्यवसानम्। तद् यदि साध्यं तदा स्वरूप(अध्यवसान)प्राधान्यम्। यदि सिद्धं तदा अध्यवसितस्य

(विषयिणः) प्राधान्यम्। अध्यवसाने विषयस्य प्राधान्यं निगीर्णत्वान्न सम्भवति। अतः अध्यवसितस्य (विषयिणः) प्राधान्येऽतिशयोक्तिरिति लक्षणं निष्पन्नम्। अस्याश्च पञ्चभेदाः – भेदेऽभेदः, अभेदे भेदः, सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्धः, कार्यकारणपौर्वापर्यविध्वंसश्चेति।

(अ०स०, पृ० २१९)

## अत्र विमर्शिनीकारः–

अलङ्कारसर्वस्वकृन्मतं निराचक्रे। तथा हि मूले पञ्च इति कथनं न्यूनाधिकत्वनिरासाय। अतः कार्यकारणपौर्वापर्यविध्वंसस्य चतुर्थे भेदेऽन्तर्भावो न मन्तव्यः। यद्यस्य चतुर्थभेदे (असम्बन्धे सम्बन्ध इत्याख्ये) अन्तर्भावः क्रियते तदा भेदान्तरेष्वपि असम्बन्धे सम्बन्धवर्णनसत्त्वात् तेषामपि चतुर्थभेदान्तर्भाव एव वक्तव्यः स्यात्। परं भेदान्तराणामन्तर्भावो भवता न स्वीकृतः। "अत्र च यद्यपि सर्वत्र भेदेऽभेदादौ वस्तुतोऽसम्बन्धे सम्बन्ध एव वर्णयितुं शक्यते तथाप्यवान्तरभेदाविवक्षयाऽन्यैर्लक्षिततत्वाद् विविक्तस्यासम्बन्धे सम्बन्धस्य दर्शिततत्वाच्च विभागेन निर्देशः कृत इति भवद्भिरुक्ततत्वाच्च।"

एवं यदि अन्यमनुसरता भवता भेदान्तराणि स्वीकृतानि तदायमपि भेदः स्वीकर्तव्यः तुल्यन्यायात्। अथ "यदि कार्यकारणयोः पौर्वापर्यविध्वंसात् समानकालताद्यभावेऽपि तथोपनिबन्धे (समानकालतावर्णने) पञ्चमोऽत्र प्रकारः इष्यते तद्देशकालयोः पदार्थसम्बन्धे विशेषाभावाद् भिन्नदेशत्वाभावेऽपि तथोपनिबन्धे षष्ठोऽपि भेदः परिगणनीय इति निर्विषयत्वादसङ्गतेरभावः प्रसज्येत"। यदि चेत्, नैव। अतिशयोक्तौ अतिशयाख्यप्रयोजनप्रतिपिपादयिषया विषयनिगरणेन विषयिप्राधान्यं विवक्षितम्। असङ्गतो तु विरुद्धत्वप्रत्यायनाय कार्यकारणयोर्भिन्नदेशत्वमित्युभत्राप्यस्ति तावन्निर्विवादो लक्षणभेद इति।

अयं भावः— कार्यकारणयोः पूर्वापरीभावो नियतः कार्यात् नियतपूर्ववृत्तिता कारणस्य स्वीकारात्। स च कार्यकारणयोः सहभाववर्णने कारणात् पूर्वं कार्यस्यैव वर्णने वा ध्वस्तः। तत्र वस्तुतः कार्यकारणयोः समानकालता, कारणात् कार्यस्य पूर्वकालता वा नास्ति, परं कार्यशैघ्र्यप्रत्यायनाय तथा वर्णने यद्यतिशयोक्तेः पञ्चमः प्रकारः स्वीक्रियते, तदा कार्यकारणयोः समान्यदेशत्वमपि स्वीकृतम् (यत्र देशे कारणं तत्रैव कार्योत्पत्तिदर्शनात्) तद्यदि वैलक्षण्योपपादनाय भिन्नभिन्नदेशे वर्ण्यते तदा षष्ठो भेदोऽतिशयोक्तेः स्वीकर्तव्यः, यथा कार्यकारणयोः समानकालताद्यभावेऽपि समानकालतादिवर्णने पञ्चमो भेदः स्वीकृतः तथा तयोर्विभिन्नदेशताऽभावेऽपि विभिन्नदेशतावर्णने षष्ठोऽपि भेदः स्वीकर्तव्यः।

नहि देशकालयोः सम्बन्धे पदार्थे काचिद् विशेषता वर्तते, येन कालविपर्यासेऽतिशयोक्तिर्न देशविपर्यासे इति वक्तुं शक्यते। एवं सति (देशविपर्यासेऽपि अतिशयोक्तिस्वीकारे) असङ्गत्यलङ्कारस्योच्छेदापत्तिः स्यादिति नाशङ्कनीयम्— यतो हि अतिशयोक्तौ साध्यवसानलक्षणया विषयगतातिशयत्वप्रयोजनप्रतिपादनाय विषयनिगरणे विषयिणः प्राधान्यं लक्ष्यते। असङ्गतो तु विरुद्धत्वप्रत्यायनाय कार्यकारणयोर्भिन्नदेशत्वमिति तयोर्लक्षणभेदे सति नासङ्गत्युच्छेद इति भावः।

अपि च— कार्यकारणयोः पौर्वापर्यविध्वंसोऽतिशयोक्तेः स्वरूपम्। तयोर्भिन्नदेशत्वमसङ्गतेरिति द्वयोः स्वरूपभेदोऽपि। एवञ्चातिशयोक्तिः पञ्चविधैव। अन्ये आचार्या भामहप्रभृतयः (आनन्दवर्धनमम्मटादयः) अस्य एव प्रभेदाः सर्वे अलङ्काराः- इति स्वीकुर्वन्ति। तद्यथा उपमायां न्यूनगुणस्य मुखादेरधिकगुणेन चन्द्रादिना साम्येऽतिशयस्य सद्भावात्। अतिशयं विनाऽलङ्कारत्वमेव न स्वीक्रियते, यथा- "गोरिव गवयः" इत्यादौ। अतोऽतिशयोक्तिः सर्वालङ्कारबीजभूतेति। तत्रोच्यते यदतिशयोक्तेर्द्वयी विधा- एका कविप्रतिभामात्रनिवर्तिता सामान्यरूपा, अन्या भेदेऽप्यभेद इत्यादिविशेषरूपा। तत्र सामान्यरूपा सर्वेषामलङ्काराणां बीजभूतेति सर्वैः स्वीकृता। एतावता सर्वेऽलङ्कारा अस्या एव प्रभेदा इति वक्तुं न युक्तम्। सर्वालङ्काराणां विशेषोक्त्युल्लेखरूपत्वात् सर्वेषां विशेषोक्तेरुल्लेखस्य च प्रभेदत्वापत्तेः। विशेषरूपातिशयोक्तिस्तु अध्यवसित(विषयिणा विषयस्य निगरण)प्रधाना। अध्यवसितस्यालङ्कारान्तरेष्वभावात्, सामान्यलक्षणानाक्रान्तत्वात्, नालङ्काराणामस्याः प्रभेदत्वमिति विमर्शिनीकारः (पृ० २२०-२१)।

अग्रे मूलकारः (पृ०२२९) अस्याः पञ्चसु भेदेषु विषयगतातिशयाख्यप्रयोजनमुद्दिश्याभेदाध्यवसायं स्वीकरोति। "कमलमनम्भसी"त्यत्र वदनकमलयोर्भेदेऽपि वस्तुतस्तयोः सौन्दर्यं भिन्नम्, परं कविप्रतिभासम्पादितसौन्दर्येणाभेदेनाध्यवसितम्। तत्राध्यवसायस्य सिद्धत्वादध्यवसायप्राधान्यम्। अत्र ग्रन्थकारः — वदनादीनां कमलादिभिर्भेदाध्यवसायं नाङ्गीकरोति । अभेदे भेदं इत्यादिभेदेषु अध्यवसायस्याव्याप्तिप्रसङ्गात्।

**विमर्शिनीकारश्च-**

पूर्वत्र (कमलमनम्भसि" इत्यत्र) धर्माणामेवाध्यवसायो योजनीयः, येन सर्वत्रैकपक्षः स्यादिति तात्पर्यार्थः, इत्युक्त्वा ग्रन्थकारस्येमामुक्तिमुपलक्षणतया स्वीकरोति। तस्यायमभिप्रायः— अध्यवसितप्राधान्यमतिशयोक्तिलक्षणम्।

अध्यवसानं धर्माणां भवेद् धर्मिणां वेति, अध्यवसाये विशेषाभावात् कथमव्याप्तिः। प्रत्युत धर्मयोरभेदाध्यवसानस्वीकारे उपमायामतिशयोक्तिप्रसक्तिः स्यात्। उपमायां धर्माणां भेदेऽभेदविवक्षणात्। अत उपमायां धर्मयोः विजातीयत्वेन भेदस्वीकारे धर्मयोरप्यध्यवसानं न स्यात्। अत्र विमर्शिनीकारः पूर्वोक्तं वाचमुक्त्वाह "इत्यलमसङ्गतग्रन्थार्थोदीरणेनेति"। तत्र विमर्शिनीकार एव ग्रन्थविरुद्धमर्थमुदीरयन् ग्रन्थमुपलक्षणतया योजयति।

अत्र दीक्षितमतम्— अप्पय्यदीक्षितोऽतिशयोक्तिलक्षणम्" यत्र उपमेयवाचकशब्दाभावे सति चमत्कारकारितयोपमानवाचकशब्दमात्रेणोपमेयं प्रतिपाद्यते तत्रातिशयोक्तिः" सा च कविप्रौढोक्तिमूलेति कृत्वा—

**विषयस्यानुपादानाद् विषय्युपनिबध्यते।**
**यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता।।**

(चित्रमीमांसा, पृ० ३१९)

तस्याश्चातुर्विध्यमाह। कार्यकारणयोः पौर्वापर्यविपर्ययरूपभेदं न स्वीचक्रे। परमत्र लक्षणविषये किमपि विशिष्टं मीमांसितं दीक्षितेन। तदुपस्थाप्यते। तथा हि— विषयस्यानुपादानादित्युक्तौ अनुपादानपदेन सर्वथैव विषयस्य प्रतिपादकाभावो गृह्यते, उत तद्वाचकाभावो वा। तत्र नाद्यः— "कमलमनम्भसि" इत्यादौ कमलादिशब्दानां लक्षणया विषयभूतमुखादिप्रतिपादकत्वात्। न द्वितीयः "चुम्बतीव रजनीमुखं शशी" इत्यादौ मुखशब्दस्य श्लेषेण विषयस्य (मुखस्य) वाचकत्वात् "अत्र प्रारम्भबोधकमुखपदेन वदनस्य निगीर्णतयाऽतिशयोक्तिर्न स्यात्। विषयिवाचकातिरिक्तविषयप्रतिपादकाभावविवक्षायाम् "रजनीमुखम्" इत्यादौ दोषाभावेऽपि "उन्मीलितानि नेत्राणि पद्मानीवोदिते रवौ" इत्यादौ उन्मीलितशब्दवाच्यार्थेन लक्ष्यार्थस्याध्यवसायरूपातिशयोक्तिव्याप्तिः स्यात्। यतो हि उन्मीलितत्वं नेत्रधर्मः नेत्रञ्चात्रोपमेयम् (विषयवाचकम्), अत उन्मीलितशब्दो विषयप्रतिपादकः, विषयिभूतस्य विकासस्य (उपमानभूतपद्मनिष्ठस्य) लक्ष्यको विषयि-(उपमान) वाचकातिरिक्तस्य (उपमेयस्योन्मीलनस्य) प्रतिपादकशब्दसत्त्वात्।

विषयिप्रतिपादकातिरिक्तविषयप्रतिपादकाभावविवक्षायामत्र दोषभावेऽपि—

**पल्लवतः कल्पतरोर्विशेषः करस्य ते वीर।**
**भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते।।**

इत्यत्र कल्पतरुः कर्णं भूषयति, तव करः कर्णं तिरस्कुरुते इत्युक्तौ कर्णपदस्य श्लेषेण श्रोत्रं राधेयश्चार्थः। परं भिन्नयोः ग्रहणे करस्य वैशिष्ट्यं न सिद्ध्यति। अतो द्वयोरर्थयोरभेदाध्यवसायः। एवं श्लेषमूलकातिशयोक्तावति-

व्याप्तिः स्यात्। विषयविषयिणोः (श्रोत्राधेययोः) पृथक् पृथक् कर्णपदेन प्रतिपादितत्वात्। विषयिप्रतिपादकविलक्षणविषयप्रतिपादकाभावविवक्षायामत्र कर्णपदेनैव प्रतिपादितत्वाद् वैलक्षण्याभावेन दोषाभावेऽपि—

**उरो भुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्।**
**त्रपा सरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत्।।**

इत्यत्र कुम्भयुगपदेनोपमानेन कुचद्वयमुपमेयं निगीर्णम्। परमुरोभुवेति विशेषणेन उरःप्रभवत्वेन रूपेण तत् प्रतिपादितमिति कुम्भयुग इति विषयिप्रतिपादकशब्दाद् विलक्षणस्य उरो भुवेति विषयप्रतिपादकशब्दस्य सत्त्वादव्याप्तिः।

यद्यपि उरःप्रभवत्वेन रूपेण विषयस्य (कुचयुगस्य) प्रतिपादनेऽपि न उरःप्रभवत्वं न विषयतावच्छेदकं तस्यानेकसाधारणत्वाद् विषयप्रतिपादकविलक्षणस्य विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्याभावविवक्षायान्न तत्र दोषस्तथापि—

**ध्वान्तस्य वामोरुविचारणायां वैशेषिकं चारुमतं मतं मे।**
**औलूकमाहुः खलु दर्शनं यत् क्षमं तमस्तत्त्वनिरूपणाय।।**

इत्यत्र उलूकपक्षिदृष्टिवाचकेन औलूकं दर्शनमिति पदद्वये विषयभूतस्य उलूकेन (कणादेन) कणादस्योलूक इति नामान्तरम्, उलूकवत् कणानामदनेन जातं वा प्रोक्तस्य दर्शनस्याध्यवसायरूपातिशयोक्तावव्याप्तिर्दुर्वारैव। वैशेषिकमतस्योलूकदर्शनत्वमिति विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्य विषयिवाचकपदविलक्षणस्य सत्त्वात्।

"रामरावणयोर्युद्धं रामरावणयोरिव" इत्यनन्वयालङ्कारे विषयप्रतिपादकस्य रामरावणयोरिति पदस्य विषयिप्रतिपादकाद् रामरावणयोरिति पदाद् वैलक्षण्याभावेनातिव्याप्तिश्च स्यात्। यद्यपि यस्याभेदेनाध्यवसायः स विषयः येनाध्यवसीयते स विषयी। यथा मुखमुद्दिश्य चन्द्र इत्युक्तौ मुखस्याभेदे नाध्यवसाय इति मुखं विषयः, चन्द्रेण मुखमध्यवसीयते चन्द्रो विषयी, इति विषयविषयिभावविवक्षायां रामरावणयोरित्यादौ नातिव्याप्तिरध्यवसानाभावात्। तथापि "विद्वन्मानसहंस" श्लिष्टरूपकेतिव्याप्तिर्दुर्वारैव। रूपके ताद्रूप्यारोपमात्रं नाभेदाध्यवसायः।

अतिशयोक्तावभेदाध्यवसाय इति कल्पनाया रूपकविचारावसरे निराकृतत्वात्।

**आबद्धकृत्रिमसटाजटिलांशभित्ति-**
**रारोपितो मृगपतेः पदवीं यदि श्वा।**
**मत्तेभकुम्भतटपाटनलम्पटस्य**
**नादं करिष्यति कथं हरिणाधिपस्य।।**

इति सारूप्यनिबन्धनायामतिशयोक्तौ श्वपदेन विषयिवाचकेन मूर्खस्याभेदाध्यवसायात्। (तद्भिन्नविषयतावच्छेदकप्रकारेण विषयप्रतिपादक-शब्दाभावादतिव्याप्तिः सुस्पष्टैव। तस्माद् विषयस्यानुपादानादिति पदमसम्भवदुक्तिकमेव। इत्येतावन्मात्रोपपाद्य चित्रमीमांसा समाप्तिं गता। अतस्तट्टीकाकारो धरानन्दो लक्षयति—

**विषयोल्लेखनमृते विषयाध्यवसायात्माभिधानतः।**
**तस्योक्तिर्व्यङ्ग्यभिन्ना यातिशयोक्तिस्तु सा मता।।**

अर्थादुपमेयवाचकपदं विनैव लक्षणयोपमानवाचकपदस्यैवाध्यवसितस्य व्यङ्ग्यभिन्ना या उक्तिः सा अतिशयोक्तिः। रूपके उपमेयवाचकस्योपादानान्नातिव्याप्तिः।

अप्रस्तुतप्रशंसायामभेदसत्त्वेऽपि सारूप्येण तद्वैपरीत्याध्यवसाया नान्नातिव्याप्तिः। उत्प्रेक्षावारणाय निश्चितेति। अतिशयोक्तौ विषयविषयिणोरभेद एवेति नियमो नास्ति "**सुधाबद्धग्रासैरुपवनचकोरैः**" इत्यादावभेदस्यासम्भवात् ताद्रूप्यातिशयोक्तिस्वीकारात्। अध्यवसानत्वारोपविषयस्यानाहार्यनिश्चययुता आरोप्यमाणतादात्म्येन विवक्षा एव। अत्र तादात्म्यशब्देन क्वचिदभेदः, क्वचित्ताद्रूप्यं ग्राह्यम्, भेदास्तु सर्वे स्वीकृता इति।

**कुवलयानन्दे च** रूपकातिशयोक्तेर्भेदद्वयमाह सापह्नवा निरपह्नवा च। भेदकातिशयोक्तिः सम्बन्धातिशयोक्तिः, असम्बन्धातिशयोक्तिः, अक्रमातिशयोक्तिः, चपलातिशयोक्तिः, अत्यन्तातिशयोक्तिः, एवमष्टविधामाह। वस्तुतः सप्तविधैव। सापह्नवाया मतान्तररीत्योपपादनात्।

अत्र चन्द्रालोकरीत्यैव भेदानामुपपादनात् चन्द्रालोककर्तुर्मतं पृथग्नोपादानमर्हतीति (द्रष्टव्यः, चन्द्रा०, पृ० १२७–३०)

**अलङ्कारचन्द्रिकाकारस्तु–** निगीर्याध्यवसानमेवातिशयोक्तिः, प्रभेदान्तराणामनुगतरूपाभावाद् अलङ्कारारन्तत्वमित्यादिनव्यानां मतमुपपाद्य स्वलक्षमणमाह— वस्तुतस्तु रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोप-निश्चयविषयत्वमतिशयोक्तिसामान्यलक्षणम्। रूपकवारणाय रूपकभिन्नत्वे इति। भ्रान्तिवारणाय आहार्येति, निश्चयेत्यनेनोत्प्रेक्षानिरासः। रूपकातिशयोक्तावभेदस्य,

द्वितीयप्रभेदेऽन्यत्वस्य, तृतीये सम्बन्धस्य, चतुर्थेऽसम्बन्धस्य पञ्चमे सहत्वस्य, षष्ठे हेतुप्रसक्तिजन्यत्वस्य, सप्तमे पूर्वापरत्वयोश्च तथा विरोधारोपविषयत्वसत्त्वात् सर्वत्र लक्षणसमन्वयः।

अत्रैवंविधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वेष्वलङ्कारेषु सत्त्वादतिप्रसक्तिरिति न चिन्त्यम्, इष्टापत्तेः। अलङ्कारान्तराणां चमत्कारे प्राधान्यात् तदलङ्कारत्वेन व्यपदेशः। अतिशयोक्तिङ्गतेष्वङ्गरूपतया स्थितेति अप्रधाना। अतो नातिशयोक्तित्वेन व्यवहारः। प्राधान्येन व्यपदेशा भवन्तीति न्यायात् सर्वत्रातिशयोक्तेः स्वीकारादेव विशेषालङ्कारे प्रकाशकृताऽभिहितम्— "सर्वत्रैवं विधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते। तां विना प्रायेणालङ्कारत्वाभावात्। अत एवोक्तम्—

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविभिः कार्यः कोऽलङ्कारोऽनया विना।।**

(काव्यालङ्कारः, २/८५)

**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्।।**

(काव्यादर्शः, २/२२०)

**अच्युतरायः** साहित्यसारे पूर्वाचार्यैः कृतान् सर्वान् भेदानुपपादयामास। तथा हि—

**वर्ण्ये गुणैरतिशयस्योक्तौ सा सप्तधा मता।**
**रूपकातिशयोक्त्यादिभेदेनानितरान्विता।।**

(साहित्यसारः, पृ०४२५३०)

**सरसामोदे च** परिष्कृतं लक्षणम्—

"विषयविषयकविषयितत्साधारणासाधारणधर्मान्यतमनिमित्तकोत्कर्षविशेषाधायकवाक्यकरणकधीविषयत्वमतिशयोक्तित्वम्" इति।

(पृ० ४२५-३०)

अत्रासाधारणपदेन वैधर्म्यरूपकातिशयोक्तिभेदकातिशयोक्त्याद्यखिल-भेदसङ्ग्रहः। साधर्म्यरूपकातिशयोक्तावव्याप्तिवारणाय साधारणेति। धर्मनिमित्तकेत्यनेन धर्मलुप्तोपमायान्नातिव्याप्तिः। आधिक्य-रूपकादावतिप्रसक्तिनिरासाय उत्कर्षविशेषेतीति लक्षयित्वा नवीनमतं निरास्थत्। तथा हि, नवीनाः कथयन्ति यत्— "निगीर्याध्यवसानमेवातिशयोक्तिः, प्रभेदान्तरं तु अनुगतरूपाभावादलङ्कारान्तरमेवेति" तत् परास्तम्। निरुक्तसामान्यलक्षणनेनानुगतरूपोक्तेरिति। (सा०सा०, पृ०

४२६)। अनन्तरं भेदान्निरूपयन् कुवलयानन्दकृद्रीत्याऽस्याः सप्तविधत्वमुपपाद्य, सरस्वतीकण्ठाभरणकृद्रीत्या "सूक्ष्मातिशयोक्तिः, कान्त्यतिशयोक्तिश्चेति" भेदद्वयमाह। ततो यद्यादिशब्दतः सम्भावितां मम्मटसम्मतामतिशयोक्तिं न्यरूपयदिति।

विश्वेश्वरस्तु

**अप्रकृतेन निगीर्णे साध्यवसानाऽश्रयात् प्रकृते।**
**प्रकृतस्यान्यत्वोक्तौ यद्येवं स्यात्तथापत्तौ।।**
**स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः।।**

(अ०कौ०, पृ. २७७)

इत्युक्त्वा रूपकादस्या भेदं निरूपयन्नाह— रूपके तु (उपमेयवाचकस्य) मुखादिपदस्यापि प्रयोगादाहार्यैवाभेदबुद्धिः। एवञ्च मुखादीनां चन्द्राभिन्नत्वेनोपस्थितौ रूपकम्, चन्द्रत्वेनोपस्थितौ त्वतिशयोक्तिरिति निष्कर्षः।

इत्थम् "उपमेयतावच्छेदकधर्मावच्छिन्नविशेष्यता-निरूपिताभेदसंसर्गकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिबोधत्वं सारोपलक्षणायाः, उपमेयतावच्छेदकधर्मावच्छिन्नोपमेयनिष्ठविशेष्यताकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिबोधत्वं च साध्यवसानलक्षणायाः कार्यतावच्छेकमिति रहस्यम्"। इत्युपपाद्य प्रायशः सर्वान् भेदानुदाजहार। तत्र विशेषः— अन्ये गौणसाध्यावसानलक्षणयाभेदोपचारे एवातिशयोक्तिमुचुः, अयं शुद्धसाध्यवसानलक्षणयाऽभेदोपचारेऽपि। साहित्यदर्पणकृतोक्तस्य हेत्वलङ्कारस्यात्रैवान्तर्भावः। एवमुल्लेखाऽलङ्कारोऽपि न पृथगलङ्कार इति न्यायपञ्चाननादिरित्योपपादितः। उल्लेखस्य भेदेऽप्यभेदरूपप्रथमातिशयोक्तावेवान्तर्भावः। सम्भावनमिथ्याध्यवसित्योरपि तृतीयभेदेऽन्तर्भावात् न पृथगलङ्कारता। अतो यत्केनचिदुक्तम्- "असम्बन्धे सम्बन्धरूपातिशयोक्तितः किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनाविच्छित्तिविशेषेण मिथ्याध्यवसितेर्भिन्नत्वम्" इति, तदसत्। यद्यर्थोक्तिरूपातिशयोक्तेर्विशेषस्य दुर्वचत्वात्। "राकायामकलङ्कं चेत्" इत्यादावपि तन्मुखस्यान्यसदृशतया मिथ्याभूतायाः सिद्ध्यर्थे मिथ्याभूताया राकाचन्द्रिकायाः कलङ्कतया कल्पना विशेषादिति। एवम्—

**प्रौढोक्तिरुत्कर्षाहितौ तद्धेतुत्वप्रकल्पने।**
**कचाः कलिन्दजातीरतमालस्तोममेचकाः।।**

अत्र तमालानां श्यामताहेतुत्वं यमुनाप्ररूढत्वं नास्ति। निमित्तकारणगुणानां कार्यगुणाजनकत्वात्। तथापि श्यामलतातिशयकथनात्

प्रौढोक्तिरलङ्कार इति। तदपि न, तत्रापि यदि यमुनातीरप्ररोहणेन तमालानां नीलत्वातिशयः स्यात्तदा केशानां श्यामतोपमा स्यादित्यत्रैव तात्पर्यादिति तृतीयातिशयोक्तावेवान्तर्भावः। कुत्रचिद् व्यङ्ग्यासमालङ्कारेणैव प्रौढोक्तेर्गतार्थत्वाद् उत्प्रेक्ष्य एव प्रौढोक्त्यलङ्कार इति। एवमलङ्कारान्तरान्तर्भावमुपपाद्य रसगङ्गाधरकृन्मतम् "अत्र नवीना" इति कृत्वा अतिशयोक्तिप्रभेदानामलङ्कारान्तरत्वोपपादकत्वमुट्टङ्कयामास।

## दीपकालङ्कारः

तत्र मम्मटमतम्– मम्मटाचार्यः प्राकरणिकाप्रकारणिक(उपमेयोपमान)–रूपधर्मिणां गुणक्रियादिरूपस्य धर्मस्य यत् सकृदुपादानं तद्दीपकम् (क्रियादिदीपकमेकम्) बह्वीषु क्रियासु सतीषु "कर्तृ–कर्म–करण-सम्प्रदानापादानधिकरणेषु षट्कारकेषु कस्याप्येकस्य सकृदुपादानमेव द्वितीयं दीपकमित्युक्तप्रकारद्वयवद्दीपकम्। तदुक्तम्–

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।।**

(काव्यप्रकाशः, १०/१०३, सू० १५६)

इत्थं दीपकं द्विविधम्— एकस्य धर्मस्य एकवारं प्रस्तुताप्रस्तुतोभयवृत्तित्वे एकम्। एकस्य कारकस्य एकवारमेवानेकासु क्रियासु सम्बन्धे इति द्वितीयम्। (वामनीमनुस्मृत्यैषोऽर्थः)। अत्र प्रकृताप्रकृतयोः सजातीयधर्मसम्बन्धस्योपमायां पर्यवसानेऽपि इवादिवाचकशब्दाभावाद् उपमा व्यङ्ग्या। परं वाच्यस्योपकारकत्वादि गुणीभूता उद्द्योते।

अत्र प्रथमप्रभेदे उपमाप्रतीतिं विनापि वाक्यार्थस्य पर्यवसानादुपमा प्रथमं न बुद्धिपथमारोहति। अतो नात्रोपमा वाच्या, अपि तु व्यङ्ग्यभूता। एकस्यापि धर्मस्य द्विरावृत्तेः न प्रतिवस्तूपमा वाक्यद्वयस्याभावेन च न दृष्टान्तः। इत्थं दीप इव दीपकम् "संज्ञायां च" इति पाणिनीयसूत्रेण (५/३/९७) प्रकृतिप्रत्ययसमुदायेन संज्ञायां गम्यमानायामिवार्थे कन् प्रत्ययः। प्रस्तुताप्रस्तुतप्रकाशकत्वेन सादृश्यम्। प्रस्तुतैकनिष्ठः समानो धर्मः प्रसङ्गादन्यत्र (अप्रस्तुतेऽपि) उपकरोति प्रासादार्थमारोपितो दीपो रथ्यायामिवेति दीपसाम्याद् दीपकम्।

अन्ये तु प्रकृतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति (सुन्दरीकरोति) इति दीपकम्। दीपी दीप्तौ इति दैवादिकाद् धातो "ण्वुलतृचौ" (पा०सू० ३/१/१३३) इति सूत्रेण कर्तरि ण्वुल् प्रत्ययः, तस्य च "युवोरनाकौ" (पा०सू० ७/१/१) इत्यनेनाकादेशे दीपकशब्दसिद्धिमाहुः।

मतद्वयेऽपि सकलवाक्योपकारकत्वं दीपकत्वमिति फलितम्। तत्र प्रथमं दीपकमपि धर्मस्य क्रियागुणरूपत्वात् क्रियादीपकं गुणदीपकमिति द्विविधम्। तत्र मम्मटाचार्यः क्रियादीपकमुदाहरति—

**किवणणं धण णाआणं फणामणी केशराइं सीहाणं।**
**कुलवालि आणं त्थणआ कुत्तो छिप्पन्तिअमुआणं।।**

अस्य संस्कृतम्—

**कृपणानां धनं नागानां फणामणिः केसराः सिंहानाम्।**
**कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्।।**

अत्र वर्णनीयतया प्रस्तुताः कुलबालिकास्तनाः सन्ति तदुपमानतयाऽप्रस्तुताः कृपणधननागफणामणिसिंहकेसराश्च सन्ति। तत्र स्पर्शनक्रियारूपो धर्मः प्रस्तुतार्थं सकृदुपात्तो प्रस्तुतान् सर्वानुपकरोतीति क्रियादीपकम्। गुणदीपकं यथा—

**श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः।**
**भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः।।** इति।

अत्र श्यामला इति गुणवाचकं पदं सकृदुपात्तम्। दिशः भुवश्चोपकुरुते। इति गुणदीपकम्। क्रियादीपके क्रियापदेन तिङन्ततुमुन्नन्तादिपदवाच्या सत्त्वभूता क्रिया गृह्यते कारकस्य क्रियासु च इत्युक्त्या प्रतीयते। असत्त्वभूतायाः क्रियायाः उपमानत्वाभावः, "न वै तिङन्तेनोपमानमस्ति" इत्यनेन "धातोः कर्मणः समानकर्तृकादिच्छायां वा (पा०सू० ३/१/१७) इति सूत्रस्थमहाभाष्येणावगम्यते। अतः कारकदीपके उपमानोपमेयभावाप्रतीतिः गुणक्रियादीपकयोस्तत्प्रतीयते इति तयोर्भेदः। एककर्तृकत्वादिधर्मकृतसादृश्ये "चमत्काराभावाच्च"। इदं कारकदीपकं प्रस्तुतानामप्रस्तुतानामेव प्रस्तुताप्रस्तुतं च भवति। एतेन दीपके सर्वत्रौपम्यस्य गम्यत्वादस्य दीपकत्वं चिन्त्यम्। स्विद्यतीत्युदाहरणे क्रियाणां सादृश्यावगतावपि सर्वासां प्रकृतत्वात् कारकतुल्ययोगितात्वमेवोचितमिति परास्ताम्।

## कारकदीपकस्योदाहरणम्

**स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यग्।**
**अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने।।** इति।

अत्र स्विद्यति कूणतीत्याद्यनेकासु क्रियासु वधूरिति एकस्य कर्तृकारकस्य शयने इत्यधिरणकारकस्य वा। सकृदुपादानात्कारकदीपकम्। अत्र सर्वाः क्रियाः प्राकरणिकाः सन्ति। मालादीपकमपि भवति। तदुक्तम्—

**''मालादीपकमाद्यं चेद् यथोत्तरगुणावहम्''**। इति। (का०प्र० १५७)

अर्थात् पूर्वं-पूर्व-वस्तु उत्तरमुत्तरं वस्तु प्रति उपकारकं चेन् मालादीपकं भवति। उदाहरणं यथा—

**सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते**
**देवाकर्णय येन येन सहसा यद्यत् समासादितम्।**
**कोदण्डेन शराः शरैररिशिरस्तेनाऽपि भूमण्डलं**
**तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्।।**

अत्रैकस्या आसादनक्रियायाः सर्वत्र सम्बन्धाद् दीपकम्। अत्र पूर्वोक्तकोदण्डेन समासादनक्रियाद्वारेण परोक्ताः शरा उपक्रियन्ते। एवं पूर्वपूर्वोक्तेन परपरोक्ता उपक्रियन्ते। यथा मालायां पूर्वग्रथितपुष्पाणामुत्तरोत्तरधारणादुपकारकत्वं तद्वदत्रापीति बोध्यमिति सारबोधिनीकृत्।

**पण्डितराजश्च–** ''प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम्'' इति लक्षयामास (र०गं०, पृ०५९, तृ०भागः) अत्र तुल्ययोगितावदौपम्यं गम्यं भवति। परं तुल्ययोगितायामुपमानोपमेयभाव ऐच्छिको भवति। इह तु अप्रस्तुतस्योपमानत्वात् प्रस्तुतस्योपमेयत्वान्निश्चितो भवतीति विशेषः। प्रस्तुतार्थमुपात्तो धर्मः प्रसङ्गादप्रस्तुतमपि दीपयति प्रकाशयति सुन्दरीकरोतीति दीपकम्। यद्वा दीप इव दीपकम्, संज्ञायां कन् दीपसादृश्यं प्रकृताप्रकृतप्रकाशकत्वेनेति। उदाहरणं यथा—

**अमृतस्य चन्द्रिकाया ललितायाश्च कवितायाः।**
**सुजनस्य च निर्माणं जनयति नहि कस्य सन्तोषम्।।**

अत्रामृतादेरप्रस्तुतस्य सुजनस्य प्रस्तुतस्य च निर्मितिरूपक्रियात्मैकसाधारणधर्मेण सहान्वयाद् दीपकम्।

**मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते।**
**सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा।।**

अत्र मृतादीनां लिप्सादेरप्रकृतस्य कुलटानिष्ठस्वकान्तविषयकप्रीतेश्च दृष्टपूर्वत्वाभावात्मकेनैकेन साधारणधर्मेणान्वयाद् दीपकम्।

कस्यचित्प्रस्तुतत्वेऽपरेषामप्रस्तुतत्वे एव दीपकं भवति। सर्वेषां प्रस्तुतत्वेऽप्रस्तुतत्वे वा तुल्ययोगितैव भवति। यत्र क्रिया साधारणो धर्मस्तत्र यदि केवलानां प्रस्तुतानामप्रस्तुतानां वा सम्बन्धवशात् तुल्ययोगिता प्रस्तुताऽप्रस्तुतोभयान्वयवशाद् दीपकं वा भवेत् तदा कर्तृकर्मादिकारकाणां

स्वस्वजातीयेन सह पृथक् पृथगन्वयो भवति। यतो हि कर्तुः कर्त्रा सह कर्मणः कर्मणा सहैवौपम्यस्य पृथक् पृथगेव प्रतीतिर्जायते। यथा–

**सुजनाः परोपकारं शूराः शस्त्रं धनं कृपणाः।**
**कुलवत्यो मन्दाक्षं प्राणात्यये एव मुञ्चन्ति।।**

अत्र प्रस्तुतस्य सुजनस्याप्रकृतानां शूरकृपणकुलवतीनाम्, एकस्यां मोचनक्रियायां कर्तृतयान्वयाद् दीपकम्। एवं परोपकार–शस्त्रधन–मन्दाक्षाणां (कर्मणां) प्रस्तुताप्रस्तुतानां कर्मत्वेनैकस्यां मोचनक्रियायामन्वयाद् दीपकम्। तत्र सुजनाः प्राणात्यये एव परोपकारं मुञ्चति, शूराः प्राणात्यये एव शस्त्रं मुञ्चन्ति, इति पर्यन्ते यथा सुजनास्तथा शूरा इत्युपमा व्यज्यते। एवं कर्तुः कर्त्रा सहोपमा। एवं यथा परोपकारस्तथा शस्त्रधनादय इति कर्मणां मिथ औपम्यं व्यज्यते। इति कर्तृणां पृथग्दीपकम्, कर्मणां पृथगिति। अत्र यदि सुजनप्रशंसापरमिदं पद्यं तदा सुजनस्य प्रस्तुतत्वादन्येषामप्रस्तुतत्वाद् दीपकम्। यदि सामान्येन निरपेक्षस्य कस्यचित् सामान्येनोक्तिस्तदा सर्वेषामप्रस्तुतत्वात् तुल्ययोगितेति दिक्।

अत्र मम्मटभट्टानां मतमुपपादयन्नाह—

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।।**

इति यत् काव्यप्रकाशकृद्भिः दीपकस्य लक्षणद्वयमुक्तम्, तत्र कारकदीपकमुदाहृतं तैः—

**स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक्।**
**अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने।।** इति।

तत्र विचार्यते– स्विद्यतीत्यादि पद्ये स्वेदादिषु बह्वीषु क्रियासु एकस्यैव कर्तृकारकस्य (वधूरूपस्य) शयनरूपस्याधिकरणकारकस्य वृत्याऽत्र कारकदीपकमिति तत्सङ्ग्रहाय दीपकस्य द्वितीयं लक्षणम्—

**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।**

इत्युक्तम्, तद्व्यर्थम्। गुणितां कारकाणां च गुणक्रियारूपधर्मस्येव क्रियाणामपि कारकरूपधर्मस्य सकृद्वृत्तेः सत्त्वात् प्रथमलक्षणेनैव सङ्ग्राह्यत्वात्। प्रथमलक्षणे प्रस्तुताप्रस्तुतानां धर्मस्य सकृद्वृत्तित्वे दीपकं भवति "प्रकृताप्रकृतात्मनाम्" इत्युक्तेः। परं कारकदीपके केवलप्रस्तुतानां केवलाप्रस्तुतानामपि क्रियाणां कारकस्य सकृद्वृत्तित्वे दीपकमिति भेदाद् द्वितीयं लक्षणं सङ्गतमिति न शङ्क्यम्, केवलप्रस्तुतानामप्रस्तुतानां वा

क्रियाणां कारकरूपस्यैकधर्मस्य सकृद्वृत्तित्वे दीपकस्वीकारे कारकतुल्ययोगिताया उच्छेदः। सकलालङ्कारिकसिद्धान्तविरोधश्च स्यात्। कारकतुल्योगिताया उदाहरणं यथा—

**वसु दातुं यशो धातुं विधातुमरिमर्दनम्।**
**त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान्।।**

अत्र राज्ञः स्तुतिकर्तुः वाक्ये प्रकृतानां क्रियाणामेकेन साधारणधर्मेण (कर्तृरूपेण) अन्वयस्य वर्णनात् कारकतुल्ययोगितासत्त्वात् (र०गं०,पृ०५५-५६)।

अपि च— पूर्वलक्षणे प्रस्तुताप्रस्तुतानां केवलाप्रस्तुतानां वा क्रियाणां कारकरूपैकधर्मान्वये दीपकमिति द्वयोर्लक्षणयोरनुगतरूपाभावोऽपि बोध्यः। अत्र द्वयोर्दीपकयोः पृथक् पृथग् लक्षणं विधाय लक्षणद्वयान्यतरवद् दीपकमिति लक्षणस्वीकारे न दोष इति वक्तुं न शक्यम्, गौरवग्रस्तत्वात्। अगत्या गौरवस्वीकारोऽपि न युक्तः उक्तरीत्या सर्वेषामलङ्काराणां लक्षणं विधाय एष्वन्यतमत्वं दीपकत्वमित्युक्त्या सर्वेषामलङ्काराणां दीपकभेदप्रसक्त्या उपमाद्युच्छेदापत्तेः।

इत्थं दीपकस्य युक्त्या भेदद्वयस्यास्वीकारे "स्विद्यति कूणती"त्यादौ सर्वासां क्रियाणां शुद्धप्रस्तुतत्वात् न कारकदीपकम्, प्रकृताप्रकृतत्वे एव दीपकाङ्गीकारात्, अपि तु कारकतुल्ययोगितैव। किं च– दीपकतुल्ययोगितादौ गम्यमानमौपम्यं प्राणभूतमिति सर्वसम्मतम्, "स्विद्यति कूणती"त्यादौ स्वेदनकूणनादीनां क्रियाणामेककारकान्वितानामपि मिथः उपमा कविवर्णनविषयीभूता न वर्तते। केवलस्वभाववर्णने कवितात्पर्यात्। तस्मात् समुच्चयालङ्कारस्यात्र च्छायास्ति। अत्र भवदुदाहृते– "वसुं दातुं यशो धातुम्" इति "वासयति हीनसत्त्वान्" इत्यादौ च राजकर्तृकाणां हीनसत्त्ववासादीनां क्रियाणां वसुदानादीनां च पद्यद्वयगतानां क्रियाणां मिथः सादृश्यं न प्रतीयत इति वक्तुमशक्यम्। सहृदयहृदयप्रमाणत्वात्। यदि "स्विद्यति कूणती"त्यादावपि क्रियाणां मिथः सादृश्यं प्रतीयत एवेत्याग्रहस्तदा तत्र सर्वासां क्रियाणां प्रकृतत्वात् तुल्ययोगिता स्यात्, न दीपकमिति। दीपकस्य प्रकृताप्रकृतत्वात्।

अत्र विशेषः— पण्डितराजोऽत्र विशेषमुद्भावयन्नाह— तुल्ययोगितादीपकयोः विच्छित्तौ गुणक्रियादिरूपस्य धर्मस्य सकृदुपादानमेव मूलम्। उभयत्र चमत्कारजनकस्य धर्मस्य सकृद्वृत्तित्वस्य समानत्वात्, चमत्कारे भेदाभावः। अलङ्कारभेदे च चमत्कारभेदो मूलम्। अतस्तुल्ययोगितातो दीपकं न पृथगलङ्कारः। अत्र धर्मस्य (गुणक्रियादि) सकृदवृत्तित्वसमानेऽपि

तुल्ययोगितायां धर्मिणां केवलप्रकृतानां केवलाप्रकृतानां वा सत्त्वाद् दीपके च धर्मिणां प्रकृताप्रकृतानां च सत्त्वाद् भेदः सुस्पष्ट एवेति नाशङ्कनीयः।

एवमवान्तरभेदादलङ्कारभेदस्वीकारे तुल्ययोगितायामपि अलङ्कारद्वयापत्तेः, धर्मिणां केवलप्रकृतानां केवलाप्रकृतानां वा भेदात्। श्लेषालङ्कारेऽपि सखण्डाखण्डभेदेनालङ्कारद्वयापत्तेः। एवं सर्वेष्वलङ्कारेषु अवान्तरभेदवैलक्षण्याद् अलङ्कारभेदापत्तेः। अत्रोपमेयं प्रकृतं भवति उपमानमप्रकृतं भवति। दीपकं च प्रकृताप्रकृतयोर्भवति। अतो दीपके उपमानोपमेयभावसत्त्वाद् वास्तवमौपम्यं व्यङ्ग्यं भवति, तुल्ययोगितायां च द्वयोः प्रकृतत्वाद् द्वयोरप्रकृतत्वाद् वा उपमानोपमेयस्वरूपाभावात्, विवक्षाधीनमौपम्यमस्तीति दीपकतुल्ययोगितयोर्वैलक्षण्यम्, इत्यपि न वाच्यम्। उपमेयं प्रकृतमुपमानं चाप्रकृतं भवतीति नियमाभावात्। उपमेयोपमायां "खमिव जलं जलमिव खम्" इत्यादौ "मुखमिव चन्द्रः" प्रतीपे च प्रकृतस्योपमानताया अप्रकृतस्योपमेयतायाश्च दर्शनात्। सत्याग्रहे उपमेयोपमायां प्रतीपे चौपम्यानापत्तेः।

तस्मात् तुल्ययोगिताया एव भेदो दीपकम्, तस्यास्त्रिरूपत्वात्। प्रकृतानामेव धर्मस्य सकृदवृत्तित्वे एका, अप्रकृतानामेव धर्मस्य सकृद्वृत्तित्वेऽपरा, प्रकृताप्रकृतानां धर्मस्य सकृदवृत्तित्वे तृतीयेति, दीपकस्य तुल्ययोगितारूपत्वात्। प्राचीनैः कृते विभागे किञ्चित् तत्त्वं भेदकमन्तरा दुराग्रहमात्रमेवेति नव्याः (अत्र नव्या इत्यनेन नान्ये केचनापि तु ग्रन्थकार एवेति)।

एवम् "उत्तरोत्तरस्मिन् पूर्वपूर्वस्योपकारतायां मालादीपकं भवति"। यथा—

**आस्वादेन रसो रसेन कविता काव्येन वाणी तया**
**लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना।**
**दारिद्र्यानलदह्यमानजगती पीयूषधाराधर**
**क्षोणीनाथ तया भवांश्च भवता भूमण्डलं राजते।।**

अत्र प्रस्तुतस्य राज्ञो प्रस्तुतानां रसादीनाञ्च भासनक्रियारूपैकधर्मेणान्वयाद् दीपकम्, पूर्वपूर्वस्योत्तरोत्तरं प्रत्युपकारित्वान्मालादीपकमिति। अत्र रसादीनां मिथः सादृश्याप्रत्ययात् वस्तुतो न दीपकम्। किन्त्वेकावल्या द्वितीयः प्रभेदः। यतो हि— "सैव शृङ्खला संसर्गस्य विशेष्यविशेषणभावरूपत्वे एकावली" इति तल्लक्षणम्। सा च

पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वे प्रथमा, विशेषणत्वे द्वितीयेति प्रतिपादनात्। प्राचामनुरोधादस्माभिरुदाहृतम्। अतो मालादीपकालङ्कारो नैव भवति।

अत्र दोषाः— गुणक्रियादेः धर्मस्यैकरूपेण धर्मिषु लिङ्गवचनभेदादनन्वयो दोषः। यथा– "आस्वादेन रसो रसेन कविते"त्यादिपद्ये "भासते" इति क्रियाया एकवचनेन "आस्वादेन रसो भासते रसेन कविता भासते इत्यादिरीत्याऽन्वेति, परम्— "आस्वादेन रसो रसेन रसिकाः सामाजिकास्तै सभा" इति पाठे भासते इति क्रियाया रसेन रसिका इत्यादावनन्वयाद् दोषः। वचनविपरिणामेनान्वयेऽपि यथोपमायां दोषस्तथाऽत्रापि बोध्यम्।

अत्र दुष्प्राप इति जहल्लिङ्गानामार्थो धर्मः स च कवितायां परिणाम दुष्प्राप इत्यत्रान्वेति, परं "जगति नरजन्म" इत्यादौ लिङ्गभेदान्नान्वेतीति दोषः। यदि "तपसा नाल्पेन शक्यते लब्धुम्" इति पाठः क्रियते तदा न दोषः। एवं पुरुषकालभेदोऽपि दोष एव। एवं दीपकदोषानुद्भाव्य पण्डितराजः काव्यप्रकाशकृदुक्ते मालादीपकोदाहरणेऽपि दोषमुद्घाटयति, तथा हि—

**सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते**
**देवाकर्णय येन येन सहसा यद्यत् समासादितम्।**
**कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं**
**तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्।।** इत्यत्र।

कोदण्डेन शरा इत्यादौ "समासादितम्" इति क्रियापदं नान्वेतीति। अत एवोक्तम्— "इति प्राचीनानां पद्ये दीपकांशेऽपि सदोषमेवेति।

अत्र पण्डितराजमतस्य निष्कर्षः—

१– मम्मटोक्तेन प्रथमदीपकलक्षणेन "सकृद्वृत्तिस्तु धर्मस्य प्रकृताऽप्रकृतात्मनाम्" इत्यनेनैव दीपकस्य द्वयस्य सङ्ग्रहाद् द्वितीय–दीपकलक्षणं व्यर्थम्।

२– लक्षणद्वयस्यानुगतत्वाभावः।

३– क्रियाणां शुद्धप्रकृतत्वात् "स्विद्यति कूणति" इत्यादितुल्ययोगिताया उदाहरणम्, न दीपकस्य।

४– वस्तुतोऽत्र औपम्यस्य गम्यमानत्वाभावे न दीपकम्, न वा तुल्ययोगिता, प्रत्युत समुच्चयाऽलङ्कारः।

५– यदि अत्रौपम्यस्य प्रतीतिरस्त्येवेत्याग्रहस्तदा सर्वासां क्रियाणां प्रकृत-त्वात्तुल्ययोगितैव न दीपकम्।

६– वस्तुतस्तुल्ययोगिताभेद एव दीपकम्, न तु ततः पृथक्। पृथगलङ्कारताभिधाने प्राचीनानां दुराग्रह एव।

७– मालादीपकं नैव भवति, वस्तुतस्तु एकावली तत्र।

८– सङ्ग्रामाङ्गणमागतेनेति पद्यं दीपकांशेऽपि सदोषमेवेति। एवमष्टविधो मतभेदः आयाति।

तत्रोद्द्योतरीत्या निराकरणम्—

(१) तत्र कारकदीपकं त्रिविधं भवति— प्रकृतानामेव, अप्रकृतानामेव, प्रकृताप्रकृतानां चेति। (अनेक चमत्कारिक्रियावैशिष्ट्येन वर्ण्यकारकोत्कर्षकतया चमत्कारित्वेनास्यालङ्कारत्वम्) तत्र "स्विद्यति कूणति" इत्याद्युदाहरणैः सर्वाः क्रियाः प्रकृता एव सन्ति। तासु एकस्य कारकस्य सकृदुपादानाद् दीपकम्। अप्रकृतानामेव यथा—

**दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति।**
**भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति।।**इति।

अत्र सर्वाः क्रियाः अप्रस्तुता एव सन्ति। प्रकृताप्रकृतानां यथा—

**वसुदातुं यशो धातुं विधातुमरिमर्दनम्।**
**त्रातुं च मादृशान् राजन् अतीव निपुणो भवान्।।**

अत्र वसुदानस्वत्राणरूपे क्रिये प्रस्तुते स्तः। अरिमर्दनयशोधानरूपक्रिये चाप्रस्तुते स्तः। तत्र तासु नृपस्य कारकस्यान्वयः। "अत्र तुमुन् प्रत्ययेन असरूपत्वभूत एव भावोऽभिधीयते। तदुक्तं नागोजिभट्टैः— "तुमुनादीनामसत्त्वरूपो भाव एवार्थः" "अव्ययकृतो भावे" इत्युक्ते" (वै०सि०ल०म०कृदर्थविचारे,पृ०५४) गुणक्रियादीपके तु प्रकृताप्रकृतानामेव भवतः, "सकृद्वृत्तिस्तु धर्मस्य प्रकृताऽप्रकृतात्मनाम्" इत्युक्तेः। अतः कारकदीपके न प्रथमलक्षणप्रसक्तिरिति।

(२) धर्मस्य (गुणक्रियादिरूपस्येव कारकस्य सकृद्वृत्तित्वसत्त्वात् लक्षणलक्ष्यस्यानुगतत्वात्) विचारणीयातिव्याप्तिस्तुल्ययोगितायाम्।

(३) "स्विद्यति कूणति" इत्यादौ "न वै तिङन्तेनोपमानमस्ति" इति भाष्येण (सन्विधायकसूत्रस्थेन) "धातोः कर्मणः समानकर्तृकादिच्छायां वा" (पा.सू.३/१/१७) क्रियासु मिथः औपम्यप्रतीतेरभावान्न तुल्ययोगिता। द्वितीयं दीपकं व्यङ्ग्योपमाया अप्रतीतावपि भवति। तुल्ययोगिता तु औपम्यगर्भैव भवति।

(४) नात्र समुच्च्यालङ्कारः। समुच्चये सर्वासां क्रियाणां यौगपद्यं भवति। तदुक्तं मम्मटेन– "सा त्वन्यो युगपद् या गुणक्रिया (का०प्र०, १०/११६)। अत्र स्विद्यत्याद्याः सर्वाः क्रियाः क्रमिका एव सन्ति इति।

(५) पञ्चमस्य निराकरणमौपम्यप्रतीतेरभावादेव निरूपितम्।

(६) पृथगलङ्कारतायां चमत्कारवैलक्षण्यं मूलम्। वस्तुतो दीपके दीपसाम्येन चमत्कारः, प्रासादार्थं प्रज्वालितो दीपो रथ्यायामाप्युपकरोति तथैव प्रस्तुतार्थमुपात्तो धर्मो अप्रस्तुतमप्युपकरोति। तुल्ययोगितायां नैतत्, तत्रोपात्तो धर्मः प्रस्तुतानेवोपकरोति, अप्रस्तुतानेव वेति भेदः।

(७) मालादीपकं नैकावली प्रभेदः। मालादीपके पूर्वं पूर्वं वस्तु उत्तरमुत्तरं वस्तु प्रति उपकारकं भवति। एकावल्यां तूत्तरमुत्तरं वस्तु पूर्वं पूर्वं वस्तु उत्कर्षयतीति भेदात्। तदुक्तं मम्मटेन— "पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैरेकावली भण्यते" इति।

(८) "सङ्ग्रामाङ्गणमागतेन" इत्यादिपद्यमभवन्मतयोगदुष्टमपि दीपकांशेऽपि दुष्टम्, लिङ्गवचनभेदात्। परं समासादितश्च समासादितं च समासादिता चेति विग्रहे "नपुंसकमनुपुंसकेनैकवच्चास्यान्यतरस्याम्" (पा०सू०) एकशेषे एकवद्भावे च निष्पन्नं "समासादितम्" इति पदं सर्वान् बोधयतीति युक्तमेव। अत्र स्फुटाप्रतिपत्तिर्न जायते इति चेत्, केषां न जायते? अविदग्धानाम्, विदग्धानां वा? अविदग्धानां न जायते तदा काव्यस्य को दोषः। विदग्धानां न जायते इति वक्तुं न शक्यते। तस्मात् सर्वेषां दोषाणां परिहारोऽस्त्येवेति।

## अत्रेतिहासदृष्ट्या विचारः

अत्र पण्डितराजेनोद्भाविताः प्रायः सर्वे आक्षेपा न सर्वथा स्वोपज्ञा, अपि तु तत्र मूलमलङ्कारसर्वस्वस्य टीका विमर्शिनी, कुवलयानन्दप्रभृतयः, तथा हि विमर्शिन्याम्– दीपकतुल्ययोगितयोर्मूले निरूपितं भेदमभिधाय दीपके उपमावाचकानामिवादीनां प्रयोगाभावादुपमा गम्या भवति, सा च वास्तविकी। तुल्योगितायां शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा वैवक्षिक उपमानोपमेयभावः। यतो हि उपमेयं प्राकरणिकं भवति। उपमानमप्राकरणिकमिति तुल्ययोगितायां कुत्रचित् प्राकरणिका एव सन्ति कुत्रचिदप्राकरणिका इति न तत्र वास्तवमौपम्यमिति। इत्यादिनिरूप्योक्तम्– इयानेव च दीपकतुल्ययोगितयोर्विशेषोऽस्ति इत्यप्यनेन दर्शितम्। न चैतावताऽनयोः पृथग् लक्षणं युक्तम्। औपम्यगर्भत्वाख्यस्य सामान्यस्य द्वयोरप्यनुगतत्वात्। एवं च समुच्चयोपमादेरपि पृथग् लक्षणं स्यात्। ग्रन्थकृता पुनश्चिरन्तनानुरोधात् कृतम् (पृ०२४४)।

एतदेव विशदयन्नाह पण्डितराजः— वस्तुतस्तुल्ययोगिताया भेद एव दीपकम्, पृथगलङ्कारताभिधाने प्राचीनानां दुराग्रह एवेति। एवं "स्विद्यति कूणती"त्यादि पद्ये समुच्चयालङ्कारस्य च्छाया या पण्डितराजेन दर्शिता तस्या अपि मूलं विमर्शिनी एव। तथा हि— तत्र (२४८पृ०) "स्विद्यति - शयने" इत्यत्र तु स्वेदनादीनां क्रियाणां प्रस्तुतानामेकाधारगतत्वेन समुच्चीयमानत्वाच्च समुच्चयाऽलङ्कारो न तु कारकदीपकम्। तद्धि प्रस्तुताप्रस्तुतानां क्रियाणामौपम्यसद्भावे भवति। एवं सर्वक्रियाणां प्रस्तुतत्वेऽपि समुच्चयस्यौपम्याभावादेव तुल्ययोगितातोऽपि भेदः। औपम्यसद्भावे तुल्ययोगितैव।

अनन्तरं सर्वस्वकारः— "पूर्वस्य पूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम्" इति लक्षयित्वा आह— उत्तरोत्तरस्य पूर्वं पूर्वं प्रत्युत्कर्षहेतुत्वे एकावली। पूर्वस्य पूर्वस्योत्तरोत्तरोत्कर्षनिबन्धने तु मालादीपकमिति। अत्र मालात्वेन चारुत्वोत्कर्षः (सू०५६,पृ०५३०)।

अत्र विमर्शिनीकारः- "अत एवास्य दीपकभेदत्वं न वाच्यम्, औपम्यजीवितं हि तत्। प्राच्यैः पुनरेतद्दीपनमात्रानुगुण्यात् तदनन्तरं लक्षितम्। शृङ्खलात्वेन तु विशिष्टमस्य चारुत्वम्"। (पृ० ५३१) इति।

मालादीपकस्यैकावली प्रभेदोपपादने च मूलमप्पय्यदीक्षितः। यतो हि कुवलयानन्दे— "दीपकैकावलीयोगान्मालादीपकमिष्यते" (पृ०१२६) इति मालादीपकं लक्षयित्वा "सङ्ग्रामाङ्गणमागतेन भवतेति" पद्यमुदाहृत्याह— "शरादीनामुत्तरोत्तरविशेषणभावादेकावलीयोगः" इति। वस्तुतो मम्मटः गुणक्रियादीपके तु प्रस्तुताप्रस्तुतयोरुपमां (गम्यां) स्वीकुरुते परं कारकदीपके उपमां गम्यां नाङ्गीकरोति। तुल्ययोगितायामुपमां गम्यामङ्गीकरोति न दीपके। यतो हि "तुल्ययोगोपमामुपमाभेदतया एव" वर्णितवान् (काव्यादर्शः - द्वि०प०, पृ०९४) तथा हि—

**अधिकेन समीकृत्य हीनमेकक्रियाविधौ।**
**यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा।।**

उदाहरणम्—

**दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान्।**
**असुरास्तेन हन्यन्ते सावलेपास्त्वया नराः।।**

एतेन पृथक् तुल्ययोगितां नैव लक्षयाञ्चक्रे। दीपकं पुनः -

**जातिक्रियागुणद्रव्यवाचिनैकत्र वर्तिना।**
**सर्वकाव्योपकारश्चेत् तमाहुर्दीपकं बुधाः।।**

(काव्यादर्शः, पृ०११२)

इति लक्षयित्वा सर्वानुदाहृत्य च मालादीपकं लक्षयाञ्चक्रे—

**शुक्लः श्रोतार्चिषि वृद्ध्यै पक्षः पञ्चशरस्य सः।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः।।१०७।।**

**इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी।**
**वाक्यमालाप्रयुक्तेति तन्मालादीपकं मतम्।।११८।।**

भरतः—

**नानाधिकरणस्थानां शब्दानां सम्प्रदीपकम्।**
**एकवाक्येन संयोगं तद्दीपकमिहोच्यते।।**

(नाट्यशास्त्रम् १६/५३)

उदाजहार च—

**सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि।**
**गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते।।**

एवं भामहः-

**आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते।**
**एकस्यैव त्र्यवस्थात्वादिति तद्भिद्यते त्रिधा।।**
**अमूनि कुर्वतेऽन्वर्थामस्यारव्यामर्थदीपनात्।।**

(का० २/२५-२६)

उदाहरणं यथा—

**मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम्।**
**स प्रियासङ्गमोत्कण्ठां साऽसह्यां मनसः शुचम्।।** इति।

वस्तुतः पद्यमिदमादिदीपकस्योदाहरणं, मालादीपकं च पृथगनेन न लक्षितम्। परं मीमांसायामिदमेवोदाहरणं मालादीपकस्यापि ज्ञेयम्। पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षाधायकत्वात्।

एवं वामनोद्भटरुद्रटादिभिः सर्वैः दीपकं पृथगेव लक्षितम्। मालादीपकं रुद्रटेन पृथग् न लक्षितं तथापि तदुदाहरणे तद्दृश्यते। तथा हि—

**कान्ता ददाति मदनं मदनः सन्तापमसममनुपशमम्।**
**सन्तापो मरणमहो तथापि शरणं नृणां सैव।।**

इत्यत्र पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षकत्वात्।

शोभाकरमित्रश्च दीपकं लक्षयन्नाह—

''साधारणधर्मस्य सकृदुपादाने प्रस्तुताप्रस्तुतानां मिश्रत्वे दीपकम् अत्रोपमाप्रतिपादक— इवादिशब्दानामभावे आर्थमौपम्यम्''।

(अ०र०, सू०१५, पृ०१६-१७)

उदाहरणं यथा—

**अहो विधात्रा सृजता जगन्ति चत्वारि रत्नानि विनिर्मितानि।**
**राजैष भोजश्च मनोभवश्च शशी च मासः कुसुमाकरश्च।।** इति।

इदमलङ्कारसर्वस्वकृता स्वीकृतम्—

**सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।**
**प्रचक्रमे पल्लवरागताम्रा प्रभापतङ्गस्य मुनेश्च धेनुः।।**

इत्यत्र दीपकं निराकृत्य धेनुवत् पतङ्गप्रभाया अपि प्राकरणिकत्वात् तुल्ययोगितामेव मेने। एवम्—

**आलिङ्गितं शशिमुखीं च सुधां च पातुं**
**कीर्तिं च साधयितुमर्थयितुं च लक्ष्मीम्।**
**त्वद्भक्तिमद्भुतरसां हृदये च कर्तुं**
**मन्दादरं जनमहं पशुमेव मन्ये।।**

अत्र प्रकृताप्रकृतरूपाणां क्रियाणामेककारकसम्बन्धोऽस्त्येवेत्यत्र दीपकम्। प्रकृतानां क्रियाणामेककारकसम्बन्धे यद्यौपम्यप्रतीतिस्तत्तुल्य-योगिता। औपम्यप्रतीत्यभावे समुच्चयालङ्कार इति। अयं मालादीपकं न लक्षयाञ्चक्रे।

अप्पय्यदीक्षितोऽप्याह—

**वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः।**
**मदेन भाति कलभः प्रतापेन महीपतिः।।**

(कुवलयानन्दः १५, पृ०५४)

एतन्मते प्रासादार्थमारोपितो दीप इव रथ्यायामिति दीपसाम्यात् दीपकम्। अत्राप्रस्तुतमुपमानम्, प्रस्तुतमुपमेयमिति। उपमानोपमेयभावो व्यवस्थितः। तुल्ययोगितायान्तु विशेषाग्रहणादैच्छिकः। उभयोरुपमालङ्कारगम्यत्वमिति। एवमावृत्तिदीपकं लक्षयित्वान्ते प्राह—आवृत्तीनां प्रस्तुताप्रस्तुतोभय-विषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः।

विश्वेश्वरपण्डितः—

**''प्रकृताप्रकृतानां यद्येकान्वयिताऽस्ति दीपकं तत्स्यात्''।**
**''यत्रैकमेव कारकमन्वयमेति क्रियासु बह्वीषु''।।**
**''माला तु पूर्वपूर्वे विध्यन्तरेणोत्तरान्वयिनि''।**

(अलङ्कारकौस्तुभः, पृ० २९०-२९४)

इत्यादिना दीपकं कारकदीपकं मालादीपकञ्चेति सर्वमङ्गीकरोति।

एवं सञ्जीवनीकारः—

**''दीपके वास्तवौपम्यं प्रकृताप्रकृताश्रयम्।**
**' आदिमध्यान्तवाक्येषु क्रियाकारकभेदतः''।।**

इत्यादिना लक्षयन् दीपके वास्तवमौपम्यमुपपादयतीति।

इत्थमाचार्यपरम्परावलोकनेन ज्ञायते यत्— मम्मटोक्तिरेवात्र कुशला।

इतः परमलङ्कारेषु मतभेदो नैव लक्ष्यते प्रत्युतानेकत्र पण्डितराजः स्वविषये प्रमाण्याय सादरं मम्मटाचार्यं निदर्शयति। तथा हि—

## दृष्टान्तालङ्कारः

पण्डितराजः प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्तः। इति दृष्टान्तं लक्षयित्वा तत्संवादाय मम्मटाचार्यं प्रस्तौति, तदुक्तम्— **दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्**'' इति। (र०गं०, ३/११३)

## निदर्शनालङ्कारः

पण्डितराजः— **''उपात्तयोरर्थयोरार्थाभेद औपम्यपर्यवसायी निदर्शना''** इति। लक्षणं विधाय दीक्षितमतं निराकृत्य आरोपाध्यवसानमार्गाभ्यां बहिर्भूतः आर्थ एव (न शाब्दः) अभेदो निदर्शनाया जीवातुः, स आर्थोऽभेदश्च कर्त्राद्यभेदप्रतिपादनद्वारा प्रतिपाद्यते'' इत्युपसंहरन् मम्मटभट्टस्य निदर्शनोदाहरणं स्वमतसंवादायोपन्यस्यति—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।** इति।

पुनरस्य समर्थनायाशङ्कते— अत्रोडुपकरणकसागरकर्मकतितीर्षारूपारोपस्य विषयी निर्दिष्टः अल्पमतिकरणकरघुवंशवर्णनेच्छारूपारोपविषयो न निर्दिष्टः। निदर्शनायां विषयविषयिणोरुभयोरुपादानमावश्यकमतोऽत्र निदर्शना नैव सङ्गच्छते। प्रत्युत ललिताऽलङ्कारः ''प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन

निरूप्यमाणोऽप्रकृतव्यवहारसम्बन्धो ललिताऽलङ्कार:''। इति हि तल्लक्षणम्। अत्र अल्पमतिकरणकरघुवंशकर्मकवर्णनेच्छारूपप्रकृतधर्मी नोपात्त उडुपेन सागरं तितीर्षुरित्यप्रकृतव्यवहार उपात्तोऽतो ललितालङ्कार उचित:। (र०गं० ३/१४०) इति। समाधत्ते ललितं निदर्शनयैव गतार्थं नालङ्कारान्तरम्। प्रायशोऽलङ्कारा: श्रौता आर्थाश्च भवन्ति। तत्रार्था: श्रौतेभ्य: पृथग् न गण्यन्ते किं तु पृथग्भेदत्वेन गण्यन्ते। तदलङ्कार: सामान्यलक्षणेन क्रोडीकरणात्। ''व्यवहारद्वयवद् धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाभेद:'' इति वाक्यार्थनिर्दशनास्वरूपम्। तत्र व्यवहारद्वयवद् धर्म्यभेदस्य प्रतिपादनं श्रौतमेवापेक्षितमिति न नियम:, किन्तु प्रतिपादनमात्रम्। एवम्- उपमानोपमेयधर्मयोरभेदाध्यवसायमूल उपमेय उपमानधर्मसम्बन्ध इति पदार्थनिदर्शनास्वरूपम्। ''एतदुभयान्यन्तरत्वम्'' इति निदर्शना— सामान्यलक्षणम्। इत्थं ललितालङ्कारो निदर्शनैव। यदि पृथगलङ्कारतया निर्दिश्यते तदा लुप्तोपमादिरप्युपमात: पृथग् निर्देष्टव्य इति। एवम्- तीतीर्षुर्दुस्तरं मोहाद् इत्यादौ निर्दशना साधु।। (र०गं०, ३/११६-१७) नव्यरीत्या तु ललितस्य निदर्शनात: पृथगलङ्कारत्वं मनोरथललितमेव। इत्थं ललितालङ्कारं लक्षयित्वाऽपि निदर्शनायां तदन्तर्भावोपपादयन् पण्डितराजो मम्मटमनुसरति। अपरत्र च मम्मटं समर्थयति— वसतां कार्यातिथेयीति बोधयन् गृहमेधिन:'' इत्यादौ प्रतीयमानोत्प्रेक्षां नैयायिकरीत्या निर्दिश्याह ''अमुमेवाशयं मनसिकृत्य मम्मटभट्टै: स्वस्वहेत्वन्वयस्योक्ति: इत्यादिलक्षणं निदर्शनान्तरस्य कृत्वा उदाहृते उन्नतं पदमवाप्य यो लघुर्लीलयैव स पतेदिति ध्रुवम्'। इति पद्ये इतिपदोत्तरं बोधयन् इत्यादेरभावादुत्प्रेक्षाया असम्भवे बोधननिर्दशना युक्तेति (र०गं० २/१४६)।

## व्यतिरेकालङ्कार:

मम्मट:— **उपमानाद् यदन्यस्य व्यतिरेक: स एव स:**'' इति व्यतिरेकं लक्षयित्वा तं चतुर्विंशतिधा विभेजे। तथा हि— व्यतिरेकस्य उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षनिमित्तं च द्वे निमित्ते। तयोरुत्कर्षनिमित्तस्यानुक्तौ एक:, अपकर्षनिमित्तस्यानुक्तौ द्वितीय: द्वयोरनुक्तौ तृतीय: इत्युक्तीनां त्रयो भेदा:। द्वयो निर्मित्तयोरुक्तौ एक:, इति चत्वारो भेदा:। तत्र साधारणधर्मस्य शब्देन निवेदिते एक:, अर्थसामर्थ्येन निवेदिते द्वितीय:, व्यञ्जनयाक्षिप्ते तृतीये इति त्रयाणां भेदानां पूर्वोक्तेषु चतुर्षु भेदेषु प्रतिभेदं भेदाद् द्वादश भेदा:। एते द्वादश भेदा: श्लिष्टे शब्दे सति, अश्लिष्टे शब्दे सति च भवन्तीति चतुर्विंशतिधा व्यतिरेक: (का०प्र०, १०/१६०) इति।

पण्डितराजश्च— "उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेक:" इति व्यतिरेकं लक्षयित्वाह- अयं चतुर्विंशतिप्रकार इति प्राञ्च: (र०गं० ३/१५३) अग्रे चारुचिं प्रकटयाम्बभूव- उभयोर्निमित्तयोरुपादाने यद् भेदत्रयं निर्दिष्टम्, तन्न न सम्भवति। वैधर्म्यबोधकशब्दाभावे श्लेष: क्व स्यात्। यदि द्विजसुरालयादिश्लिष्टोपमानोपमेयबोधकशब्देषु श्लेषसद्भाव: कल्प्यते, तदा ते शब्दा एव वैधर्म्यबोधका अपि सम्भवन्तीति निमित्तस्य वैधर्म्यस्यानुपादाने भेदत्रयस्योक्तिरसम्भवप्रसारा एव। "चतुर्विंशतिभेदा:" इति प्राचामुक्तिर्विपुलोदाहरणाभिज्ञैर्यथा कथञ्चिदुपपादनीया" (र०गं० ३/१६२) इत्याह। अपि च उपमाया: सर्वेषां प्रभेदानामत्र सम्भवात् चतुर्विंशतिप्रभेदोपपादनं निरर्थकमेवेति।

**विमर्श:**

वस्तुतोऽत्र पण्डितराजो युक्तमाह। अत एव—

**नित्योदितप्रतापेन त्रियामामीलितप्रभ:।**
**भास्वताऽनेन भूपेन भास्वानेष विनिर्जित:।।**

इत्यत्र प्रदीपकार आह— अत्रैव (निमित्तस्य) "पूर्ववदनुपादानेऽपि भेदत्रयो द्रष्टव्य:" इति। तत्रोद्द्योतकृद् द्रष्टव्य इति प्रतीकमादायाह" अत्रेदं चिन्त्यम्। उपात्तवैधर्म्यांशे श्लेषेणैव व्यतिरेकस्य श्लेषमूलकत्वमुचितम्। न तु यत्र कुत्रापि श्लेषेणेति कृतं भेदत्रयं चिन्त्यमेव" (का०प्र०, उ० १०/५०७ पृ०) इति।

पण्डितराजस्येयं मीमांसाऽतीव सूक्ष्मा। सामान्यरूपेण वक्तुं शक्यते यदुपमानोपमेयवाचकशब्दातिरिक्तानिमित्तभूतवैधर्म्यप्रतिपादकशब्दानुक्तौ श्लेषस्य चोपमानोपमेयप्रतिपादकद्विजादिशब्दे सम्भवाद् भेद उपपादित इति।

**अप्रस्तुतप्रशंसा**

**मम्मट:**

**"अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताऽश्रया"।।** इति।

(का०प्रका १०/१५१)

एवं लक्षयित्वा अप्रस्तुतप्रशंसां पञ्चविधमाह कार्ये प्रस्तुते सति कारणस्याप्रस्तुतस्य वर्णनमेक:, कारणे प्रस्तुते कार्यस्याप्रस्तुतस्य वर्णनं द्वितीय:, सामान्ये प्रस्तुते विशेषस्याप्रस्तुतस्य वर्णनं तृतीय:, विशेषे प्रस्तुते सामान्यस्याप्रस्तुतस्य वर्णनं चतुर्थ:, तुल्ये प्रस्तुते तुल्यस्याप्रस्तुतस्य वर्णनं पञ्चम: प्रकार इति। तत्र तुल्ये प्रस्तुते तुल्यस्याभिधानं त्रिधा सम्पद्यते। श्लेषेण समासोक्त्या, सादृश्यमात्रेण वा। तत्र समासोक्तिहेतुकमप्रस्तुतप्रशंसाया उदाहरणम्—

**येनास्यभ्युदितेन चन्द्र! गमितः क्लान्तिं रवौ तत्र ते**
**युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः।**
**क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाग्**
**अस्त्येवं जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे।।**

(का०प्र० ४४४)

अत्र क्षीणधनः कश्चिदुपजीवनार्थमपकारिणं सधनमनुसरन् केनचिदुपालभ्यते—

हे चन्द्र! उदयं प्राप्तेन येन सूर्येण त्वं तेजोविहीनतां प्रापितोऽसि तस्मिन् सूर्यविषये तव प्रत्यपकरणमेव युक्तम्। पुनः तस्यैव पादग्रहणं न युक्तम्। यदि कलाहीनेन त्वया एतत्कृतं तर्हि पादग्रहणात् हेतोः मनागपि नो लज्जसे। लज्जाशून्यत्वमप्यस्तु। परं यद् व्योम्नि सगर्वमुदेषि तत्तव जडधामता एवं निर्धनपक्षेऽपि ज्ञेयम्। अत्र विशेष्यवाचि चन्द्रपदं न श्लिष्टम्। विशेषणवाचिपदं श्लिष्टम्। तेन निर्धनसधनपुरुषयोर्वृत्तान्तः प्रतीयत इति समासोक्तिः। अतोऽत्र निर्धनपुरुषस्य प्रस्तुतस्य वर्णनप्रस्तावे तत्तुल्यस्याप्रस्तुतस्य क्षीणचन्द्रवृत्तस्य वर्णनाद् अप्रस्तुतप्रशंसाऽलङ्कारः। स च समासोक्तिहेतुक इति।

अत्र पण्डितराजो मीमांसां प्रस्तौति— यत्तु— "येनास्यभ्युदितेन इत्यत्र समासोक्तिरनुग्राहकता मम्मटभट्टैरुपपादिता, तत्र जिज्ञास्यते अत्र विशेषणसाम्यमहिम्ना प्रतीयमानः कापुरुषवृत्तान्तः, प्रस्तुतोऽप्रस्तुतो वा? यदि प्रस्तुतस्तर्हि समासोक्तेर्विषयाभावः, यदि अप्रस्तुतस्तदाप्रस्तुतप्रशंसैव नास्ति। अप्रस्तुतवर्णनेन प्रस्तुतप्रतीतौ तस्याः सत्त्वात्। तस्मात् श्लिष्टविशेषणोपक्षिप्तद्वितीयार्थमात्रं समासोक्तिरित्यभिप्रायेण यथा कथञ्चित् सङ्गतिर्विधेया (र०गं० ३/३३१)।

## विमर्शः

अत्र केनचित् शत्रुणा पराभूतः जीविकार्थं तमेवाश्रयन् कश्चन पुरुषः प्रकृतस्तत्राप्रस्तुतचन्द्रव्यवहारः प्रतीयते। प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपे समासोक्तिर्भवत्यतोऽत्र समासोक्तिच्छायाहेतुकाप्रस्तुतप्रशंसेयमित्यत्रैव मम्मटतात्पर्यमिति शिवम्।

## उपसंहारः

उपसंहृतौ यद्यपि सर्वेषां विषयाणां विवेचनमपेक्षितं परं मया तत्तत्स्थले एव कृतमिति तस्य पुनरत्रोपादानं पुनरुक्तये स्यादिति तत्र तत्र

कृतानां विमर्शानामवलोकनेनैवैतत् स्फुटीभविष्यति। अवशिष्यते चैकं काव्यात्मविवेचनम्—

## काव्यात्मविचारः

मम्मटाचार्यो यद्यपि वाच्यवृत्त्या काव्यात्मानं न निर्दिदेश तथाऽपि काव्यस्वरूपं निर्दिशन् सगुणौ शब्दार्थौ इत्याह। तत्र गुणस्वरूपं निर्दिशन् "ये रसस्याङ्गिनो धर्माः" अङ्गिनो रसस्य ये धर्मा इत्यवोचत्। अलङ्कारं च निरूपयन् ये अङ्गद्वारेण रसमुपकुर्वन्ति तेऽलङ्काराः इत्याह। ततः सिद्धं शब्दार्थौ अङ्गम्, रसः अङ्गीति। दोषं लक्षयन्नपि रसश्च मुख्य इत्याह इति तन्मते रसः काव्यस्यात्मेति।

परं पण्डितराजः वाक्यं रसात्मकं काव्यमिति दर्पणकारमतं निरस्यन्नाह— "वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः" (र०गं० १/२५) एतावता सिद्धं पण्डितराजः रसमेव काव्यात्मत्वेन नाङ्गीकरोति। ततः किं काव्यात्मत्वम्? इति जिज्ञासायां कश्चन लक्षणे रमणीयार्थस्य प्रवेशाद् रमणीयोऽर्थः काव्यात्मेति निरणैषीत्। रमणीयोऽर्थश्च त्रिविधो ध्वनिर्वाच्यो लक्ष्यश्चेत्याह। अतः पण्डितराजमतं रामणीयकमतमस्ति (र०गं०, भू९५७) इति। परं पण्डितराजोऽनेकशः काव्यात्मानं निर्दिदेश। तथा हि— अलङ्कारनिरूपणोपक्रमे" काव्यात्मनो व्यङ्ग्यस्य रमणीयताधायका अलङ्कारा निरूप्यन्ते (र०गं०२ आ०) इति सिद्धं व्यङ्ग्यस्य काव्यात्मत्वम्। अपि च गुणानां रसैकधर्मत्वं निरस्यन्नाह— किं चात्मनो निर्गुणतयात्मरूपरसगुणत्वं माधुर्यादीनामनुपपन्नम्" (र०गं० १/२२४) इति। किञ्चार्थे रमणीयता व्यङ्ग्यार्थसंस्पर्शमन्तरा स्वतो नास्ति "न तादृशोऽस्ति कोऽपि वाच्यार्थो यो मनागनामृष्टप्रतीयमान एव स्वतो रमणीयतामाधातुं प्रभवति"। (र०गं० १/७७) इति सिद्धं व्यङ्ग्यार्थसंस्पर्शं विनाऽर्थे रमणीयताभावाद् रमणीयार्थप्रतिपादकशब्दस्यैव काव्यत्वात् त्रिविधस्य व्यङ्ग्यस्य काव्यात्मत्वम्। पुना रसनिरूपणोपक्रमे आह— एवं पञ्चात्मके ध्वनौ परमरमणीयतया रसध्वनेस्तदात्मा रसः। तावन्निरूप्यते (र.ग. १/८६) इति सिद्धं परम रमणीयो रसः। आत्मा च परमप्रियो रमणीयश्चेति पण्डितराजोऽपि त्रिविधं ध्वनिं काव्यात्मत्वेन स्वीकरोतीति।

इदं पुनर्वक्तव्यम्— पण्डितराजस्योपलभ्यमानेऽस्मिन् ग्रन्थे गुणीभूतव्याङ्ग्यानां भेदाः, अभिधालक्षणावद् व्यञ्जनायास्तात्पर्यवृत्तेर्वा निरूपणं नोपलभ्यन्ते, दोषाः प्रसङ्गतः काव्यसामान्ये वर्जनीयाः, विशेषतो वर्जनीया, रसदोषा, उपमादोषास्तत्र तत्र निबद्धा अपि पदपदांशवाक्यार्थदोषा

लक्षिता नोपलभ्यन्ते। भवेन्नामानुपलभ्यमाने ग्रन्थांशे ते निरूपिताः स्युः। परमुपलभ्यमानोऽपि ग्रन्थो नूतनपदार्थोद्भावनेनातिमहत्त्वपूर्णः। मम तु इत्थं प्रतिभाति मम्मटविवेचितेषु विषयेषु यत्र किञ्चिद् वैशिष्ट्यं तस्यैवोपपादनमकार्षीत् पण्डितराजः। यथा— काव्यकारणकाव्यलक्षणकाव्यभेदरसगुणभाव-रसाभासादीनाम्, अर्थशक्त्युद्भवध्वनिभेदे, शब्दशक्त्युद्भव-वस्तुध्वनिविषये शब्दशक्त्युद्भवालङ्कारध्वनिविषये तदुदाहरणे, अर्थशक्त्युद्भवध्वन्युदाहरणे, अभिधामूललक्षणामूलध्वन्योर्मूलभूताभिधालक्षणयोः, रूपके लक्षणाविषये, अभिधानियामकोदाहरणेषु यत्र यत्र वैशिष्ट्यं तत्तत् सर्वं विविनक्ति।

अलङ्काराणां निरूपणं सूत्ररूपेणैव कृतं मम्मटेन– तद्भेदा अपि सङ्क्षिप्ता एव, तेषां विशदविवेचनमलङ्कारसर्वस्वकाराप्पय्यदीक्षितादिभिः कृतमतः स्फुटप्रतिपत्तये पण्डितराजेनापि स्वप्रखरप्रतिभया विविच्य निःसारं निरस्य सारगर्भितं विशिष्टोपपादनमकारि। यत्र नास्ति किमपि वैशिष्ट्यमुपपादनीयं यथा तात्पर्यव्यञ्जयोर्निरूपणे गुणीभूतव्यङ्ग्यप्रभेदे, दोषेषु, शब्दालङ्कारेषु तत्र काव्यप्रकाशीयमेव स्वीकृत्य किमपि नावोचि।

ध्वनिप्रभेदेष्वपि तेषामेव गणना कृता येषामुदाहरणानि च स्वयं निर्मितानि। इत्थं वक्तुं शक्यते रसगङ्गाधरः काव्यप्रकाशस्य पूरकोऽस्ति। अर्थालङ्कारेषु एकषष्टिमलङ्कारान् मम्मटो न्यरूपयत्, पण्डितराजः सप्ततिमलङ्कारान्। तत्र मम्मटोक्ताः स्वभावोक्तिः, भावितः, उदात्तः, व्याजोक्तिः, सूक्ष्मः, सङ्करः, संसृष्टिश्चेति सप्तालङ्काराः नोपलभ्यन्ते रसगङ्गाधरे। पण्डितराजेन निरूपिताः परिणामोल्लेखोदाहरणासमविचित्रार्थापत्तिविकल्पप्रौढोक्तिललितप्रहर्षण-विषादनोल्लासावज्ञानुज्ञातिरस्कारलेखाः इति षोडशालङ्काराः काव्यप्रकाशे नोपलभ्यन्ते, टीकायां केचन निराकृता अपरेऽन्तर्भाविताः लक्ष्यन्ते।

तत्र मया यत्र वैशिष्ट्यं लब्धं तन्निरूपितमपरे पिष्टपेषणमात्रमिति कृत्वा न स्वकीये निबन्धे निबद्धाः। यद्यलङ्काराणां विशदविवेचनं क्रियेत चेत् निबन्धस्य कलेवरमतिस्थूलं स्यात्। वृत्तिनिरूपणप्रकरणे तात्पर्यव्यञ्जनयोर्निरूपणमन्तरा न्यूनतां सम्भाव्याध्येतॄणामनुसन्धित्सूनां सौकर्याय च प्रसक्त्या कृतम्।

मन्ये निबन्धोऽयं काव्यप्रकाशरसगङ्गाधरयोश्चाध्येतॄणा-मलङ्कारशास्त्रबुभुत्सूनां गवेषकाणां च महते उपकाराय स्यात्। एतत्तु विवेचका एव जानीयुरतो निवेदयामि कविकुलगुरुकालिदासशब्देषु—

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**
**हेम्नः संल्लक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।।** इति।

यद्यप्यत्र भ्रमप्रमादविस्मृतिक्षिप्रकारितादिभिर्मनुजसुलभदोषैस्त्रुटयो न्यूनाधिकता वा दोषाः सम्भवेयुः, तथापि सुमनोभिः क्षन्तव्या इति क्रियासमभिव्याहारेण सम्प्रार्थ्य युक्तमयुक्तं वेदं निबन्धसुमं श्रीभवानीविश्वनाथचरणारविन्दयोः समर्पयामि—

**श्रीमन्मम्मटपण्डितेन्द्रमतयोर्विद्वत्समाराध्ययोः**
**मध्येकाशि समुष्य यत्करुणया जातो विमर्शोऽधुना।**
**सोऽयं साम्प्रतमस्तु तत्रभवतोश्श्रीमद्भवानीशयोः**
**पादाब्जेषु मनोज्ञपङ्कजनिभः प्रीत्यै समभ्यर्चितः।।**



परिशिष्टम्

# सहायकग्रन्थानां सूची


| | ग्रन्थनाम | लेखकनाम |
|---|---|---|
| १. | अग्निपुराणम् | श्रीमहर्षि: वेदव्यास: |
| २. | अलङ्कारसर्वस्वम् | श्रीरुय्यक: |
| ३. | अलङ्काररत्नाकर: | श्रीशोभाकरमित्र: |
| ४. | अमरकोष: | श्रीअमरसिंह: |
| ५. | अलङ्कार शेखर: | श्रीकेशवमिश्र: |
| ६. | अभिधावृत्तिमातृका | श्रीमुकुलभट्ट: |
| ७. | अलङ्कारकौस्तुभ: | श्रीविश्वेश्वर: |
| ८. | काव्यानुशासनम् | श्रीहेमचन्द्र: |
| ९. | काव्यालङ्कारसारसङ्ग्रह: | श्रीउद्भट: |
| १०. | काव्यादर्श: | श्रीदण्डी |
| ११. | काव्यालङ्कारसूत्रम् | श्रीवामन: |
| १२. | काव्यमीमांसा | श्रीराजशेखर: |
| १३. | कुवलयानन्द: अलङ्कारचन्द्रिकासहित: | श्रीअप्पय्यदीक्षित: |
| १४. | काव्यालङ्कार: | श्रीभामह: |
| १५. | काव्यालङ्कार: | श्रीरुद्रट: |
| १६. | काव्यालङ्कार: | श्रीवाग्भट: |
| १७. | काव्यदर्पण: | श्रीअच्युतराय: |
| १८. | काव्यप्रकाश: – प्रदीपोद्द्योतसहित: | श्रीमम्मटभट्ट: |
| १९. | काव्यप्रकाश: – वामनीसहित: | श्री झलकीकर: |
| २०. | काव्यप्रकाश: – विवरणसहित: | श्री गोकुलनाथ: |
| २१. | गुरुमर्मप्रकाश: | श्रीनागेशभट्ट: |
| २२. | चन्द्रालोक: | श्रीजयदेव: |

२३. चित्रमीमांसा — श्रीअप्पय्यदीक्षित:
२४. छान्दोग्योपनिषद्
२५. तत्त्वप्रदीपिका — श्रीचित्सुखाचार्य:
२६. तर्कभाषा — श्रीकेशवमिश्र:
२७. तर्कसङ्ग्रह: — श्रीअन्नंभट्ट:
२८. त्रिवेणिका — श्रीआशाधरभट्ट:
२९. दशरूपकम् — श्रीधनञ्जय:
३०. देवीभागवतम् — महर्षि: वेदव्यास:
३१. ध्वन्यालोक: — श्रीआनन्दवर्धनाचार्य:
३२. नाट्यशास्त्रम् — श्रीभरतमुनि:
३३. न्यायसिद्धान्तमञ्जरी — श्रीजानकीनाथ:
३४. न्यायमञ्जरी — श्रीजयन्तभट्ट:
३५. परिभाषेन्दुशेखर: — श्रीनागेशभट्ट:
३६. प्रकरणपञ्जिका — श्रीशालिकनाथ:
३७. रसगङ्गाधर: गुरुमर्मप्रकाशटीका — श्रीनागेशभट्ट:
३८. रसगङ्गाधर: – सरला — श्रीमथुरानाथ:
३९. रसगङ्गाधर–चन्द्रिका — श्रीबदरीनाथझा
४०. रघुवंशमहाकाव्यम् — महाकवि: कालिदास:
४१. लघुमञ्जूषा — श्रीनागेशभट्ट:
४२. लोचनम् — अभिनवगुप्तपादाचार्य:
४३. वैयाकरणभूषणसार: — श्रीकौण्डभट्ट:
४४. व्यक्तिविवेक: — श्रीमहिमभट्ट:
४५. व्याकरणमहाभाष्यम् — महर्षि: पतञ्जलि:
४६. वाक्यपदीयम् — श्रीभर्तृहरि:
४७. व्युत्पत्तिवाद: — श्रीगदाधरभट्टाचार्य:
४८. वक्रोक्तिजीवितम् — श्रीकुन्तक:

